# आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११६

मारुलकरोपाह्वशंकरशास्त्रिप्रणीतमञ्जरीव्याख्यासंवलिता

# दत्तकमीमांसा ।

सेयं

वे० शा० सं० रा० रा० शंकरशास्त्री मारुलकर

इत्येतैः संशोधिता ।

( वि. वि. देशपाण्डे, एल्. एल्. एम्.

इत्येतत्कृतभूमिकाटिप्पणीभिश्च युता ) ।

एतत्पुस्तकं

बी. ए. इत्युपपदधारिभिः

**विनायक गणेश आपटे**

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ‘ महादेव चिमणाजी आपटे ’ इत्यभिधेय-

महाभागप्रतिष्ठापिते

## आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८६३ ।

खिस्ताब्दाः १९४१ ।

( अस्य सर्वेऽधिकारा राजशासनानुसारेण स्वायत्तीकृताः ) ।




मूल्यं पञ्चाणकयुतं रूपकत्रयम् ( ३-५ ) ।

## आदर्शपुस्तकोल्लेखपत्रिका ।

एतस्या दत्तकमीमांसायाः पुस्तकानि यैः परहितप्रवणस्वान्तैः संस्करणे सहायार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतयोल्लिख्यन्ते—

( क. ) इति संज्ञितम्—वे० शा० आहिताग्नि—बाबादीक्षित होशिंग सोमयाजी, इत्येतेषाम् ( सटीकम् ) ।

( ख. ) इति संज्ञितम्—वे० शा० व्याकरणाचार्य—महेश्वरशास्त्री जोशी इत्येतेषाम् ।

( ग. ) इति संज्ञितम्—पुण्यपत्तनीयसंस्कृतपाठशालापुस्तकालयस्थम् ।

( घ. ) इति संज्ञितम्—श्रीमज्जगद्गुरुशंकराचार्यकरवीरपीठपुस्तकसंग्रहालयस्थम् ( सटीकम् ) ।

( ङ. ) इति संज्ञितम्—वे० शा० पण्डितप्राण—भगवान्शास्त्री घारूरकर इत्येतेषाम् ।

समाप्ताऽऽदर्शपुस्तकोल्लेखपत्रिका ।

## व्याख्याकर्तुः प्रार्थना ।

दत्तकमीमांसाभिधो धर्मशास्त्रीयनिबन्धो विनायकपण्डितापराभिधनन्दपण्डितेन निरमायीति दत्तकमीमांसीयमङ्गलश्लोकादेवावगम्यते । सोऽयं नन्दपण्डितो रामपण्डितात्मजः । अस्य मूलपुरुषो लक्ष्मीधरपण्डितः । सोऽसौ पण्डितोत्तंसो दाक्षिणात्ये जनपदे बेदरनामके नगरे निवसन् सकलविद्वत्कुलललामभूत आश्वलायनकल्पशाखी मुद्गलगोत्रोद्भवो दिल्लीश्वराभ्यर्थनया धर्माधिकारिपदमग्रहीत् । तदाप्रभृत्येव चास्य वंशो धर्माधिकारीति नाम्ना प्रसिद्धिमयासीत् । लक्ष्मीधरपण्डितस्य स्वापेक्षयाऽप्यधिगुणो गोविन्दपण्डिताख्यः पुत्रः काश्यां वस्तुं जगाम । ततः प्रभृति चैतद्धर्माधिकारिकुलं काश्यामद्यावध्यविच्छिन्नमग्रपूजादिसत्कारमनुभवत्सुस्थिरमास्ते । तस्मान्मूलपुरुषात्षष्ठीं वंशपीठिकामलंचकार नन्दपण्डितः । तस्यैतस्य लक्ष्मीधरपण्डितस्य वंशे बहवः पुरुषा ग्रन्थनिर्माणधुरीणाः संबभूवुः । अद्य यावत्समुत्पन्नेषु धर्माधिकारिकुलीयपुरुषेष्वयं नन्दपण्डितः सर्वानप्यतिशेते । तेनानेन नन्दपण्डितेन काशीप्रकाशादिहरिवंशविलासान्ता एकोनविंशतिर्निबन्धाः प्रणायिषतेति श्रूयते । काश्यादिषु मुद्रिता दृश्यन्तेऽपि च । तदन्तर्गतैवेयं दत्तकमीमांसा । सोऽयं महाभागोऽनीव दीर्घायुरासीत् । यतश्चास्य समयः संवत् १६१०–१६९० पर्यन्तमनुमित इतिहासज्ञैः । संवत् १६७९ मध्ये विष्णुस्मृतिटीका केशववैजयन्ती व्यधायि ' तदनन्तरं च दत्तकमीमांसेति ' विशेषान्तरमस्मत्कृतायां विष्णुस्मृतिटीकायां केशववैजयन्त्यामवधेयम् ' ( द० मी० पृ० २७४ ) इति तल्लेखादवसीयते । तदेवमामूलात्पण्डितवंश्यस्यास्य नन्दपण्डितस्य गम्भीरा अर्थगौरवबहुला मीमांसाप्रचुराश्चोक्तयोऽल्पज्ञेन मन्दमतिना तत्राप्यनधीतधर्मशास्त्रेण मया विज्ञातुं सर्वथा अशक्या एवेति निश्चप्रचम् । तथाऽप्येतत्संस्थाधिदैवतसच्चिदानन्दप्रेरणया कार्यनिर्वाहकाणां ( म्यॅनेजर ) 'श्री. रा रा. दत्तोपंत आपटे' इत्येतेषां प्रोत्साहनेन च प्रावर्तिष्यहमेतद्ग्रन्थव्याख्यायाम् । तत्र टीकाकृदहं ग्रन्थकारोऽहमित्येवं विद्वानहमिति प्रदर्शयितुं नायं ममोद्योगः ' किंतु स्वतो ममैवास्य ग्रन्थस्य यथार्थावबोधो भवत्वित्याशयेन प्रवृत्तोऽहम् । बहुषु स्थलेषु मम स्खलितानि जातानीति जानाम्येव । कियत्स्वपि स्थलेषु तत्तद्ग्रन्थार्थस्य याथातथ्येनाऽऽकलनं नैव जातम् । तादृशसाधनाभावादनध्ययनान्मतिमान्द्याच्च । तदेतन्मम साहसं स्खलितावेदनेन क्षन्तुमर्हन्ति दयालवः सज्जना विद्वांस इत्यभ्यर्थयते—

शके १८६३
मार्ग. व. ९ शुक्रवासरे } मारुलकरोपाह्वः शंकरशास्त्री–भारद्वाजः ।

श्रीशंकरः शरणम् ।

# अथ दत्तकमीमांसाभूमिका ।

लेखकः—विनायक विष्णु देशपाण्डे एल्. एल्. एम्.

प्राध्यापकः हिंदुविद्यापीठं काशी

नन्दपण्डितकृता दत्तकमीमांसाऽथ च कुबेरकृता दत्तकचन्द्रिकेत्येतद्धर्मशास्त्रीयं ग्रन्थद्वयं, संस्थास्थप्रधानपण्डितैर्मारुलकरोपाह्वैः शंकरशास्त्रिभिस्तदुपर्यभिनवां कांचन टीकामारचय्याऽऽनन्दाश्रमग्रन्थमालायां निवेशितमिति महदेतत्प्रमोदस्थानमतः शतशो धन्यवादैरानन्दाश्रमाधिकारिणोऽभिनन्द्यन्ते ।

आनन्दाश्रमसंस्थयाऽद्ययावद्वेदवेदान्तव्याकरणमीमांसाज्योतिषस्मृतीतिहासपुराणादिषु परःशता ग्रन्था लघवो महान्तश्च संमुद्य प्राकाश्यं नीताः । तथा धर्मशास्त्रेऽप्यपरार्कव्याख्यास्मृतिसमुच्चयगौतमधर्मसूत्रपुरुषार्थचिन्तामणिप्रायश्चित्तेन्दुशेखरादयोऽनेके ग्रन्थाः प्रसिद्धिमानीताः किल । परंतु दत्तकं समुद्दिश्य प्रवृत्तस्यास्य निरुक्तग्रन्थद्वयस्येदानींतने काले किमप्यन्यादृशमिव महत्त्वं संप्राप्तम् । वैदिकधर्मानुयायिजनताया आचारेषु दृष्टौ प्रहितायामद्येत्थं दृग्गोचरी भवति यद्धर्मसापेक्षयोरप्यर्थकामयोः पुरुषार्थयोर्धर्मनिरपेक्षतयैव तत्रापि वैयक्तिकयोरेव न पुनः सामाजिकयोः संपादने प्रवृत्तिस्तेन च केवलं लौकिकव्यवहारोपयोगिनो धर्मान्ज्ञात्वा तावतामेव परिपालनेऽधिकाधिकं प्रवृत्तिरित्येवमुभयविधायां प्रवृत्तौ महांस्तदभिनिवेश इति । तदनुसारेण जीवनकलहमयेऽस्मिन्कलिकाल आचारधर्माणां महत्त्वं नष्टप्रायं भूत्वा सोऽद्य विषयः केवलं व्यवहारप्रधानः संजातोऽस्ति । अपुत्रवता पुरुषेण धर्माज्ञामनुसृत्य पुत्रपरिग्रहकरणमावश्यकमित्येवं कल्पनायाः प्रायो लोप एव समजनि । नैतावदेव, किंतु तादृशेन पुरुषेण पुत्रपरिग्रहेऽक्रियमाणेऽपि नैव तं प्रति लोकव्यवहारसरणौ कश्चनेषदपि प्रत्यवायः सामाजिकैरुद्घोष्यते । परं दत्तकपरिग्रहानन्तरं प्रतिग्रहीतृपितुः स्थावरादिधनहारित्वे दत्तकोऽथ च निपुत्रिकस्योत्तराधिकारिण इत्युभयेषां मध्ये विवादाः स्वात्मानमासादयन्ति । तन्निर्णयाय च दत्तकादयः साटोपं राजद्वारमनुधावन्ति । तत्र चर्चां कृत्वाऽपि महता प्रय-

व्ययेन चिराय कलहायन्ते । एतादृशो विवादाः सांप्रतं न्यायमन्दिरेषु नित्यं शतशः प्रचाल्यमानाः संदृश्यन्ते ।

तत्र दत्तकस्य ग्राह्याग्राह्यत्वं युक्तायुक्तत्वं दानप्रतिग्रहाधिकारित्वमवश्यं कर्तव्या विधयश्चेत्येवमादिषूद्देशेषु बाह्याभ्यन्तरङ्गविचारप्रचुरमूहापोहं कृत्वा निर्णयदानसमये धर्मशास्त्रोक्तदत्तकविषयकनियमानां साहाय्यमवश्यग्राह्यं भवति गृह्यते च । कलिकालमाहात्म्यात्त्वैहिकव्यवहारोपयोगिबाह्यार्थप्राधान्योपरक्तत्वात्कस्यापि मनुजस्य दृष्टिर्धर्मशास्त्रीयामुष्मिकव्यवहारोपयोग्यन्तरङ्गार्थस्य प्रायः पराङ्मुख्येव । अतः कारणात्केवलार्थकामप्रयुक्तानां पुरुषप्रवृत्तीनां प्रतिबन्धका अत एवात्यन्तमावश्यका ये धार्मिकाचारास्तेषु न कस्यापि दृष्टिः प्रसरति । तेनास्य भगवतो धर्मस्याद्य यथार्थं स्वरूपं विनश्य भीषणं विकृतस्वरूपं प्राप्तमभूत् । एवमेव सर्वेषामपि धार्मिकाचाराणां परिस्थितिरनुकम्पनीया समजनीति तस्यैवायमनर्थोदर्कः परिणामो यत्सर्वत्र महाञ्जीवनकलहः प्रसृत इति मन्ये ।

अतीव बहोः पुरातनकालादारभ्य प्रसृतोच्चसंस्कृतिर्यैर्महात्मभिः परां कोटिमधिरोप्यास्मिन् भारते वर्षे दृढमूलं कृता, ते दिव्यदृष्टयस्त्रिकालज्ञा ऋषय आसन् । तैरेव च महात्मभिर्जगतो मूलभूतस्य सत्यवस्तुनो ज्ञानेनार्थकाममोक्षाणां संपादने मानवीयजीवितक्रमं प्रति कांचनाऽऽचारपद्धतिं योजयित्वा तस्याः कतिपये नियमा अपि सुनिश्चिता अकारिषत । सेयमाचारपद्धतिरनेकभेदभिन्नाऽपि व्यवस्थयैव चातुर्वर्ण्यचातुराश्रम्यादिमानवीयायुष्यक्रमसंबन्धिनीनां भिन्नभिन्नावस्थानां मातेव हितकारिणी भवति नान्यथा । इयमेव धार्मिकाचारशब्दसंवेद्या यस्याः सकाशाद्विवाहाद्यनेकाः संस्थाः प्रावर्तिषत । तदन्तर्गतैवेयमेका दत्तकसंस्था नाम । नैकाऽपि संस्था तादृशी लक्ष्यते यन्मूले शान्ततासमवस्थितिहेतुः श्रीमान् धर्मोऽकृताधिष्ठानः स्यात् । धर्मशास्त्रीयस्वेतरविषयकनियमवद्दत्तकसंबन्धिनियमेष्वपि ये केचन नियमास्तादृशः स्युर्येषामपरिपालने न केवलमदृष्टफलानुत्पत्तिः किंतु प्रत्यवायोत्पत्तिरपि ते मुख्या महत्त्ववन्तः सन्तस्तदितरे दृष्टादृष्टफलजनका वा दृष्टफलजनका वाऽदृष्टफलजनका वा तदनुषङ्गेणाऽऽयाताः स्युः । एवंप्रकारैः सर्वैनियमैर्मिलित्वा निष्पन्नया कयाचिच्चतुष्पाटिकया चतुर्ष्वपि पार्श्वेषु नियन्त्रितैतादृशी दत्तकसंस्था धर्मशास्त्रस्याभिप्रेता ।

परं निर्णयदातृनिर्णयप्रार्थीत्येतेषामुभयेषामप्यदृष्टफलदायिनियमेष्वत्यन्तमनादृ-राद्धर्मशास्त्रनिर्मिता दत्तकसंस्थाऽद्य पूर्णतया स्वभङ्गमनुभवति । ततश्च केवलव्यवहारपक्षपाताक्रान्तदृष्टिभिः कल्प्यमाना व्यवहारसरण्यां साक्षात्क्रियमाणेयं दत्तकसंस्था धर्मशास्त्रप्रणीतदत्तकसंस्थां लेशतोऽपि नानुकरोति । प्रत्युत दत्तकतत्परिग्रहीतृदायादेषु वैरस्याधानेन दुरन्ता सती काचन भीषणाकृतिः कलहमयी पुत्तलीव संवृत्ता दृश्यते । अत एव धार्मिकाचारेषु सर्वथा मा भूदियं दत्तकसंस्थेति महताऽऽवेगेन प्रतिपादयन्संप्रत्येको जनसमाजो दृग्गोचरी भवति । अर्थादस्य समाजस्य दत्तकसंस्थानिर्मितौ धर्मशास्त्रस्य के के हेतवः सन्ति दत्तकस्वीकारेण च मानवजातीयानामैहिकामुष्मिकहितं कथं सिध्यतीत्यादेः सर्वात्मना विस्मृतिर्जातेत्यनुमीयते । एतादृश्यां परिस्थितौ सत्यां दत्तकविषये धर्मशास्त्रस्य मूलोद्देशाः के कति च विद्यन्ते ते च हेतवः शास्त्रीयनियमानुसारेण दत्तके स्वीकृते कथं सिद्धा भवन्ति, सांप्रतिकदत्तकसंस्थायां दत्तकसंबन्धिनः के के नियमाः प्राधान्येनाऽऽदृताः, के के च परित्यक्ता लौकिकदत्तकसंस्थायां स्वीकृतनियमानां मध्ये च कियन्तो नियमाः शास्त्रीयोद्देशसंपादने प्रभवेयुः कियन्तश्च विपरीतार्थान् प्रोत्साहयेयुरित्यादिविषयाणां विवेचनं तद्यथार्थस्वरूपावबोधमन्तरेण कर्तुमशक्यमित्यभिनवव्याख्यासंवलितस्य दत्तकमुद्दिश्यैव प्रवृत्तस्य निरुक्तग्रन्थद्वयस्य मुद्रणेन प्रकाशनरूपोऽयमानन्दाश्रमाधिकारिणामुपक्रमः सर्वथैव प्रशंसनीय इति सानन्दं शिरआन्दोलनेन को हि नाम प्रेक्षाकारी नाभिनन्देत् ।

आधुनिके राज्यव्यवस्थाशास्त्रे राजकीयशासनशास्त्रे च कस्यापि कर्मणः प्रसङ्गस्य वा युक्तायुक्तत्वनिर्णयार्थं तत्तच्छास्त्रप्रोक्तसाधकबाधकसर्वनिर्बंधानां सर्वांशेन सूक्ष्मदृशा पर्यवेक्षणमत्यावश्यकमित्येवं तत्त्वं वादिप्रतिवादिभिः सर्वैरपि मान्यतयाऽङ्गीकृतम् । तदनुसृत्यैव च न्यायमन्दिरेषूपस्थितप्रश्नानां निर्णयः क्रियते । एतदेवोदाहरणप्रदर्शनेनाधिकतरं विशदी क्रियते—

कोऽप्येको ब्राह्मणजातीयः संस्तस्यैक एवौरसः पुत्रो वर्तते । स च म्लेच्छसंसर्गदोषेण पातित्यं प्राप्तः । ईदृश्यां परिस्थितौ स्वीयदैवपित्र्यकार्यस्य व्यवस्थिततया संपत्त्यर्थं तेन ब्राह्मणेन पुत्रप्रतिनिधिः कार्य इत्येवं धर्मशास्त्रेणाऽऽज्ञाप्यते । तथैव धर्मशास्त्रस्यापरः कश्चनैको नियमोऽस्ति यन्महापातकपतितस्य घटस्फोटं कृत्वा स्वकुलेन सह तत्संबन्धः सर्वप्रकारकः सर्वात्मना नाश्यतामिति । अस्मिन् प्रसङ्गे यद्यसौ ब्राह्मणो धर्माज्ञामनुसृत्य वर्तेताथ च पतित-

पुत्रस्य घटस्फोटं कृत्वा तत्स्थानेऽपरं पुत्रं दत्तकत्वेन स्वी कुर्यात्तर्हि स दत्तकपुत्र एव तद्रिक्थाद्यधिकारी तदुत्तरकार्याधिकारी च भवितुमर्हति । तथाऽपि १८५० मितख्रिस्ताब्दीय ( २१ ) एकविंशतिक्रमाङ्कितराजशासनानुसारेण पतितपुत्रस्य दायहरणाधिकारित्वं नैव नश्यतीति न्यायमन्दिरेष्वास्मिन् प्रश्ने समुपस्थिते न्यायाध्यक्षेण दत्तकं पश्चादपसार्य पतितौरसपुत्रस्यैव तत्पितृधनाधिकारित्वं निर्णेतव्यं भवति । यद्यप्यस्य दत्तकविधिकर्मणो युक्तायुक्तत्वं धर्मशास्त्रे प्रणीतानि साधकबाधकादिसर्ववचनानि विचारे गृहीत्वैव निश्चेतुमुचितं तथाऽपि निरुक्तसनीयैकविंशतिक्रमाङ्कस्थो दण्डको धर्मशास्त्रीयनियमांस्तावतांऽशेन बाधत इति तादृशा धर्मनियमास्तावत्यंशे दृष्टिपथादपसार्या भवन्ति । तथा करणं च यस्मिन्नेकस्मिन्देशविशेषे यैर्हेतुभी राजशासनानि प्रसृतानि क्रियन्ते तद्धेतूनां सिद्ध्यर्थमावश्यकमेव । अनेनैव न्यायेन यस्मिन् देशे विवादास्पदप्रश्नस्य धर्मशास्त्रानुसारेण निर्णयकरणे प्रतिबन्धो नास्ति प्रत्युत यानि विवादस्थलानि हिन्दुधर्मशास्त्रानुसारेणैव निर्णयार्हाणि तादृशस्थलेष्वपि यैः कैर्हेतुभिः कृत्वा हिन्दुधर्मशासनानि प्रवृत्तानि तद्धेतूनां सिद्ध्यर्थं विरुद्धत्वात्तथा कर्तुमुचितान्यपि राजशासनानि दृष्टिपथातीतानि कर्तुं नोत्सहन्ते केऽपीति महदाश्चर्यम् ।

हिन्द्वितरजनसमाजेन धर्मशास्त्रस्य मूलभूतान्हेतून्मनस्यनानीय स्वशासनसंस्था निर्मिता चेत्तत्क्षम्यकोटिप्रविष्टं भवेत् । किंत्वद्य ये बहोः कालादखण्डितपरम्परया वैदिकधर्मानुसारिणः सन्ति येषां समाजस्य च धर्मशास्त्रानुसारेणैव जनी रचना च समभूत्, ये चाद्याप्यात्मनि स्वीयवैदिकधर्मानुयायित्वाभिमानं साग्रहं धारयन्त्येतादृशैः पुरुषधौरेयैरुपेक्षितधर्मशास्त्रीयमूलहेतुकायाः शासनसंस्थाया अपेक्षीकरणमनर्थोदर्कत्वात्सर्वथाऽनुचितमेव । तस्माद्यथाऽद्यतनकालीयः कश्चिन्नागरिकस्तद्देशीयां सर्वोच्चां शासनसंस्थामेकनिष्ठतयाऽऽश्रित्य भिन्नभिन्नानि शासनानि यावच्छक्यं परिपालयति तद्वद्वैदिकधर्मानुयायित्वाभिमानं वहता पुरुषेण वेदशास्त्राण्येकनिष्ठतयाऽवलम्ब्य धर्मशास्त्रप्रोक्तनियमानां सामस्त्येन परिपालनकरणमत्यन्तावश्यकमस्ति । यः कामतो निषिद्धमाचरति सोऽसौ वैदिकधर्मानुयायिपदं किं बहुना हिन्दुरिति नामापि धारयितुं नार्हेत् । यतो यः स्वजनुषा सहैव सनातनधर्मानुयायित्वेनाऽऽक्रान्तस्तस्य गले तादृशनियमपरिपालनावश्यकत्वं तेन सहैव पतितं तस्मान्न कदाऽपि स मोक्तुं शक्नुयात् ।

धार्मिकनियमानां यथावत्परिपालनं शक्यसंभवं भवत्वित्येतदर्थं शास्त्रेण

योगायपरिपाटी नियोजिता सा, मानवानां स्वाभाविकीः सकलप्रवृत्तीः साङ्गोपाङ्गं सूक्ष्मेक्षिकया विचार्यैव निश्चितेति स्वयं पूर्णैव । न सांप्रतिकशासनसरणिरिवैकाङ्गिनाऽपूर्णा वा । नागरिकैः राजशासितनियमानुबद्धमेव वर्तितव्यमिति हेतोस्तेषां मनसि दण्डादिना भयमुत्पाद्यते । तेन ते राजशासनानुसारेणैव व्यवहारसरण्यां व्यवहरन्ति । सनातनधर्मानुयायी तु कर्माचरणसमये न केवलं राजभयमेवैकं चिन्तयत्यपि तु सामाजिकबहिष्कारभयं प्रत्यवायभयं परलोकभयमित्यादिकमपि चिन्तयति । यतः पारत्रिकादिभयकल्पनाः शान्तताप्रियस्य तस्य मनसि जन्मत एव प्ररूढाः सन्ति । अथ च राजभयापेक्षयाऽप्यधिकं ताः प्रबलाः प्रतीयन्ते । अत एव म्लेच्छादिसकाशात्प्राणहानौ समुपस्थितायामपि न स्वधर्मपरित्यागं सहसैव चिकीर्षति । एतादृशीः स्वाभाविकीर्लोकानां भयप्रवृत्तीर्वीक्ष्यैव शास्त्रकारैर्धर्मनियमानां पृथक्पृथग्विभागा अकारिषत । राजशासितनियमानामेकं पृथक्खण्डं कृत्वा तस्य व्यवहारविभाग इति नाम कृतम् । तथा समाजशासितनियमानां यमधर्मशासितनियमानां च मिलित्वाऽन्यमेकं विभागं परिकल्प्यासौ प्रायश्चित्तविभागनाम्ना व्यवहृतः । एतदपेक्षयाऽप्यन्ये, येषां चित्तशुद्धिर्भूत्वा ये साधकस्थितिं प्राप्ताः, अर्थाद्ये विधिनिषेधातीतत्वं गतास्तादृशां कृते गुर्वाज्ञाशासितनियमानामेको गणस्तैर्व्यवस्थापितः । सैवेयं व्यवस्थाऽग्रिमश्लोके वर्णिता—

गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ इति ।

अत्रायं विस्तरशः प्रतिपादने हेतुः समुज्जृम्भते । वैदिकधर्मरचनानिर्मापकैर्मानवानां स्वाभाविकीः प्रवृत्तीः सूक्ष्मेक्षिकयाऽऽकलय्य तदनुसारेण धार्मिकनियमनिर्मितिरकारि । यथेदं तद्वद्यदि पारत्रिकादिभीतीनां वस्तुतोऽस्तित्वे प्रामाणिकं शिक्षणं संघटित—शान्तताप्रियमानवसमाजे व्यवस्थितपद्धत्या मूलत एव दत्तं चेत्तर्ह्यस्मिन् मानवसमाजे धर्मशास्त्रप्रणीतसर्वनियमानां परिपालनं साहजिकतयैव भवितुं शक्यमितीदमपि तैराकलितमभूदिति । अत एव धार्मिकाचरान् यथाशास्त्रमपरिपालयन्तं प्रति राजदण्डबहिष्कारनिरयनीचयोनिपुनर्जन्मेत्येवं दुरन्ताः परिणामा वैदिकधर्ममध्येऽनुशिष्टाः । कामतः पातककर्तारोऽथ चाकामतः पातककारिण इत्येवं द्वैधं कृत्वा भिन्नभिन्नवर्गान्तःपातिनां पातकिनां पृथक्पृथग्दण्डनानि प्रायश्चित्तानि च व्यवस्थापितानि । तत्सहैव च

मानवानां स्वाभाविकप्रवृत्तीरनुसृत्य शान्ततयोन्नतिप्रिये समाजे जन्मनः प्रभृत्येव धर्मनियमपरिपालनात्मकं बालकट्टेव सततं मिलितं स्यादथ चाधर्ममाचरत इहपरलोकयोः सर्वथा हानिर्निश्चितैवेति दृढश्रद्धोत्पद्येतेत्येवमात्मकशिक्षणलाभव्यवस्थाऽपि धर्मशास्त्रे कृताऽस्ति ।

एवं धर्मशास्त्रप्रणीतनियमानां परिपालनं मानवसमाजस्य कैर्मार्गैः शक्यं स्यात्तन्मीमांसित्वा तदनन्तरं धर्मशास्त्राङ्गभूता नियमाः किंविधान् हेतूनुद्दिश्याऽऽरचिताः सन्त्यथ च तेषां परिपालनं वैदिकधर्मानुयायिनां हिन्दूनां कथमत्यन्तावश्यकमित्येवमवसरप्राप्तत्वाद्विचार्यते—

आधुनिकसमाजव्यवस्थाशास्त्रे तत्तत्समाजमात्रपर्याप्तया शान्ततयाऽवस्थितस्य तस्य तस्य समाजस्य सर्वाङ्गीणैहिकोन्नतिः कथं सिध्येदिति ध्येयं लक्ष्यीकृत्य राजशासनानि प्रणीयन्ते । भगवतो धर्मस्य तु ध्येयं न केवलमैहिकोन्नतिमात्रावलम्बीत्येवं संकुचितम्, अपि त्वमुत्रापि मानवः सुखेन समृध्यताम्, उत्तरोत्तरं च श्रेयस्यां योनौ जन्मनैधताम्, अनुक्रमेणान्ते कैवल्याधिकारी च संपद्यतामित्येवं विशालं धर्मस्य ध्येयम् । अतस्तादृशध्येयानुकूला ये वेदप्रणीता धर्मास्ते शास्त्रे गुम्फनमनुभाविताः । धर्मशास्त्र ऐहिकामुष्मिकसुखसंपादकौ द्वौ पन्थानाविति न प्रदर्श्य ये नियमा मानवस्याऽऽमुत्रिककल्याणार्थत्वेन निरूपितास्तेषामेव नियमानां सम्यक्परिपालनेन मानवस्यैहिकहितमपि साध्यं भवितुमर्हतीति धर्मशास्त्रस्य दृढः सिद्धान्तः ।

न केवलं जगतीतलवर्तिनां मानवानामेवापि तु सर्वस्या एव चराचरसृष्टेः संरक्षणं संवर्धनं च धर्मस्य परमोच्चं ध्येयमिति भगवता मनुना वेदार्थमनुसृत्य धर्मशास्त्रोपनिबन्धनकरणवेलायामुपक्रम एवाभिहितम्——

सर्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः ।
मुखबाहूरुपज्जानां पृथक्कर्माण्यकल्पयत् ॥ ( मनु. १ । ८७ ) ।

लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् ॥ (मनु. १ । ३१ ) ।

उपसंहारे च——

बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् ।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ (मनु. १२।९९) ।

एवं स भगवान्देवो लोकानां हितकाम्यया ।

धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान् ॥ ( मनु. १२ । ११७ ) इति ।

एताभ्यामुपक्रमोपसंहाराभ्यां सर्वसर्गस्य—परमेष्ठिनिर्मितचराचरसृष्टेः संरक्षणं भूर्भुवरादिलोकानां संवर्धनं च धर्मशास्त्राभिमेतमिति स्पष्टमेवावगम्यते। ततश्च सर्व एव चराचरसर्गः सर्वेषां साम्येन कल्याणोदर्के एकस्मिन् धर्मे सूत्रे मणिगण इव निगडित इति कलहकारणाभावात्सर्वत्र शान्तैव निरपवादमवस्थिता भवति धर्मशासनेषु । युज्यते चेदम् । सर्वत्र समबुद्धिभिर्दिव्यदृष्टिभिस्त्रिकालज्ञैरत एवासंकुचितध्येयैर्ऋषिभिः प्रणीतत्वाद्धर्मशास्त्रस्येति । अन्यत्र तु तत्तद्विशिष्टसमाजे कलहकारणाभावाच्छान्ततायाः अवस्थितावपि समाजान्तरेषु परस्परं श्रेष्ठकनिष्ठस्थितितारतम्यसत्त्वेन निरपवादशान्ततासमवस्थितिबीजाभावात्कलहाः संभाव्यन्ते। समाजव्यवस्थाशास्त्रस्य तारतम्येनैहिकोन्नतिकारकत्वात् । ऐहिकोन्नतेस्तत्तत्समाजमात्रपर्याप्तत्वेन समाजतारतम्यप्रयुक्तमैहिकोन्नतितारतम्यं, समाजतारतम्यं च संबन्धतारतम्यप्रयुक्तं, संबन्धतारतम्यं च वर्णभाषादेशादितारतम्यप्रयुक्तमित्येवं तारतम्यमविनाकृत्यैव समाजव्यवस्थाशास्त्राणां प्रवृत्तत्वात् । अयमेव च धर्मशासनसमाजव्यस्थाशासनेषु परस्परं महान् भेदः ।

यद्यपि धर्मशासनान्यपि ब्राह्मणत्वादिं भिन्नां भिन्नां जातिं व्यपाश्रित्यैव प्रवृत्तानीति तत्राप्यशान्ततावीजं तारतम्यं दुर्वारमेवेति चेन्न । धर्मशास्त्र उपायभेदेऽपि फलभेदाभावात् । तथा हि—धर्मशासनानां हि मुख्यं प्रयोजनमामुष्मिकोन्नतिः । सा च स्वर्गादिरूपा सर्वेषां तुल्यैव । तत्प्राप्त्युपायाः परं भिद्यन्ते । नह्युपायभेदेन फलभेदो दृष्टचरः श्रुतचरो वा। यथा लोके कश्चिद्धिरोहिणीमारुह्योच्चस्थं पक्वममृतफलं गृह्णीयात्। कश्चिच्चोड्डीय तद्गृह्णीयात्। नह्यत्रोड्डानारोहणयोरुपाययोर्भेदेऽप्यमृतफलप्राप्तेर्भेदो भवति तद्वदिति बोध्यम् । ऐहिकोन्नतिरपि पुत्रमित्रकलत्रसंपत्त्यादिरूपा समानैव । नहि ब्राह्मण एव पुत्रमित्रादिमान् न वैश्यो न वा शूद्र इति वक्तुं केनापि पार्येत । अथापि कथंचिद्भिद्यत एवेति दुराग्रहश्चेत्तस्या आनुषङ्गिकत्वेनानित्यत्वादप्राधान्याच्च तद्विषयेऽनादरात् । उत्कृष्टवस्तुप्राप्तिसंभावनायां तदपेक्षया निकृष्टवस्तुसंपादनेऽप्रयत्नस्य लोकसिद्धत्वादिति भावः ।

तस्यास्य सनातनधर्मस्यैव विश्वव्यापि ध्येयं कुक्षौ कृत्वा सर्वमानवेषु शान्तता-

वस्थितिर्भूत्वा तेषां समुन्नतिः संपद्यतामित्येतद्विषये यदीतरे मानवसमाजाः प्रयतेरं-स्तर्हि तेषां सनातनधर्मव्यवस्थामन्तरेण केवान्या व्यवस्था स्वीकरणीया स्यात् । ततश्च क्रोधमदमत्सरादिकलहबीजनिर्मूलनपुरःसरं प्रत्येकव्यक्तिगतानां भूतदयादाक्षिण्यादीनां स्वाभाविकगुणानां विकसनेन यावन्मानवसमाजे परिपूर्णतया शान्ततावस्थापको धर्मः क इति पृष्टे भगवान् सनातनधर्म एवाङ्गुल्या निर्देश्यः स्यान्नान्यः ।

मदमत्सरादिदोषाणां निर्मूलनं बीजशुद्धिसंस्कारशुद्धी विना न सिध्यतीति भगवत्या श्रुत्या सनातनधर्मानुयायिन उद्दिश्य त्रिविधर्णापाकरणो नित्यो विधिरभिहितः—

'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री, यज्वा, ब्रह्मचारिवासी' (तै० सं० ६ । ३ । १०—५) इति । अस्मिन् विधिवाक्ये यद्यपि ब्राह्मणशब्दो निर्दिष्टस्तथाऽप्ययं विधिर्ब्राह्मणेतरान् क्षत्रियवैश्यादीनपि नियमयति । अत्र ब्रह्मचर्यपालनं यज्ञधर्मपालनं प्रजोत्पादनं चेति त्रयो विधय उक्ताः । तत्र ब्रह्मचर्यपालनं नाम नीरोगतासंपत्तिद्वारा स्वशरीरे विहितकर्माचरणक्षमसामर्थ्यसंपादनम् । यज्ञधर्मपालनं नाम धर्मशास्त्रेण स्वं प्रति विहितस्य कर्मणो यावज्जीवं कर्तव्यबुद्ध्याऽऽचरणम् । प्रजोत्पादनं च देवपितृऋणापाकरणार्थमौरसपुत्रोत्पादनमिति ।

तत्रैतद्ग्रन्थप्रकरणोपयुक्तत्वाद्विधित्रयान्तर्गततृतीयविधिवाक्यविचार एव नः कर्तव्यो भवतीति तदर्थं किंचिदुच्यते । सृष्टेर्धारणार्थं धातृकल्पितसंसारसंबन्धिसर्वकार्याणां यथापूर्वं सातत्येन प्रवृत्तिरावश्यकीति तदर्थं प्रजोत्पत्तिविधेर्यथाशास्त्रं परिपालनमपि प्रत्येकमवश्यकर्तव्यतयाऽऽपतितम् । सृष्टिघटकानां निखिलप्राणिसंघानामुत्पत्तेः किंचित्कार्यमनुलक्ष्यैव कृतत्वात् । तत्र सुसंस्कृतमानवोत्पत्तिरेवाभ्यधिकं धर्मसंधारणादिकार्योपयोगिनीति सर्वमानवानुद्दिश्य विवाहसंबन्धिनो विवाहकालसंबन्धिनः कन्याया प्राप्तप्रौढत्वसंबन्धिनोऽपत्योत्पादनसंबन्धिनश्चेत्येवमादयोऽनेकविधा विधयो वेदानुसारिणा शास्त्रेणाभिहिताः । तेषां विधीनां परिपालनं शास्त्रवर्णितप्रकारेणातीव सुसंगतं यदि मानवैः क्रियेत तदा यः पुत्र उत्पद्येत स केवलमानुवंशिकगुणमयो पितुस्वरूपविशेष एवेत्यत्र संदेहः कार्यः ।

आधुनिकसंशोधनप्रमाणेनेत्थं सिद्धमभूद्यत्पितुः शरीरे यादृशप्रधानगुणान्-धारयन्तो जीवगोलका भवन्ति साक्षात्तानेव गुणान् धारयन्तो जीवगो-लकाः पुत्रशरीरे निवसन्ति । अथ च तेषु वंशानुवंशपरम्परयाऽतिदीर्घयाऽपि तारतम्यमीषदपि दृष्टोत्पत्तिं नाऽऽयातीति । सोऽयमर्थः प्राचीनशास्त्रकाराणामपि पूर्णतयाऽवगत आसीत् ।

'आत्मा वै पुत्रनामाऽसि' ( श्रुतिः )

पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥ ( बह्वृचब्राह्मणम् )
पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते ।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥ (म. स्मृ.८।९)

इत्येवमादिश्रुतिस्मृत्यादिषु निरुक्तार्थस्यैवानुभाषणात् । यैर्गुणैर्युक्तं बीजं भवति तैरेव गुणैर्युक्ता प्रजा कस्मिन्नपि क्षेत्र उत्पद्यत इतीदमप्यग्रिमप्रनुवचनयोर्वर्णितं दृश्यते—

बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते ।
सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥ ( म. स्मृ. ९ । ३५ )
यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते ।
तादृग्रोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितं गुणैः ॥ (म.स्मृ. ९।३६) इति ।

तस्मात्सुसंस्कृते क्षेत्रे तिलमात्रेणाप्यन्यूनानतिरिक्तत्वभाजा शास्त्रोपदिष्टमार्गेण पुत्रोत्पत्तिर्भाविता चेन्मन्दोष्णे पयसि शर्करासंयोग इव भवेत् ।

एवं शास्त्रोद्दिष्टमार्गेण नैयमिकपुत्रोत्पादनानन्तरं सोऽयं पुत्रोऽधिकादप्य-धिकं समाजकार्यं संपादयितुं प्रभवत्वित्येतदर्थं जन्मप्रभृत्येव योग्यसंस्कारकर-णयोग्यशिक्षणदानादेः शास्त्रे विधयोऽभ्यधायिषत । इत्येवं सर्वपार्श्वतश्चिन्ताया-मूढायां सत्यां ते पुत्राः स्वपितुर्वृद्धावस्थायामथवा मरणावस्थायामपि पितृकर्तृ-कसृष्टिसंधारणादीनि कार्याण्यभ्यधिकत्वेनापि प्रवर्तयितुं प्रभवेयुरिति किम-त्राऽऽश्चर्यम् । नैतावदेवापि तु वंशानुवंशपरम्परयाऽविच्छिन्नं तादृशकार्यसंपा-दनाभ्यासवशाद्गुणानां विकासो भूत्वाऽधिककौशल्येन सामाजिककार्यकरणा-त्समाधानं लभ्यते । तेन च तादृशव्यक्तिघटितसमाजस्य संघटनं भूत्वाऽन्ते शान्ततायां तत्पर्यवसानं भवति । अयमेवार्थो भगवता मनुनाऽन्योद्देशेनाग्रिम-श्लोकेऽभ्यधायि—

यथा यथा निषेवन्ते विषयान्विषयात्मकाः ।
तथा तथा कुशलता तेषां तेषूपजायते ॥ (१२ । ७३) इति ।

एतावता विवेचनेन समाजरचनासंरक्षणं भूत्वा धर्मशास्त्रोद्दिष्टस्वेतरप्रधान-हेतुसिद्ध्यर्थं तदिदं पुत्रस्थानं नाम मानवानां जीवनकर्मेऽतिशयमहत्त्वविशिष्टमित्यवगतं भवेत् । प्रजोत्पादनविधेर्वंशानुवंशमविच्छेदेन परिपालनात्मके कर्तव्ये संपादिते तैरतैर्मानवरूंवैरमरपदमिव लब्धमित्येव वक्तव्यं स्यात् । इमामेव कल्पनां 'प्रजाभिरग्ने अमृतत्वमश्याम्' इति श्रुतिः स्वस्मिञ्जग्रन्थ । तथा—

ऋणमस्मिन् समुन्नयति अमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥

अनया श्रुत्या सैवामृतत्वप्राप्तिरनूदिता ।

यदा तु प्राक्तनदैवदुर्विलासवशादौरसपुत्रसंप्राप्तिर्न जायेत तदा तदभावेऽपि सृष्टिसंधारणादिसमाजकार्यं यथाऽविच्छिन्नं प्रवर्तेत तथा धर्मशास्त्रानुसारेण व्यवस्थाकरणमावश्यकम् । अत एवैतादृशप्रसङ्गे शास्त्रकृद्भिर्नित्यः पुत्रप्रतिनिधिविधिरभिहितो दरीदृश्यते । अत्रिस्मृतावेतद्विधिसंबन्धीदृशं वचनमालक्ष्यते—

'अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा' इति ।

अथ न केवलमस्माद्वचनादेव वैतत्समानार्थकान्यवचनेभ्य एव वा पुत्रप्रतिनिधिविधेर्नित्यत्वं प्राप्नोतीति मन्तव्यम् । अपि तु यद्यौरसः पुत्रो न स्यात्तर्हि तद्ग्रिमवंशे तत्तद्व्यक्तिकर्तृकाणां समाजोपकारिकर्तव्यानां विच्छेदस्य जातत्वात्तदवलम्बिनी समाजव्यवस्थाऽपि तत्तदंशपर्याप्ता विच्छिद्येतेत्यतः कारणादपि तस्य नित्यत्वं प्राप्नोति ।

सोऽयं पुत्रप्रतिनिधिर्भिन्नाभिन्नैश्चतुर्भिः प्रकारैः कर्तुं शक्य इति प्रतिपादितमालक्ष्यते । क्षेत्रजपुत्रः, पुत्रिकैव पुत्रः, पुत्रिकायाः पुत्रः, दत्तकपुत्रश्चेत्येवं प्रकाराणां चतुर्णां पुत्रप्रतिनिधीनां मध्येऽतीव प्राचीने काले सर्वप्रतिनिधिषु सर्वमान्यतां प्राप्तः प्रतिनिधिः क्षेत्रजपुत्राख्यः स्यात् । क्षेत्रजपुत्रोल्लेखो वैदिकवाङ्मय एवाऽऽलक्ष्यते नैवमेव, अपि तु पुराणेतिहासादिषु ये प्राचीनकथाविभागाः संलक्ष्यन्ते तेष्वपि क्षेत्रजपुत्रोदाहरणानि बहुश उपलभ्यन्ते । क्षेत्रजेति नाम्नैवास्य पुत्रप्रतिनिधेर्विधिप्रकारः कीदृशः स्यादिति झटित्येव प्रतिपत्ता-

याति । स्वैरमपरिहार्यं दृष्टमेव यत्स्वीयैरानुवंशिकगुणैः संस्कारैः शिक्षणेन च युक्तस्य पुत्रस्योत्पादनं पितुः कर्तव्यमिति । अथ पुत्रप्रतिनिधिः कर्तव्यो भवति चेत्तस्मिन्प्रतिनिधातव्ये पुत्रे पितृसादृश्यस्य निरुक्तमितविषयकस्य सत्त्व एव स पितुः समाजोपकारिकार्यसंपादने पात्रं स्यात् । तस्मात्पितृसहवासवशाद्यत्स्त्रैणं संस्कृतं जातमेतादृश्येव क्षेत्रे पितृसादृश्यप्रचुरबीजस्य यथावापः पुत्रोत्पत्त्यै कृतस्तर्ह्यनेन मार्गेणोत्पद्यमानः पुत्र आनुवंशिकगुणैः सर्वप्रतिनिधिष्वधिकं पितृसदृशः किं न प्रादुःष्यात् । अनया शास्त्रोक्तपद्धत्या पुत्रजन्मानन्तरं क्षेत्रिणा पित्राऽथवा तदभावेऽन्यैस्तत्कुलीयैः पुरुषैः स्वकुलोचितसंस्कारैः क्षेत्रजपुत्रं संस्कृत्य पितृकर्तव्यविषये शिक्षणे च दत्ते सत्ययं क्षेत्रजपुत्र औरसपुत्राभावे सकलपुत्रप्रतिनिध्यपेक्षयाऽप्याधिक्येन पितृकर्तव्यान्युत्कृष्टतया परिपालयेदिति स्पष्टमस्ति । क्षेत्रजपुत्रं प्रतिनिधीकर्तुं पितृसंस्कृते क्षेत्रे पितृसदृशबीजावापः कर्तव्यो भवति । तादृशपुत्रोत्पादनविधिपालन-नियमाः सूक्ष्माः शास्त्रे प्रदर्शिताः सन्ति । क्षेत्रजपुत्रोत्पादने पितृसंस्कृतक्षेत्रस्य कारणत्वान्निपुत्रिकस्य पत्न्युभयविधाऽऽवापाधिकरणत्वेनोक्ता । तथा पितृसदृशबीजापेक्षित्वाज्ज्यायान्कनीयान्वा पत्युर्भ्राताऽऽवापकर्तृत्वेन नियोजितः । आभ्यामुभाभ्यां केवलं पुत्रोत्पत्त्यर्थमेव परस्परेण साकं सहवासस्य कर्तव्यत्वात्तयोः परस्परेण सह वर्तनेऽप्यतीव प्रखराः कष्टतराश्च नियमाः शास्त्रेण प्रतिपादिताः—

विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।
एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचन ॥ ( म० स्मृ० ९।६० )
मुखान्मुखं परिहरन्गात्रैर्गात्राण्यसंस्पृशन् ।
कुले तदवशेषे च संतानार्थं न कामतः ॥ ( नारदस्मृ० )

इत्यादिषु नवमाध्यायान्तर्गतैकषष्टितमादारभ्य सप्ततितमपर्यन्तेषु मनुवचनेषु, एतदन्येषु च प्रदर्शितनियमानां सूक्ष्मया दृशा पर्यवेक्षणे कृतेऽस्मिन्नियोगविधौ या पुरुषस्य योजना सा केवलं बीजावापयन्त्रत्वेनैव कृतेति प्रतीयते । अद्यत्वेऽपि पुरुषबीजमादाय यन्त्रद्वारा तत् स्त्रीगर्भाशये प्रवेश्य पुत्रनिर्माणप्रयोगा आङ्ग्ल-शिक्षाशिक्षितचिकित्सकैरनेकत्र न क्रियन्ते किम् ?

वस्तुतस्तु यदेतत्पुत्रनिर्माणप्रकारद्वयं नीतितत्त्वविवेकतुल आरोप्य परीक्षणे क्रियमाणे कस्यचिदन्यस्य पुरुषस्य बीजं कस्याश्चिदन्यस्या नार्या गर्भाशये यन्त्रेण प्रवेश्य पुत्रनिर्माणकरणं नाम संकीर्णप्रजानिर्माणेन सुव्यवस्थितसमाजे दुरवस्थासंवर्ध-

नमेवेति को हि नाम नीतिरहस्यविज्ञाभिमन्येत ? तस्मात्सामाजिककर्तव्यपरिपालनार्थं पुत्रप्रतिनिधौ कर्तव्ये सति सर्वेषु[मार्गेषु]श्रेष्ठतमो मार्गो नियोगविधिरेवेति वक्तुं न किंचिद्बाधकम् । परंत्वस्मिन्परिपालनीया नियमा एतावन्तः प्रखराः सन्ति यदेताननुसृत्य पुत्रनिर्माणकरणमनेकवेलायामशक्यं भवति । अत्र नियोजितस्य ज्येष्ठस्य कनिष्ठस्य च भ्रातुरभावे तत्स्थानेऽनन्तरसपिण्डस्य योजनामुक्त्वा तस्याप्यभावे श्रेष्ठजातीयपुरुषाद्बीजं ग्राह्यमित्येवमप्यन्ते पर्यायः स्थापितोऽस्ति । परमत्र विधौ योऽयं स्त्रीपुरुषसंयोगप्रसङ्गस्तस्मिन् प्रसङ्गे तयोरुभयोर्वर्तनं तुलायन्त्रतुलितमिव शास्त्रानुसार्येव भवेदित्येतद्विषये विश्वासदानं महाकष्टतरम् । उभौ यद्यत्यन्तं धर्मशीलौ स्यातां चेत्तर्ह्येव न गर्ह्यवर्तनाद्भयप्रसङ्गः । यथा—पाण्डुराजपत्न्या कुन्त्या यमवाय्विन्द्राश्विदेवानां साहाय्येन युधिष्ठिरप्रभृतयः क्षेत्रजपुत्रा निर्मिता इत्येवं महाभारतोक्तः कथाविभागः । एवमन्यान्यप्युदाहरणानि दातुं शक्यानि स्युः । परंत्वस्मिन् प्रकारे नीतिधर्मोल्लङ्घनस्य बह्वंशेन संभव इत्येवं शास्त्रमेव स्वयमभिधत्त इति मनुस्मृतेर्नवमाध्यायान्तर्गतं चतुःषष्टितमं श्लोकमारभ्य सप्ततितमपर्यन्तेषु श्लोकेष्ववलोक्यमानेषु सत्सु मनसि संनिहितं भवेत् । पुरा वेने राज्ञि राज्यं शासति सति कामोपहतचेतनः सन् क्षेत्रजपुत्रोत्पत्तिं पुरस्कृत्य प्रजासु वर्णसंकरभयमुत्पादयामास । अतो धर्मव्यवस्थापकैर्महात्मभिः—

> अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।
> मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥
> स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ।
> वर्णानां संकरं चक्रे कामोपहतचेतनः ( म.स्मृ.९।६६-६७)

कामोपहतचेतनो भूत्वा निर्मितः क्षेत्रजः पुत्रोऽशास्त्रीयत्वात्संकरजातीयः । बह्वंशेन तादृशसंकरजातीयघटितासु प्रजासु जायमानासु समाजरचना विशकलिता भवेदित्यनुसंधाय सोऽयं क्षेत्रजपुत्रोत्पादनप्रकारः पशुधर्म इत्येवं विगर्ह्य निषिद्ध इत्यर्थः । अत्र कामोपहतचेतन इत्यभिधानेन रत्यभिलाषेण प्रवृत्तत्वान्नीतिधर्मादिवैर्यस्य सर्वथा भ्रंश उक्तः । अविचारप्रवर्तनात्क्षेत्रिपितृसदृशपुत्रोत्पादनात्मककर्तव्यताननुसंधानेन बीजवप्तुर्गुणैः सदृशः स पुत्रो जायत इति भावः । वसिष्ठापस्तम्बादिधर्मप्रणेतृभिर्धर्मसूत्रेषु प्राचीनवैदिकगाथात्वेन ये श्लोका उद्धृतास्तेऽप्ययमुक्तैवार्थस्य निदर्शकाः—

इदानीमेवाहं जनकः स्त्रीणामीर्ष्यामि नो पुरा ।
यदा यमस्य सादने जनयितुः पुत्रमब्रुवन् ॥
रेतोधाः पुत्रं नयति परेत्य यमसादने ।
तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः ॥
अप्रमत्ता रक्षथ तन्तुमेतं मा वः क्षेत्रे परबीजान्यवाप्सुः ।
जनयितुः पुत्रो भवति सांपराये मोघं वेत्ता कुरुते तन्तुमेतम् ॥ इति ।

इदमेकं क्षेत्रजसंस्थाविच्छित्तेः कारणम् । किंच मानवानामैहिकायुष्यक्रमः सुखेन व्यतीयादथ चामुत्रापि भूयः सुखं प्राप्नुयादित्येतदर्थं शास्त्रेणेष्टप्राप्त्यनिष्टपरिहारसाधनानि नैकविधान्यभिहितानि । तेषां च साधनानां प्रबलदुर्बलभावः प्रतियुगं न नियतः । अपि तु युगभेदेन परिवर्तते । कस्मिंश्चिद्युगे किंचिदेकं प्रबलं किंचिदेकं च दुर्बलमिति यावत् । तदनुसारेण मनुष्याणां धर्मविषयिण्यः प्रवृत्तयोऽपि परिवर्तन्ते । यथेदानीं ब्राह्मणसमाजे सर्वत्र वेदपाठो लुप्तप्रायः, किं बहुना स्वमातुर्गायत्र्या अपि पाठोऽत्यन्तं प्रलुप्य तत्स्थाने ज्ञानेश्वरतुकारामैकनाथादिओवीनां पाठाः संप्रवृत्ताः । यथा वा वस्त्वगारे विष्ण्वादिदेवा एव न सन्ति कुतो देवगृहं कुतस्तरां च नैत्यिकदेवपूजा, तथाऽपि शनिवारे मारुतिदर्शनं शनैश्चरदर्शनं भौमवारादौ योगेश्वर्यादिदर्शनं नित्यं चोषःकाले पर्वतीप्रयाणमित्येवं दर्शनार्चाः प्रचलिताः सन्तीति । यस्मिन् युगे व्यक्तेः समाजघटकैकस्वल्पावयवत्वात्स्वविषये किमपि न विचार्याऽऽजन्म केवलं समाजोपकारिकर्माचरणमेव व्यक्तेर्मुख्यं कर्तव्यं, तस्मादेव व्यक्तेरपि समष्टिद्वारा परमसुखलाभ इत्येवं मती रूढाऽऽसीत्तस्मिन् युगे सर्वेषां संघीकरणेनैव सिध्यन्ति यज्ञयागादीनि कर्माणि परमश्रेष्ठधर्मप्राप्तिस्थलान्यज्ञायिषत । यज्ञाद्यनुष्ठानेनेन्द्रादिदेवतानां संतोषादुचितकाल उचितपर्जन्यवृष्टेर्धनधान्यादिसमृद्ध्या मानवानां समाधानेन कलहकारणाभावात्समाजमहत्त्ववति काले निर्विरोधं तादृशानि सामाजिककर्माण्यघटिषत । व्यक्तिमहत्त्वकाले त्वभक्ष्यभक्षणापेयपानागम्यागमनवर्जनपुरःसरं पावित्र्याहिंसास्तेयादिप्रचुरकर्माचरण एव धन्यतामर्मस्त तत्तद्व्यक्तिः । तेन पशुहिंसामांसाशनापेयपानादयोऽर्थाः कथमिव तस्याः स्वीकरणीया भवेयुः । एवमादिभिः कारणैर्यज्ञसंस्था विलयं प्राप्य परिवर्तिते युगे दानधर्मस्य महत्त्वमवर्धत । तदिदं तत्त्वं सूक्ष्मेक्षिकयाऽऽकलय्यैव शास्त्रकारैस्तत्तत्सुखसाधनस्य तत्तद्युगानुसारेण श्रेष्ठत्वमभिहितम्–

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाऽऽहुर्दानमेकं कलौ युगे ॥ (मनु० १ । ८६) इति ।

क्षेत्रजोत्पत्तिविषयेऽप्ययमेव प्रकारो घटते स्म। व्यक्तिप्रधाने काले समाजे स्वशरीरपावित्र्यसंवर्धनविषयिण्यो भावना अतीव बलवत्तरा अभूवन् । तेन च पावित्र्यभङ्गभयात् कावपि स्त्रीपुरुषौ नियोगविधिनाऽपत्योत्पत्तौ न समनाद्धाम् । इदं द्वितीयं क्षेत्रजोत्पत्तिलोपकारणम् । महाभारते कुन्तीपाण्डुराजयोः संवादे नियोगविधिनाऽपत्योत्पत्तौ ये नैकविधा आक्षेपाः प्रदर्शितास्ते तदानीं समाजे रूढानां शरीरपावित्र्यभावनानां प्राबल्यस्य सूचकाः। तेन युधिष्ठिरादिक्षेत्रजपुत्रेषु न कश्चिद्दोषः शङ्कनीयः ।

एवंप्रकारेण समाजे क्षेत्रजपुत्रप्रतिनिधौ पश्चात्पतिते सति द्वितीयस्याः पुत्रप्रतिनिधिपद्धतेः प्रामुख्येणाङ्गीकारः क्रमप्राप्त एवाभूत्। पुत्रिकापद्धतिः पुत्रिकापुत्रपद्धतिश्चेति द्वे पद्धती वेदकालादारभ्य प्रचलिते आस्ताम्। अथ च तयोः प्रतिनिध्योरुपयोग आधिक्येन भवितुं शक्योऽप्यासीत् । क्षेत्रजपुत्र एकेनैव प्रकारेण गौणत्वं पुत्रिका–पुत्रिकापुत्रयोस्त्वनेकप्रकारैर्गौणत्वं भवति । पितुः प्रतिनिधिरिति ग्रहीतव्यस्तत्स्थाने कन्यां गृहीत्वा कथं निर्वाहः स्यात्। यथा मुख्यवक्ता प्रतिनिधित्वेन प्रेषितव्यः स वाग्म्येवापेक्षितः, स मूकदुर्बलश्चेत्कथं स तत्कार्यं निर्वोढुं शक्नुयात् । प्रत्युत प्रेषयितुरसमीक्ष्यकारितैव प्रकटा भवेत् । यावन्तो यादृशाश्च पितृगुणाः पुत्रेऽनुवर्तन्ते तावन्तस्तादृशाश्च कन्यायां नावतरन्ति । किंच कन्यायाः स्त्रीत्वेन भिन्नलिङ्गत्वात्तस्याः संस्कारैः शिक्षणेन चापि पितृसादृश्यसंपादनं दुर्घटमेव । एतदपेक्षयाऽपि महान्प्रतिरोधः, यत्पाणिग्रहणादनन्तरं पतिगृहगमने सति तत्सहवासनैरन्तर्येण पतिगुणैः संस्कृतैव सा भवेन्न पितृगुणैस्तुल्येति । इयमेव कल्पना वाजसनेयिब्राह्मणे स्पष्टमभिहिता दृश्यते—‘ अर्धो ह वा एष आत्मनस्तस्माद्यज्जायां न विन्दते नैतावत्प्रजायते, असर्वो हि तावद्भवति । अथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि सर्वो भवति । तथा चैतद्वेदविदो विप्रा वदन्ति यो भर्ता सैव भार्या स्मृता ’ इति । तस्माद्बहुवंशैरसदृशी कन्या यद्यपि पुत्रप्रतिनिधिविधिना स्वीकृता तथाऽपि पितुः सामाजिककार्यं निर्वोढुं कथमिव सा प्रभवेत् ।

य एव प्रकारः पुत्रिकायाः स एव प्रकारः पुत्रिकापुत्रस्य । यद्यपि पुत्रिकापुत्रे लिङ्गसाम्यमस्ति तथाऽपि भिन्नगुणयुक्तपुरुषबीजादुत्पद्यमानः स

आनुवंशिकगुणैर्मातामहसदृशो भवितुं न शक्नोति । किंच पुत्त्र्याः पुत्त्रत्वादेकेन संबन्धेन मातामहं प्रति व्यवहितो भवति । अतः कारणात्संस्कारैः शिक्षणेन च तस्य मातामहसदृशीकरणमशक्यप्रायमेव । एतैरीदृशैरन्यैश्च कारणैः पुत्त्रिका–पुत्त्रिकापुत्त्रयोः पुत्त्रप्रतिनिधित्वेन स्वीकारः कदैव सार्वत्रिकत्वेन न प्रवर्तते स्म । अत एव पुत्त्रिका––पुत्त्रिकापुत्त्रयोः पुत्त्रप्रतिनिधित्वेन स्वीकारस्योदाहरणानि पुराणेतिहासादिषु क्वचिदेवोपलभ्यन्ते । वसिष्ठधर्मसूत्रे यत्पुत्त्रिकोदाहरणं दत्तं तदृग्वेदोक्तं ( ऋ० १ । १२४ । ७, ऋ० ३ । ३१ । १ ) ज्ञेयम् । राजतरङ्गिण्यां केनचिद्राज्ञा कल्याणदेवीनाम्न्याः स्वकन्यकाया एकाकिन्याः कल्याणमल्लेति नाम कृत्वा तस्याः शैशवादारभ्यैव पुरुषोचितं शिक्षणं दत्तं । अथ तां प्रतिनिधिपुत्त्रं मन्यते स्मेति पुरावृत्तमुल्लिखितम् । तथाऽप्येवादृश्युदाहरणानि स्वल्पान्येव ।

क्षेत्रज–पुत्त्रिका–पुत्त्रिकापुत्त्राणां त्रयाणां मध्ये कोऽप्येक एतेन वा तेन वा कारणेन पुत्त्रप्रतिनिधी भवितुमयोग्य इति कृत्वा शास्त्रकाराणामेतद्व्यतिरिक्तेषु पुत्त्रप्रतिनिधिप्रकारेषु भग्दानमावश्यकमभूत् । निरुक्तचतुष्प्रकारकपुत्त्रानन्तरेणान्येषामपि भिन्नप्रकाराणां केषांचित्पुत्त्राणां वेदेषु प्रसङ्गानुसारेणोल्लेख आलक्ष्यते । ते च कानीनगूढजक्रीतप्रभृतयः । एतेषां पुत्त्राणां प्रयोजनं किम् ? पुत्त्रप्रतिनिधित्वेनैषां स्वीकारस्य कस्मिन्नपि काले रूढिरासीत् किम् ? अथवा निरुक्तपुत्त्राणां मध्ये कमपि प्रतिनिधी कर्तुं धर्मशास्त्रेण विधिरभिहितः किम् ? इत्येवंविधानामेतत्संबन्धिनां प्रश्नानां विवेचनमस्यामेव भूमिकायामन्ते क्रियते । सांप्रतमत्रैतावदवश्यमवधातव्यं, यद्यपि नैकविधाः प्रतिनिधिपुत्त्राः शास्त्रेष्वभिहितास्तथाऽपि योऽयं दत्तकविधिस्तत्संबन्धिनां नियमानामेतस्मिन्कलियुग आधिक्येन प्रस्तुतीकरणं शास्त्रकाराणामावश्यकं प्रत्यभादिति । तत्कारणान्यपि स्पष्टानि । 'पुत्त्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः' ( म० स्मृ० ९ । १५८ ) इत्युक्तानां द्वादशानां पुत्त्राणां मध्ये ये कानीन–सहोढ–गूढज–पौनर्भव–पारशवाख्याः पुत्त्रास्ते व्यभिचारमूलत्वाद्भिन्नबीजत्वात्क्षेत्रहीनत्वाच्च धार्मिककार्येषु सामाजिककार्येषु वा प्रतिनिधित्वेन परिगणनीया न कदाऽपि संभवेयुः । अथ क्रीतकृत्रिमस्वयंदत्तापविद्धाख्याः पुत्त्रा यद्यपि निरुक्तदोषत्रयवर्जितास्तथाऽपि दत्तकविधौ जनकपित्रा तेषां दानं यत्किंचित्प्रकारकमार्थिकलाभाभिसंधिमन्तरेणैव केवलं धर्मबुद्ध्या करणीयं भवति । तदेतत्पुत्त्रदानविध्यनुष्ठानाच्च-

नकपितुरपि पुण्यं लब्धं भवति । कृत्रिमस्वयंदत्तापविद्धाख्यपुत्रेषु तु जनक-पितृसंमतिरपि नापेक्ष्यते । अपेक्षितायां च द्रव्यदानादिना सा संमतिः संपाद्यते । धर्मशास्त्रस्य योऽसौ हेतुर्यत्प्रत्येकधार्मिककर्तव्यस्याऽऽचरणं यत्र यत्र यस्य संबन्धो भवितुमर्हति तैः सर्वैस्तत्संपादयितुं स्वय-मेव केवलं धर्मबुद्ध्या प्रवर्तितव्यमिति सोऽयं हेतुः क्रीतादिपुत्राणां प्रतिनिधीकरणे यो नैव प्रायः संसिध्यति। अत एव समाजान्तर्गतानां सर्वव्यक्तीनां समाजव्यवस्थास्थिरतावस्थित्यर्थमवश्यमपेक्ष्यमाणं पृष्ठबलं नैव लब्धं भवति । ततश्च क्रीतादयोऽपि नात्यन्तं प्रातिनिधिषु परिगणनार्हाः । आस्तां नाम, परं तु धर्मशास्त्रप्रोक्तमार्गेण केवलं धर्मबुद्ध्या पुत्रे दीयमाने सति सांप्रतिकयुगधर्मानु-सारेण प्रत्येकं व्यक्तेर्यत्स्वात्मनो वैशिष्ट्यं तस्य हानिर्न भूत्वा धर्मकर्तव्याचरणे येयं प्रवृत्तिर्दृश्यते तस्याः परिपालनमप्यनया दत्तकसंस्थया साहाजिकतयैव भवति। जनकः पिताऽसौ यदात्मनः पुत्रं परस्मै ददाति तद्धर्मकार्यमनुसंधायैव ददातीतीदं पुत्रदानमेव महद्धार्मिकं कृत्यं भूत्वाऽवस्थितम् । यथा विवाहे धर्मकार्यसंपादनायैव स्वकन्यादातुर्जनकस्य महनीया पुण्यसंपत्प्राप्तिर्भवति तद्वत् केवलं धर्मबुद्ध्या पुत्रदानं कुर्वतो जनकपितुर्महती पुण्यसंपत्तिर्जायते, इत्यालोच्यास्मिन् कलियुगे पुत्रं दातुं मानवाः स्वयमेव प्रवर्तेरन्निति ज्ञात्वैव किल धर्मरचनाकारैरिमा व्यवस्था क्रियमाणा दृश्यते—

> दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः,
> ...इमानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
> निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ॥

( आदित्यपुराणम् ) इत्येवं समाजव्यवस्थां विशकलितां कुर्वन्तीन्तराणि पुत्रप्रतिनिधीकरणानि निषिध्यास्मिन् कलियुगे सामाजिकशान्ततासमवस्थिति-करीयं दत्तकपद्धतिरेव सर्वश्रेष्ठेति निश्चित्य सैवावस्थापिता । एवंप्रकारेणा-स्मिन् कलियुगेऽस्यां दत्तकपद्धतौ सर्वश्रेष्ठत्वेन निश्चितायां सत्यामप्यनया दत्तकविधिपद्धत्या पुत्रप्रतिनिधीकरणोदाहरणानि वैदिककालादारभ्याद्य यावत् प्रसिद्धानि सन्ति । तैत्तिरीयसंहितायां ( ७ । १ । ८ । १ ) महर्षिणाऽत्रि-णाऽऽत्मन एकाक्येव पुत्र औवार्यर्षये दत्तकत्वेन समर्पित इत्येवं कथाभागः समुपवर्णितोऽस्ति । तथा गाधिजमुनिभिर्विश्वामित्रैरात्मनः साक्षादौरसपुत्राणां शते सत्यपि शुनःशेपनामर्षिर्दत्तकविधिना पुत्रप्रतिनिधिस्कारीति कथांश ऐतरे-

ब्राह्मणे संदृश्यते । पुराणेतिहासादिषु त्वेतादृशाः प्रसङ्गा बहव एव समागताः । तदेवमस्या दत्तकपद्धतेः सर्वश्रेष्ठत्वस्य सिद्धत्वादितत्संबन्धिनो नियमानितस्ततो विप्रकीर्णान्शास्त्राण्यालोड्य पुष्पाणीवावचित्य तेषां सर्वेषामेकत्र कश्चिद्ग्रन्थनं स्मृतिकाराणां धर्मशास्त्रनिबन्धॄणां वा नाप्राप्तमभूदित्येतत्कथनं नापेक्षते । एतत्संबन्धिनां धर्मनियमानां समालोचने क्रियमाणे दत्तकत्वेन जिघृक्षितः पुत्रो यावच्छक्यं प्रतिग्रहीतृपितृसदृश एव स्यादग्रे च संस्कारैः शिक्षणेन च योग्ययैव दिशा तत्संवर्धनं च भवेदित्येतद्विषयेऽतिशयितैव चिन्तोढा समालक्ष्यते । जिघृक्षितः पुत्र आनुवंशिकैर्गुणैः प्रतिग्रहीतृपितृसदृशोऽपेक्षित इत्यत एव हेतोस्तत्सिद्ध्यर्थं भ्रातुष्पुत्र एव यावच्छक्यं दत्तकत्वेन ग्रहीतव्य इत्येवं तत्प्रशस्तिर्धर्मशास्त्रेण कृतेत्यवगम्यते । नैतावदेव, अपि तु भ्रातुष्पुत्रास्तित्वे तस्यैव पुत्रप्रतिनिधित्वेनोपादाने प्रोत्साहनाय मनुस्मृतावयमर्थवादात्मकः श्लोकः पठ्यते—

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।

सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ (म०स्मृ०९।१८२) इति ।

तस्मात्प्रथमतो भ्रातुष्पुत्रः पुत्रप्रतिनिधित्वेनोपादातव्यः । तदसंभवे तदनन्तरः सगोत्रसपिण्डः । तदभावेऽसगोत्रसपिण्डः । तदभावेऽसपिण्डः सगोत्रः । तदभावे समानजातीयो ग्राह्यः । इत्येवं ग्राह्यपुत्राणामनुक्रमेण प्रणाल्यभिहिता । तद्वदेव ग्राह्यपुत्रे ग्रहीतृकुलीयसंस्कारास्तत्कुलोचिताशिक्षणं चेत्यनयोर्दृढपरिणामभवनार्थं जनककुलीयस्य कस्यापि संस्कारस्य तन्मनसि परिणामभवनात्प्रागेव ग्राह्यः । जन्मनोऽनन्तरमव्यवहितोत्तरक्षणे जातादिसंस्कारकरणात्पूर्वं ग्राह्य इत्यर्थः । तदसंभवे पञ्चवर्षाभ्यन्तरवयसि वर्तमानस्तर्हि ग्राह्यः । तदलाभेऽनुपनीतस्तस्याप्यलाभेऽसंजातविवाहस्तर्हि ग्राह्यो भवेदित्येवमादयो ये दत्तकग्रहणविषये निर्बन्धाः प्रोक्तास्तेषां मर्म त्विदमेव भवति यत्कस्यचिदपि निर्बन्धस्य स्वीकरणेन दत्तके गृह्यमाणे सति पुत्रप्रतिनिधिविधिकथनस्य प्रधानहेतवः सफला भवन्तीति स्थूलतोऽत्र प्रतिपादितम् । परं प्रत्यक्षतो दत्तकविध्यनुष्ठानवेलायामनेकविधा अशक्यवारणाश्च प्रसङ्गाः प्रतिग्रहीतुः पुरतः समुपतिष्ठन्ते । एतादृशे समये केन मार्गेण गन्तव्यं कश्च पन्थाः सुखावहः स्यादित्येतद्विषये दिग्दर्शनकारिणां नियमानामपेक्षा संजायत इति स्वाभाविकमेतत् । तदर्थमेव किल दत्तकसंबन्धिनां ग्रन्थोपग्रन्थानां विस्तरोऽनेकैरभियुक्तपण्डितैः कृतः समालक्ष्यते । दत्तकमेवोद्दिश्य प्रवृत्ता एतादृशाः

स्थूलमानतश्चत्वारिंशद्ग्रन्था अधुनोपलभ्यन्ते । तेषां मध्ये दत्तकमीमांसादत्तकचन्द्रिकाभिख्यौ द्वौ ग्रन्थावस्मिन्कलौ युग आङ्ग्लन्यायालयकृपाकटाक्षेण सर्वत्र समादरणीयतां प्राप्तवन्तौ स्तः । तयोरेतयोः सर्वमान्ययोर्ग्रन्थयोः सामान्यतोऽग्रिमोक्तिवदुद्देशाश्चर्चिताः समालक्ष्यन्ते—( १ ) दत्तकः केन ग्राह्यः? दत्तकग्रहणं धर्मदृष्ट्या आवश्यकं न वा ? स्त्रीणां सुवासिनीनां तद्विपरीतानां च दत्तकग्रहणाधिकारः समस्ति न वा ? ( २ ) पुत्रदानेऽधिकारिणः के ? मात्रा स्वातन्त्र्येण पुत्रदानं कर्तुं शक्यं न वा ? मातापितृव्यतिरिक्तानां तद्बन्धूनां पुत्रदानाधिकारो भवति न वा ? ( ३ ) दत्तकत्वेन जिघृक्षितः पुत्रः कीदृशः स्यात् ? रूपगुणादिभिर्युक्तः सन्सर्वापेक्षयोत्कृष्टस्तादृशः पुत्रः कः स्यात् ? विरुद्धसंबन्धो नाम किम् ? ( ४ ) केवलं दानप्रतिग्रहाभ्यामुभाभ्यामेव कर्मभ्यां परिगृहीते प्रतिग्रहीतृनिरूपितं पुत्रत्वमुत्पद्यते न वा ? दत्तकविधिहोम आवश्यको न वा ? ( ५ ) शौनकाद्युक्तविधिपूर्वकं दत्तके गृह्यमाणे सति तत्र पुत्रे के गुणाः समुत्पद्यन्ते ? अग्रिमोक्ताः प्रश्ना दत्तकविधानेन केन प्रकारेण निर्णीताः ? ( अ ) सापिण्ड्यसंबन्धः, ( आ ) आशौचसंबन्धः, ( इ ) दायाधिकारसंबन्धश्चेत्येवंविधाः प्रश्ना अस्मिन्ग्रन्थे साधकबाधकविचारपूर्वकं चर्चित्वाऽन्तिमं निर्णयं प्रापिताः सन्ति । एतद्यथार्थावबोधोऽभिनवमञ्जरीटीकावाचनेन साहजिकतयैव भवेत् । एतदाशयमनुसंधायैव मञ्जर्यां व्याख्यात्रा तथा प्रयत्नः कृतो दरीदृश्यते । अत्र तु केवलं द्वित्राणां प्रश्नानां यथामत्यूहापोहः प्रादर्शीति बोध्यम् ।

पितृसदृशः पुत्रः प्रतिनिधीकर्तव्य इत्येवं धर्मशास्त्रस्य मूलभूत उद्देशः । अतस्तदर्थं क्षेत्रजः पुत्रः सर्वोत्कृष्टः पर्याय इत्युक्तम् । परंतु तं परित्यज्य तत्स्थाने दत्तकयोजनाकरणं शास्त्रकाराणां कथं नाप्राप्तमभूत्तदप्युक्तम् । क्षेत्रजः पुत्रोऽयं पितुः पूर्णस्वामित्ववति क्षेत्र उत्पादितत्वात्क्षेत्रिणः पितुरेव स पुत्र इत्येतद्विषये लोकव्यवहारे संशयग्रहणस्य कारणमेव नास्ति । तादृशः संशयो दत्तकविषय उत्पत्तुं शक्यः । जनकेन पित्राऽऽत्मनः पुत्रस्य दाने कृतेऽपि तेन दानेन किं स्यात्तादृशपुत्रनिष्ठं जनकपितुः स्वत्वं निवर्तेत । तथा प्रतिग्रहीत्रा तत्प्रतिग्रहे क्रियमाणेऽपि तेन गृहीत तत्र प्रतिग्रहीतुः स्वत्वमेव केवलमुत्पद्येत । किंतु प्रतिनिधिभूते प्रतिग्रहीतृनिरूपितं पुत्रत्वं कथमिवोत्पद्यतामित्याशयमनुसंधायैव किल शास्त्रकारैस्तदर्थं दानप्रतिग्रहयोरनन्तरं दत्तकविधिहोमाख्यं कर्म व्यवस्थापितम् । तस्मिन् होमाख्ये कर्मणि वैदिकमन्त्रैः संपादिते सत्यस्मिन्पुत्रे वेद-

मन्त्रबलात्प्रतिग्रहीतृनिरूपितपुत्रत्वं समुत्पद्यत इत्ययं धर्मशास्त्रकाराणामभिप्रेतः सिद्धान्तो दृश्यते। यदि दत्तकविधिहोमो नानुष्ठितः स्यात्तर्हि गृहीते प्रतिग्रहीतृस्वत्वोत्पत्तावपि पुत्रत्वोत्पादाभावात्तस्यापत्यस्य प्रतिग्रहीतृगृहे दासवदवस्थातव्यं भवेत्। वैदिकमन्त्रं वर्जयित्वाऽन्यस्मिन् कस्मिन्नपि नैतादृशमघटितघटनापटीयः सामर्थ्यमनुभूयते। विवाहविधावपि कन्यादानादनन्तरमव्यवहितमेव वैदिकमन्त्रैर्होमोऽवश्यं कर्तव्यो भवति। यदि तु स विवाहहोमः परित्यक्तः स्यात्तर्हि सा कन्या सामान्यैका स्त्रीत्यनेनैव रूपेण पतिकुलसंबन्धिनी भवेन्नैव तस्यां भार्यात्वमुत्पद्येत। अयमेवार्थो मनुना—

मङ्गलार्थं स्वस्त्ययनं यज्ञश्चाऽऽसां प्रजापतेः।
प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम्॥ ( ५। १५२ )

इत्यस्मिन्वचनेऽभिहितः। एतदन्यस्मिन्नप्येकस्मिन्स्थले वैदिकमन्त्रैरेवैतादृशविशेषसंपादनस्योदाहरणं प्रसिद्धतरमस्ति। काष्ठलोष्टपाषाणादिनिर्मितासु देवताप्रतिमास्वपि देवतासांनिध्यसिध्यर्थं तत्तन्मूर्तौ वैदिकमन्त्रैरेव प्राणप्रतिष्ठा करणीया भवति। सा तादृशी प्राणप्रतिष्ठा यदाऽकृता स्यात्तदा तन्मूर्तेः काष्ठत्वाद्यपेक्षयाऽतिरिक्तं पूज्यताकारणं देवतात्वं लेशतोऽपि भवितुं न शक्नोति। एवं निरुक्तरीत्या वैदिकमन्त्रबलात्प्रतिगृहीते प्रतिग्रहीतुः पुत्रत्वे समुत्पद्यमाने सति सोऽयं पुत्र इति बुद्ध्या तत्संवर्धनादि कर्तुं वैदिकधर्मानुयायी प्रत्येकं मनुष्यः धर्मभावनया निःसंदिग्धं प्रवर्तेत। अतो होमानुष्ठानं विना दत्तकविधानं न परिपूर्णतां गच्छतीति शास्त्रकाराणां सिद्धान्तोऽस्ति। स च सर्वथैव योग्य एवास्ति। एवं निरुक्तप्रकारेण तदपत्ये पुत्रत्वेन संबन्धेन प्रतिग्रहीतृकुले प्रविष्टेऽपि तथा जनककुलेन सह पूर्वं विद्यमाना ये तस्याकृत्रिमसंबन्धास्तेषु प्रायः सर्वेषु विनष्टेष्वपि केषुचिद्विषयेषु तत्संबन्धा अविनश्य यथापूर्वं समवतिष्ठन्त एवेति शास्त्रस्य निर्णयः, स चापि युक्त एवेति कस्याप्येतद्ग्रन्थं प्रत्यक्षयतः प्रत्यक्षं भवेत्। विवाहविषये या सापिण्ड्यमर्यादा निबद्धा शास्त्रकारैः सा दत्तकपुत्रस्यापि न्यूनाधिकवंशपर्व(पिढी)संख्ययोभयकुलेऽपि परिपालनीया भवति। विवाहविषय एकशरीरान्वयमूलकसापिण्ड्यग्रहणस्यावश्यंभावाज्जनककुले मातृतः पञ्चपुरुषेभ्यः पितृतश्च सप्तपुरुषेभ्य ऊर्ध्वं सापिण्ड्यनिवृत्तिनियमो दत्तकविषयेऽपि जनककुलीयसंतानविच्छास्त्रकारैरङ्गीकृत आलक्ष्यते। प्रतिग्रहीतुः कुलस्य नव्यस्यैव दत्तकं प्रति लब्धत्वाद्विवाहार्थे त्रिपुरुषसापिण्ड्यं दत्तकस्योक्तम्। पतिनिधनानन्तरं स्त्रिया दत्तको न ग्राह्यः। यतस्तस्यास्तादृशोऽधिकारो नास्तीति दत्तकमीमांसाकारमतम्।

तत्समर्थनं च ' न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः ' इति वसिष्ठवाक्येन कृतम् । तस्यायमाशयः—पत्युराज्ञां विना स्त्री दत्तकं स्वीकर्तुं न शक्नोति । पत्युराज्ञा च दत्तकस्वीकारसमय एवापेक्षिता । अपि च तादृशीमाज्ञां दातुं पतिमन्तरेणान्यस्य कस्याप्यधिकारो नास्ति । अतो विधवाया दत्तकस्वीकारेऽधिकारो नास्तीति । परंतु ' माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ' ( म० स्मृ० ९ । १६८ ) इति मनुवचनानुसारेण वसिष्ठप्रोक्तप्रतिषेधमपि दूरीकृत्य विधवाया अपि पुत्रदानाधिकारः प्राप्नोति ।

दत्तकमीमांसाकारेण पुत्रप्रतिनिधिवदौरसदुहितृभावे कन्याप्रतिनिध्यनुष्ठानेऽपि शास्त्रानुज्ञा वर्तत इत्येवं नव्य एव प्रस्तावः स्वग्रन्थे प्रस्थापितः । अथ च तदावश्यकतासिद्ध्यर्थं पुराणेतिहासान्तर्गता अनेके कथाप्रसङ्गाः स्वमतपुष्ट्यर्थं निर्दिष्टाः सन्ति । एवंप्रकारेण दत्तकमीमांसाकारैर्यद्यपि कन्यापरिग्रहविधिर्लिङ्गादिप्रमाणैः संभूष्योल्लिखितस्तथाऽपि पुत्रप्रतिनिधिमूलभूतहेतुषु दृष्टौ प्रहितायां मानवेन क्रियमाणस्य समाजकर्तव्यस्य निरन्तरप्रवृत्तिसंरक्षणाय कन्याप्रतिनिधेस्तादृश्यपेक्षा नास्तीत्यवगतं भवति । लोकव्यवहारसरणावपि कस्मिन्नपि काले कन्याप्रतिनिधिपरिग्रहः सर्वत्र प्रचलित आसीदिति नाऽऽलक्षितं भवति । प्रतिग्रहीतृपितुर्धनादिग्रहणविषये दत्तकस्यातीव निकटः संबन्धोऽस्तीति कृत्वा सांप्रतं तद्विषये लोके व्यावहारिका नियमा बहुतरं सूक्ष्माः संजाताः सन्ति । तेषामुपर्युक्तवद्विषयानुसारेण भेदा भवन्ति । प्रकृतग्रन्थे स्थले स्थले टिप्पणीं दत्त्वा तत्तद्विषयसंबन्धेनाद्य न्यायालयप्रसारिता नियमाः के ? ते स्वधर्मशास्त्रस्य मूलहेतुभिः कियतांऽशेन संलग्नाः, विसंगता अपि आर्षवचनेभ्य उन्नीय तद्रचना कियत्यपि योग्याऽस्ति, अथ च लोकव्यवहारानुसारेण नियमरचनां कर्तुं धर्मशास्त्रीयनियमानां केषां केषामनादरः करणीयोऽभूदित्यादिविषयिणी चर्चा कृताऽस्ति । तेन व्यवहारशास्त्रधर्मशास्त्रयोर्नियमानां परस्परैः सह तुलनां कृत्वा योग्यायोग्यावगमाय सुगमः पन्थाः स्यादिति मे भाति । अत्रैतावदवश्यमुल्लेख्यं मन्ये यन्नन्दपण्डितसदृशान्महतो विदुषः सकाशादपि पाण्डित्यप्रकटनावेशाद्धर्मशास्त्रीयमूलहेतूनां कतिपयेषु स्थलेषु विपर्यासः समजनीति भासते । केवलशब्दगतपाण्डित्यानुसारेणाभिनवार्थवर्णनरूपकोटिकरणे दत्तभरो मनुजः स्याच्चेत्तर्हि तदाऽनवधानतया तद्वचनस्य मूलोद्देशानुसारी तत्त्वत ऋजुरप्यर्थस्तस्य मनसि नाऽऽयातीति संभवितुं शक्यमस्ति । सांप्रतं केवलमेकस्य प्रकरणस्य विचारकरणमवशिष्टम् । तच्च द्वादशविधपुत्रकल्पनसंबन्धेनेति ज्ञेयम् । वैदिकवाङ्मयेऽप्यौ-

इमं वर्जयित्वेतरेषां क्षेत्रजदत्तकादिपुत्राणामुल्लेखाः प्रतीयन्ते । अपि च—क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ ( म० स्मृ० ९ । १८० ) इत्यादिवचनसाहाय्येन नैकविधा विपर्यस्तकल्पना आधुनिकैर्व्यावहारिकनीतिशास्त्रपण्डितैः प्रसृता अकारिषत । तेषां मते हिन्दवीयार्याणां स्वीयपुरुषसंततिपरम्परावर्धनविषये काऽपि विपरीतैव महतीच्छाऽऽसांचक्रे । अतः केनापि मार्गेण पुत्रोत्पत्तिकरणविषये तद्धर्मशास्त्रकारैस्तान् प्रत्यतीव तिग्मान्यनुशासनान्यकारिषत । तादृशधर्माज्ञाः परिपालयन्तो हिन्दुजनाः पुत्रोत्पत्त्यर्थं स्वस्त्रीणामाहत्य व्यभिचाराचरणे प्रवृत्तिं किंचिदप्यभीत्वा जनयामासुः । पुत्रजननपुरतस्ते नीतिशास्त्रीयपवित्रनियमानपि तृणायामंसतेत्यादयः । हिन्दूनां विवाहपद्धतिकल्पनास्ववलोकितासु ताभ्यः सकाशादपीदमेव सिध्यति । गान्धर्वराक्षसपैशाचेत्यादिविवाहसंबन्धेनेम एव पण्डिता इत्थं ब्रुवन्ति—हिन्दवीयानां नीतिविषयिण्यः कल्पना अतीव क्षुद्रतरा आसन् यत्तैर्व्यभिचारबलात्कारेत्यादिप्रकाराणामपि विवाहवेषमारोप्य पवित्रेषु धर्मविधिषु तेऽन्तर्भाविता इति ।

एतन्मतस्य समग्रतया खण्डनविषये सुविशालः स्वतन्त्रो ग्रन्थ एव लेखनीयो भवेदित्यतस्तं मार्गमगत्वाऽत्र केवलं स्थूलदृष्ट्यैव तद्विचारणमावश्यकं मन्ये । कोऽप्यर्थोऽस्तु, स धर्मेणानुष्ठेयतया विहित इत्येवं यदि तद्विषये धर्मशास्त्रे विधिवाक्यमालक्ष्येत तदैव वक्तुं युज्येत । राक्षसपैशाचादिप्रकारैर्विवाहः कर्तव्यः, अथवा पुत्रप्रतिनिध्यर्थं कानीनगूढजादयः पुत्रा उत्पादयितव्याः, इत्येवमर्थप्रतिपादकानि विधिवाक्यानि धर्मशास्त्रे क्वाप्यालक्ष्यन्ते किम् ? समग्रधर्मशास्त्रग्रन्थानां मूलग्राहितयाऽऽलोडने कृतेऽपि नैतादृशमेकमपि विधिवाक्यं तत्र दृष्टिपथमागम्येत । यदि च नैकमपि विधिवाक्यमुपलभ्यते तर्हि तादृशप्रकारेण विवाहकरणं पुत्रप्रातिनिध्युत्पत्तिकरणं च नैव शास्त्रसंमतं नापि वा तादृशी धर्माज्ञेति स्पष्टं प्रतीयते । यद्येवं तर्हि धर्मशास्त्रीयग्रन्थेषु विवाहप्रकरणे पैशाचादिविवाहवर्णनं, दायहरणप्रकरणे कानीनगूढजादिपुत्रवर्णनं च किमर्थं कृतमित्येवं प्रश्नः पुरतः साहजिकतयैवोपतिष्ठते ।

तदुत्तरमेवम्—धर्मशास्त्रमिदं यद्यपि मानवं धर्मशीलं संपादयितुं प्रवृत्तं तथाऽपि मानवोऽयं जन्मप्रभृत्येव धर्मशील इत्येवमन्यथाग्रहः शास्त्रकारैर्न कदाऽप्यग्राहि । प्रत्युत स्खलनशीलो मानवः शनैः शनैः शिक्षणं दत्त्वा धर्मशीलः संपादनीयोऽथ चोन्नतावस्थां नेतव्य इत्येवमादि तु धर्मशास्त्रस्य मुख्यं

ध्येयम् । तत्र प्रमादभरेण मानवहस्ताद्ये केचन प्रकारा घटन्ते तेषां व्यवस्थापनं, अथ चोत्तरोत्तरं मानवहस्तादेवं प्रकाराः पुनरपि न घटेयुः किंवा घटिता अपि नाधिकं घटेयुरित्येतद्विषये चिन्तावहनमित्येवं कार्यद्वयं धर्मशास्त्रस्यैवावश्यं करणीयं भवति । एतादृशकार्यद्वयान्तर्गतं प्राथमिकं कार्यं स्खलिताचरणव्यवस्थापनं तद्धर्मशास्त्रे कुर्वति सति नान्तरीयकतया तस्मिन्प्रकरणे भिन्नभिन्नप्रकाराणां विवाहानां प्रतिनिधिपुत्राणां च वर्णनं समागतमित्येव । राजकीयेऽपराधिदण्डानुशासनप्रकरणेऽपि ( फौजदारीकायद्यामध्ये ) चौर्यव्यभिचारबलात्कारवधादीनां राक्षसीयप्रकाराणां व्यवस्थापने कृते तावता बलात्कारादिक्रूरकर्मसु प्राणिनामुत्तेजनं दत्तमिति न कोऽपि मन्यते । सत्येवं धर्मशास्त्रेण व्यभिचारादिहेयप्रकाराणां व्यवस्थायां निरुक्तायां सत्यां तैरेव राजकीयनीतिपण्डितैर्विपरीतास्तर्काः प्रत्युत्थातव्या इति महदेतदद्भुताश्चर्यास्पदम् । अपराधिदण्डानुशासनविषयव्यवस्थाधर्मग्रन्थोक्तव्यवस्थयोर्मध्ये बह्वेवान्तरं दृश्यते । आधुनिकदण्डकप्रघट्टके वर्णिता व्यवस्था हीतरत्रत्यव्यवस्थावदेवैकाङ्गिनात एवापरिपूर्णा समालक्ष्यते । आधुनिकदण्डको ( कायदा ) हि बलात्कारादिकारिणं यथापराधं सुतीक्ष्णामतीक्ष्णां वा केवलां दण्डादिशिक्षां विदधाति । तत्रापि व्यभिचारकारिणीं विवाहितास्त्रियं प्रति तादृशीमपि शिक्षां दण्डको न वदति । किंच पतिहीनया स्त्रिया केनापि सह व्यभिचाराचरणेऽपि तदुभयोः शिक्षाभयं सुतरां नास्ति । अस्मद्धर्मशास्त्रेऽनेके स्त्रीसंग्रहणप्रकरा वर्णिताः, तत्र च सकामां कन्यां तद्वराङ्गाङ्गुलिप्रवेशेन यो दूषयेत्तं प्रत्यपि शासनं न्ययोजि । तत्र विवाहितयाऽथवा विधवया सकामयाऽकामया वा कयाऽपि स्त्रिया सह व्यभिचारकारिणं प्रति प्रखरशासनं विहितं भवेदित्यत्र कीदृशमाश्चर्यं वद । एवमगम्यगमनमाचरन्त्याः सकामस्त्रिया अपि सुतीक्ष्णं शासनं न्ययोजि । अस्मच्छास्त्रकारा एतादृग्दुराचरणविषये केवलं राजदण्डभयमुत्पाद्यैव न तूष्णीमवस्थिताः किंत्विह समाजकृतबहिष्कारभयं परस्मिंश्च यमराजभयं नीचयोनिजननभयं चेत्येवमादीदृक्पातकिनां कृते नियोज्य कष्टदानि महान्ति प्रायश्चित्तान्यप्यभिहितानि । ईदृशानि शासनानि प्रायश्चित्तानि च यः कोऽपि धर्मग्रन्थोक्तं स्त्रीसंग्रहणप्रकरणं प्रायश्चित्तप्रघट्टकं च पश्येत्तस्य तानि साहजिकतयैव दृष्टिपथमायास्यन्ति । एतादृक्षु दुराचरणप्रसङ्गेष्वेतावत्याः सुदुःसहव्यवस्थाया अवस्थानं शास्त्रदृष्ट्या सुतरां साहजिकं न भवेत्किम् । अस्मच्छास्त्रकाराणां शास्त्राणां वा यदि कस्मिन्नपि विषये सर्वस्मादधिकं कटाक्षः स्यात्तर्हि मानवसमाजे प्रतिसंबं

समाजोपयोगिगुणानां धारणं नैरन्तर्येण कथं स्यादथ चाग्रिमप्रतिवंशपुरुष उत्तरोत्तरं ते गुणा निरतिशयशुद्धाः सन्तस्तत्तत्संघेषु प्रतीयेरन्नित्येतद्विषये दरीदृश्यते। तत्सिद्ध्यर्थं च प्रजासु सर्वथा संकरपरिवर्जनं स्वकर्तव्यतया तैरग्राहि। सत्येवं यादृशैः प्रकारैः संकरप्रजा परिवर्धेत परिपुष्येद्वा तादृशव्यभिचारबलात्कारादीन् प्रति धर्मशुद्धब्राह्मादिविवाहस्वरूपं कथमिव ते दध्युरिति विचारयेः। सोऽयमर्थो यैः कैरस्मद्धर्मशास्त्रीयविषयाणां केवलमुपर्युपरिचरत्वेन विचारः कृतोऽस्ति तेषामपि मनस्यनायासेनैवाऽऽयातुं शक्नुयात्। तथाऽप्यसावीदृग्विदुषां मनसि नाऽऽयातव्य इति महच्चित्रम्। आधुनिकदण्डकेषु याऽपरिपूर्णता दृश्यते सा व्यभिचारादिना दूषितस्त्रीसंबन्धेन तादृशस्त्रीषूत्पन्नापत्यसंबन्धेन वा ज्ञेया। व्यभिचरितादिस्त्रीणां तत्रोत्पन्नापत्यानां वा मानवसमाजे कीदृक् स्थानं कियदादरार्हं वेत्यस्मिन् विषय आधुनिकदण्डकेन नैव सामग्र्येण व्यचारि। एतादृशस्त्रीणां व्यभिचारकर्तृपुरुषसकाशाद् यशोहानिपरिपूरणार्थं कियदपि द्रव्यं नैव लभ्यते। यदि च तां स्त्रियं प्रति विवाहवचनं दत्त्वा दूषिता चेत्तर्ह्येवायशोनिरसनमिति कियद्धनं लभ्यते। तथा तादृशस्त्रियां व्यभिचारेणापत्यमुत्पद्येत चेत्तर्हि तादृशापत्यस्यापि कियत्कालं यावदुदरपूर्तिर्लभ्यते। परं तु समाजमध्ये तादृशानां स्थानाभावात्तेषामुत्तरचरितं सर्वं समाजस्य कलङ्कदाय्येव भवति। एवंप्रकारेण कुकर्मजातपुत्राणामाधुनिकदण्डकेन कियानप्याधारो न दत्त इति हेतोः प्रत्यहं सहस्रशो गर्भपाता भ्रूणहत्या वा जायन्ते। अथ च व्यभिचारिण्यः स्त्रियो गणिकावृत्तिं स्वीकार्याधिकमेव दुरितपङ्के निमज्जन्ति। अथवा स्वदुष्कृतमपलाप्य कुलीनगृहिण्य इव व्यक्तं व्यक्तं समाजे संचरन्त्यधिकाधिकं संकरं प्रवर्तयन्ति च। त इमे दुष्परिणामा मूलत एव प्रतिबन्धिता भवेयुरिति स्त्रीपुरुषयोस्तत्तद्दुष्कृतविषये मोकशिक्षया प्रायश्चित्तेन च सह धर्मशास्त्रेण समाजमध्ये तयोः सुव्यवस्था लापिताऽस्ति। परस्परानुमत्या यौ कन्यापुरुषौ परस्परेण संयुज्येते ताभ्यां परस्परेण सह विवाहः कार्य एव। राक्षसपैशाचविध्योरप्यसौ नियमोऽस्त्येव। किंत्वत्र सर्वत्र स्थले वधूवराभ्यां मिथः सदृशाभ्यामेव भाव्यं नतु विसदृशाभ्याम्। विसदृशवरेण सह धर्षितकन्याविवाहविधानं धर्मशास्त्रं नैव कदाऽपि प्रतिपादयति। विसदृशवरेण सहापि धर्षितकन्याविवाहकरणं तादृशकन्याया भविष्यच्चरिते मनो दत्तं चेदनेकवेलायां युक्ततरं प्रतीयेत। कानीनादिपुत्रोत्पत्तौ सत्यामग्रे समाजमध्ये तेषां व्यवस्था कीदृशी लापनीयेत्येतत्संबन्धेन नियमवर्णने प्रस्तुते सति शास्त्रकारैस्ते पुत्राः केषां कुले कैश्च संरक्षणीयास्तथा तेऽपि

हि समाजोपकारीणि कार्याणि कर्तुं प्रभवेयुरित्येतादृशी दक्षता कैर्गृहीतव्येतत्संबन्धेन विवेचनमकारि । एतेन पुरुषैः पुत्रोत्पत्त्यर्थं स्वस्त्रीभिर्व्यभिचारोऽपि कारयितव्य इति हिन्दुधर्मशास्त्रकाराः प्रतिपादयन्तीत्येवमनुमानं निष्क्रष्टुं सुतरामशक्यं नतरां युक्तं च । यद्ययं प्रकारः शास्त्रीयः स्यात्तर्ह्यौरसपुत्रास्तित्वे सत्यपि कानीनादिपुत्राणां रक्षणसंवर्धनयोः कृतत्वस्योदाहरणानि पुराणेतिहासादिषु नोपलब्धानि जातानि स्युः, परं विश्वामित्रेणौरसपुत्राणां शते विद्यमानेऽपि शुनःशेपस्य दत्तकत्वेन परिग्रहः कृतः प्रसिद्धतरोऽस्ति । अन्यान्यप्येतादृश्यभ्यधिकान्युदाहरणान्यत्रोद्धर्तुं शक्यानि । परंतु कन्यापरिग्रहविधिस्तु धर्मशास्त्रेण हिन्दूनां मूर्धनि नाऽऽरोपित इति सत्यं नु । सत्येवं कण्वमहर्षिभिर्मेनकया परित्यक्तायाः शकुन्तलायाः कन्यात्वेन परिपालनं केन हेतुना कृतं स्यात् ।

धर्मशास्त्रस्य परमरहस्यमीदृशं समस्ति—अनाथं बालकमबला च स्त्रीत्येतद्द्वयं कस्यापि यत्र क्वापि कथमपि लभ्यते चेत्तेन तादृशो बालकस्य स्त्रियाश्च स्वसामर्थ्यानुसारेण पालनं पोषणं संवर्धनं चावश्यं कार्यमेवेत्ययं सर्वसाधारणो धर्मः शास्त्रकारैरभिहितः । तथा स्त्रीदूषणस्यानौरसापत्योत्पादनस्य च यावन्तः प्रकाराः शक्यसंभवास्तावतां तेषां वर्णनं कृत्वा तदन्तर्गतेन केनापि प्रकारेण धर्षितस्त्रिया उत्पन्नापत्यस्य च व्यवस्थालापनमध्ये धर्मग्रन्थानां पूर्णत्वमेवाऽऽलक्ष्यते । एतावता हिन्दुवीर्यैर्विवाहार्थमपत्योत्पादनाय चैकोऽप्यनैतिको मार्गो नैव परित्यक्तोऽभूदित्येवंप्रकारकानुमाननिष्कर्षणं बुद्धिवैयात्यद्योतकमेवेति बोध्यम् ।

आस्तां नाम । एवं निरुक्तप्रकारेण हिन्दुधर्मशास्त्रस्य मूलोद्देशाः के ? तादृशोद्देशानां साफल्याय हिन्दुधर्मशास्त्रकाराणां केषां केषां विचारः करणार्होऽभूत्, त एते सर्वे विषया अनादेर्वेदग्रन्थात्कया विधया प्रादुरभूवन्, धर्मशास्त्रानुसारेण पुत्रस्य स्थानं व्यक्तिजीवितकाले कीदृशमस्ति । पुत्रप्रतिनिधिविधेरावश्यकत्वं किमर्थम् । दत्तक एव कलौ युगे सर्वश्रेष्ठः पुत्रप्रतिनिधिः केन हेतुना ? दत्तकविधिं वर्णयन्तो ग्रन्थास्तत्संबन्धिनः कीदृशान् विषयान् प्रामुख्येण वर्णयन्ति । दत्तकोपरि हिन्दूनां क्षेत्रजादिपुत्रकल्पनोपरि चाऽऽधुनिकविदुषां कथं कथमाक्षेपाः सन्तीत्यादिसंबन्धेनाल्पतोऽस्यां भूमिकायां मया विचाराः प्रस्थापिताः । तेन च मुद्रितसटीकग्रन्थद्वयस्य रहस्यावगमाय वाचकानां बह्वेव साहायकं भवेदिति मनीषां हृदं बद्ध्वा दीर्घायमाणा सेयं भूमिकाऽत्रैव परिसमाप्यते । इति शिवम् ।

शके १८६३ मार्गशीर्षशुक्ल २ बुधवासरे ।

## सप्रअर्था दत्तकमीमांसाया विषयानुक्रमणिका ।

इति समञ्जरीदत्तकमीमांसागतविषयानुक्रमणिका ।

---

ॐ तत्सद्ब्रह्मणे नमः ।

मञ्जरीव्याख्यासहिता श्रीनन्दपण्डितविरचिता

# दत्तकमीमांसा ।

अभिवन्द्य जगद्वन्द्यपदद्वंद्वं विनायकम् ।
पुत्रीकरणमीमांसां कुरुते नन्दपण्डितः ॥ १ ॥

( मञ्जरीव्याख्या )

भारद्वाजं कुलं यस्य शाखा यस्य च बाह्वृचा ।
रमाख्या यस्य माता स शंकरो रङ्गनाथभूः ॥ १ ॥
नत्वा दक्षिणकेदारं ध्यात्वा गुरुपदाम्बुजम् ।
पुत्रीकरणमीमांसां विवृणोति यथामति ॥ २ ॥

इह खल्वत्रजिगमिषूणामवगमाय दत्तकमीमांसां निरचयिषुर्नन्दपण्डितनामा कश्चित्सुधीः प्रेक्षावतां प्रवृत्तिसिद्धये अधिकारिविषयसंबन्धप्रयोजनरूपानुबन्धचतुष्टयं दिक्तः सूचयन् ‘ सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः ’ ( भ. गी. १८ । ४८ ) इति भगवदुक्तेः सर्वस्य कार्यस्यान्तरायग्रस्तत्वं मन्वानः ‘ मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युः ’ ( पा. म. भाष्यं पृ. १०३ ) इति महाभाष्यकारोक्तेः प्रारिप्सितदत्तकविषयकनिबन्धप्रचारपरिसमाप्त्यादिप्रतिबन्धकदुरितविध्वंसनाय मदीयाः शिष्या ग्रन्थारम्भ एवमेव मङ्गलं कुर्युरिति शिष्यशिक्षायै अनुषङ्गतोऽधीषिषूणां प्रचिचिक्षिषूणां मङ्गलाय च स्वेष्टदेवतावन्दनलक्षणं शिष्टपरम्पराप्राप्तं मङ्गलमाचरति—अभिवन्द्येति । वन्दनं कृत्वा । कमभिवन्द्येत्याकाङ्क्षायामाह—जगदिति । स्वर्गमृत्युपातालात्मकस्य जगत्त्रयस्य वन्द्यं नमस्करणीयं चरणयुगुलं यस्य तादृशं विघ्नहरणद्वारा सिद्धिप्रदं गणेशं श्रीसिद्धिविनायकमित्यर्थः । अत्र जगच्छब्देन तत्स्थलोका लक्ष्यन्ते ग्रामः पलायित इतिवत् । किं कुरुत इति पृच्छायामाह—पुत्रीकरणेति । न पुत्रः, अपुत्रः, अपुत्रस्य पुत्रत्वेन संपादनं पुत्रीकरणम् । तस्य मीमांसा ग्राह्याग्राह्यादिविषयको विचारः । ताम् । पुनाति पित्रादीनिति पुत्रः । ‘ पुवो ह्रस्वश्च ’ ( उणा. ४ । १६४ ) इत्युणादिसूत्रेण पूञ् धातोः क्त्रन् प्रत्ययो धातोश्च ह्रस्वः । पुत्र इति तकार-

---

१. एकव्याद्यङ्कगताष्टिप्पण्यः पृथग्ग्रन्थान्ते निवेश्यन्ते ।

द्वयघटितत्वे तु पुन्नाम्नो नरकात्त्रायत इति व्युत्पत्तिर्बोध्या । पुत्रशब्द उपपदे त्रैङ् पालने ' इति धातोः ' आतोऽनुपसर्गे कः ' ( पा. सू. ३।२।३ ) इति कप्रत्यय आलोपः । तथा च पुत्रशब्दनिरुक्तिरुक्ता रामायणे—' पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः पितॄन्यः पाति सर्वतः ' ( २ । १०७ । १२ ) । इति । महाभारतेऽपि— ' पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ' इति । पुत्रशब्दादभूततद्भावे ' कृभ्वस्तियोगे संपद्यकर्तरि च्विः ' ( पा. सू. ५ । ४ । ५० ) इति सूत्रेण च्विप्रत्ययः । येन रूपेण प्रागसतस्तेन रूपेण तस्य भावनं संपादनमभूततद्भावः । ' अस्य च्वौ ' (पा. सू. ७ । ४ । ३२ )इत्यनेनत्वे पुत्रीकरणशब्दः सिध्यति । वस्तुतोऽपुत्रस्य पुत्रत्वेन संपादनं पुत्रीकरणम् । मीमांसा पूज्यविचारः । पूज्यत्वं च विचारस्य श्रुतिस्मृतियुक्त्यनुसंहितत्वाद्बोध्यम् । पुत्रीकरणेत्यनेन ' ज्ञातार्थं ज्ञातसंबन्धं श्रोतुं श्रोता प्रवर्तते । ग्रन्थादौ तेन वक्तव्यः संबन्धः सप्रयोजनः ' इत्युक्तं श्रोतृप्रवृत्त्यौपयिकमधिकार्याद्यनुबन्धचतुष्टयं सूचितम् । तत्र स्वप्रतिपाद्यार्थबोद्धारमलब्ध्वा शास्त्रप्रवृत्त्ययोगादादावधिकार्यपेक्षा । अधिकारिणश्च विषयमन्तरेण प्रवृत्त्यसंभवात्ततो विषयापेक्षा । विषयस्य शक्यप्रतिपाद्यत्वसिद्धये संबन्धापेक्षा । संबन्धस्य च प्रयोजनमन्तरेणापार्थकत्वात्ततः प्रयोजनापेक्षा । अत्र ग्रन्थार्थं जिज्ञासमानोऽधिकारी । पुत्रप्रतिनिधीकरणं विषयः । विषयग्रन्थयोः प्रतिपाद्यप्रतिपादकभावः संबन्धः । पुत्रप्रतिनिधीकरणतत्त्वनिर्णयः प्रयोजनमिति । मीमांसेतिप्रयुञ्जानः पुत्रीकरणस्य श्रुत्याद्यनुसारित्वं समर्थयन्स्वव्याख्यानस्यापि तदनुसारित्वेन सप्रमाणतां श्रद्धेयतां शिष्टसमादरणीयतां च सूचयति । कुरुते निर्मिमीते । रचयतीति यावत् । रचना च पुत्रप्रतिनिधिः केन कदा कस्मै कस्मात् कीदृक् कर्तव्यः कीदृशी च तत्रेतिकर्तव्यतेत्येवमादिज्ञानानुकूलो वाक्यसंदर्भोच्चारणरूपो व्यापारः । इतोऽग्रे ग्रन्थस्य करिष्यमाणत्वेन ' वर्तमानसामीप्ये वर्तमानवद्वा ' ( पा. सू. ३ । ३ । १३१ ) इति वर्तमानसमीपे भविष्यति लट् बोध्यः । कः कुरुत इति प्रश्न आह–नन्देति । नन्दपण्डितनामा कश्चित्सुधीः । यो हि विष्णुस्मृतिटीकाप्रणेतृत्वेन प्रसिद्धः ॥ १ ॥

ननु मन्वादिस्मृतिषु स्मृतिचन्द्रिकाव्यहारमयूखादिषु च दत्तकविधिरभिहितो दृश्यते । किंच तत्रापि तान्येव वचनान्युपजीव्यानीति पूर्वाचार्यप्रणीतदत्तकविषयकनिबन्धैरेव कृतकार्याः प्रेक्षावन्तः स्युः । तथा च किमर्थमयमपूर्वग्रन्था-

केन कीदृक् कदा कस्मै कस्मात्कः क्रियते सुतः ।
विविच्य नोक्तं यत्पूर्वैस्तदशेषमिहोच्यते ॥ २ ॥

तत्राऽऽहात्रिः—

अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥ इति ।

अपुत्रोऽजातपुत्रो मृतपुत्रो वा ।

अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ।

इति शौनकीयात् । वन्ध्यो मृतप्रजो वाऽपीति पाठान्तरम् ।

---

रम्भप्रयास इत्यत्राऽऽह केन कीदृगिति । यद्यपि मन्वादिस्मृतिषु ' अपुत्रेणैव कर्तव्यः, नैकपुत्रेण कर्तव्यम, आपत्काले तु कर्तव्यम, पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च, यस्मात्तस्मात्प्रयत्नतः, ब्राह्मणानां सपिण्डेषु, इत्यादिभिः क्रमेण केनाधिकारिणा, कीदृशः, कस्मै प्रयोजनाय, कस्मात्—हेतोः, कश्च क्रियतामित्येवं पूर्वैः पण्डितैः पुत्रप्रतिनिधिर्विवृतस्तथाऽपि स सामान्यत एव विवृतो न विशेषतः । यथा--अपुत्रेणेत्यपुत्रपदेनासंजातपुत्रो मृतपुत्रो वाऽथवोभावपि ग्राह्यौ। तथा द्वाभ्यामपुत्राभ्यामेकः पुत्रीकर्तुं शक्यो न वा । एकेनैवापुत्रेण निमित्तभेदाद्द्वौ दत्तकौ ग्राह्यौ न वा । दातुः प्रतिग्रहीतुर्वाऽऽपत्तौ सत्यामित्यादिविशेषरूपेण न विवेचितम, मया तु तत्सकलमत्र ग्रन्थे मीमांसापूर्वकं विचारं कृत्वा विभज्योच्यते । अतः सफलोऽयं मेऽन्वर्थाभिधानदत्तकमीमांसाग्रन्थारम्भक्लेश इत्यर्थः ॥२॥

पुत्रीकरणविषयेऽत्रिवचनं प्रमाणत्वेन निर्दिशतीत्याह—तत्रेति । अपुत्रेणैवेति । अविद्यमानः पुत्रो यस्यासावपुत्रः । ' नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः ' ( पा० सू० २ । २ । २४ वा० २ ) इति वार्तिकेन बहुव्रीहिसमासो विद्यमानपदलोपश्च । पुत्रस्याविद्यमानता च द्वेधा संभवति । तदनुत्पत्त्या, उत्पद्य मरणेन च । सोभयविधाऽप्यविशेषादिह गृह्यत इत्याशयेनाऽऽह—अपुत्रः—अजातपुत्रो मृतपुत्रो वेति । तथा चापुत्रेणेत्यत्रात्यन्तनञः सामान्यतोऽभावार्थकत्वं पर्यवस्यति । अत्रैवार्थे शौनकवचनं संवादयति—अपुत्र इति । अत्रापुत्रपदेनाजातपुत्र इत्यर्थो ग्राह्यः । मृतपुत्रशब्दस्य पार्थक्येन ग्रहणात् । अन्यथाऽपुत्रपदेनैवाजातपुत्रमृतपुत्रयोः संग्रहान्मृतपुत्रस्य पृथगुल्लेखो विफलः स्यात् । शौनकीयवचने ' अपुत्रो मृतपुत्रो वा ' इत्यस्य स्थाने ' वन्ध्यो मृतप्रजो वाऽपि ' इति पाठान्तरं दृश्यते ।

तत्र वन्ध्य इत्यस्याजातसंतान इत्यर्थः । ‘ वन्ध्याऽष्टमेऽधिवेत्तव्या ’ ( म० स्मृ० ९ । ८१ ) इत्यत्र वन्ध्याशब्दस्य तथार्थकत्वस्य दर्शनात् । तथा चाजातसंतानस्याप्यजातपुत्रत्वसाम्याद्वन्ध्यशब्देनाजातपुत्र एवोच्यत इति बोध्यम् । एवं चापुत्रेणेत्यत्रापुत्रपदेनासंजातपुत्र एव वा मृतपुत्र एव वा गृह्यत इति नाऽऽग्रहः । तेनासंजातपुत्रस्यापि दत्तकपुत्रग्रहणं शास्त्रविहितं सिध्यति ।

अत्रेदं चिन्त्यते--द्वेधा ह्यसंजातपुत्रता संभवति । साक्षात्परम्परया च । तत्र सत्यपि दारपरिग्रहे प्रतिबन्धकदुरितवशात्पुत्राजननेन जायमानाऽसंजातपुत्रताऽऽद्या । द्वितीया तु दारपरिग्रहाभावादेव तदजननेन भविष्यन्ती । तत्र कीदृश्यामसंजातपुत्रतायां सत्यां दत्तकपुत्रग्रहणं शास्त्रीयं, कीदृश्यां च नो, अथवोभयविधायामपि तस्यां शास्त्रीयमेव तदिति । अत्र केचिच्छिष्टाः--संयोगवद्वियोगस्यापि विशेषावगतिहेतुत्वेनावत्सा धेनुरानीयतामित्यत्रेव संभावितपुत्रजननयोग्यतासामर्थ्याद्दारपरिग्रहपूर्विकायामेवासंजातपुत्रतायां दत्तकग्रहणं शास्त्रीयं भवति, न तु दारपरिग्रहाभावपूर्विकायामसंजातपुत्रतायामित्याहुः । तस्यायं भावः । अवत्सा धेनुरानीयतामित्युक्ते गौरेवाऽऽनीयत इति हि प्रसिद्धम् । अत्र वत्सशब्दो गोबालकस्य वाचकः । ‘ वत्सौ तर्णकवर्षौ द्वौ ’ इत्यमरकोशात् । गोबालकव्यतिरिक्ते वत्सशब्दप्रयोगस्त्वौपचारिकः । धेनुशब्दस्तु धयति सुतानिति व्युत्पत्त्या ‘ धेनुर्गोमात्रके दोग्ध्र्याम् ’ इति हेमाद्रेश्च नवप्रसूतगोमहिषीस्त्र्याद्यनेकार्थस्य वाचकः । एवं सति यद्यप्यनेकार्थकस्यापि धेनुशब्दस्य विशेषार्थवाचकत्वं दृश्यते तद्वत्ससंयोगेन वत्सत्वनिरूपके गोरूपेऽर्थविशेषे धेनुशब्दस्य व्यवस्थापनाद्भवति । तथा च यथा संयोगोऽर्थविशेषावगतिहेतुर्भवति तथा विप्रयोगोऽप्यर्थविशेषावगतिहेतुरिष्यताम् । संयोगपूर्वकत्वाद्विप्रयोगस्य । तथा चावत्सा धेनुरानीयतामित्युक्तेऽपि संभावितवत्ससंयोगिका गौरेवोपस्थाप्यते । गौरन्यत्र महिष्यादौ वत्ससंयोगाभावेन तत्पूर्वकस्य विप्रयोगस्यासंभवात् । तद्वदजातपुत्रेण पुत्रप्रतिनिधिः कर्तव्य इति विहिते संभावितपुत्रजननयोग्यताकः कृतदारपरिग्रह एवोपस्थाप्यते । पुत्रजननयोग्यताया दारपरिग्रहपूर्वकत्वेन तत्रैव संभवात् । एवं च कृतदारपरिग्रहस्यैवासंजातपुत्रस्य दत्तकग्रहणे शास्त्रीयोऽधिकारः, न त्वकृतदारपरिग्रहस्यासंजातपुत्रस्य । तत्र दारपरिग्रहाभावेन तत्पूर्विकायाः पुत्रजननयोग्यतायाः सुतरामसंभवात् । ततश्च न स्नातकब्रह्मचार्यादेर्दत्तकग्रहणेऽधिकार इति वदन्ति । परंतु नैवं स्पष्टं संप्रतितनेषूपलब्धेषु सिन्धुद्वयसंस्कारकौस्तुभस्मृतिचन्द्रिकाप्रभृतिषु दत्तकविषयकेषु

**अपुत्रेणेत्यपुत्रताया निमित्तताश्रवणात्पुत्राकरणे प्रत्यवायोऽपि गम्यते ।**

धर्मशास्त्रनिबन्धेषु क्वाप्युलभ्यते । तस्मान्नेदं समादरणार्हम । प्रत्युताकृतदारपरिग्रहाभ्यां शंकरात्मजवेतालभैरवाभ्यामुभाभ्यामप्येकस्यैव पुत्रीकरणे लिङ्गं कालिकापुराणस्थं वेतालभैरवाख्यानमुदाहरतैतद्ग्रन्थकृता नन्दपण्डितेनाकृतदारपरिग्रहस्यापि दत्तकग्रहणेऽधिकारोऽस्तीति सूचितमित्यग्रे वक्ष्यते । त्रिविधं हि कर्म नित्यनैमित्तिककाम्यभेदात । तत्र निमित्तसंयोगेन विधीयमानं नैमित्तिकम् । तादृशनैमित्तिककर्मविधायको नैमित्तिकविधिः । स च निमित्तसद्भावे स्वबोध्यार्थे आवश्यकप्रवृत्तिसंपादकः । यथा राहूपरागे स्नायादिति । अत्र राहूपरागे सति स्नायादिति वाक्यार्थबोधाद्राहूपरागः स्नानं प्रति निमित्तम् । स्नानं च तन्निमित्तकमवश्यकर्तव्यतया विधीयते । यदि पुना राहूपरागरूपे निमित्त उपस्थिते सति नरो न स्नायात्तदा राहूपरागजन्यः पुरुषनिष्ठोऽशुचित्वाख्यदोषः परिहृतो न भवेदथ च स्नायादिति विहितस्नानाकरणेन प्रत्यवायश्चोत्पद्येत । प्रत्यवायो नामाऽऽगामि पापं क्लेशादिदोषो वा । कृते च स्नाने तेनोत्पन्नदोषः परिह्रियते, उत्पत्स्यमानश्च प्रतिबध्यत इत्युत्पन्नोत्पत्स्यमानदोषद्वयविरहः सिध्यति नैमित्तिकेन । अत एव च ‘ तदनुष्ठाने फलविशेषजनकत्वे सति तदननुष्ठाने प्रत्यवायजनकत्वम् ’ इति नैमित्तिककर्मलक्षणं निबध्नन्ति धर्मशास्त्रनिबन्धकाराः । एवं प्रकृतस्थले ‘ अपुत्रेण पुत्रप्रतिनिधिः कर्तव्यः ’ इत्यत्र सिद्धसाध्यसमभिव्याहारन्यायेनापुत्रतायां सत्यां पुत्रीकरणं कुर्यादिति वाक्यार्थपर्यवसानादपुत्रताया निमित्तत्वं पुत्रीकरणस्य च नैमित्तिकत्वमवगम्यते । एवं सत्यपुत्रतायां निमित्तभूतायां सत्यां यदि पुत्रीकरणं न क्रियेत चेद्विहिताकरणजन्यः प्रत्यवायः स्यादित्याशयवानाह—अपुत्रेणेत्यपुत्रताया इत्यादि प्रत्यवायोऽपि गम्यत इत्यन्तम् ।

नन्वहरहः संध्यामुपासीतेत्यादौ नित्ये न किंचित्फलं श्रूयते । एवं चेदफले न कस्यापि प्रवृत्तिः संभवेत्तथा चोपासीतेति विधिरनर्थकः स्यात । तत्सामर्थ्यात्तत्र तदनुष्ठाने सति प्रत्यवायानुत्पत्तिः फलं कल्प्यते । ततश्च यद्विधाय प्रत्यवायोत्पत्तिः प्रतिषिद्धा तदकरणे ‘ संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ’ इत्युक्तप्रत्यवायोत्पत्तिरित्यर्थबलादेवाऽऽयातीति युक्तं नित्यस्याकरणे प्रत्यवायजनकत्वम् । यद्यपि ‘ धर्मेण पापमपनुदति ’ इति श्रुतेर्नित्यस्य दुरितक्षयाख्यं फलं संभवति तथाऽपि ‘ नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ’ इत्यादिवचनान्नित्यनैमित्तिकोभयसाधारणं तत् । असाधारणं फलं नास्तीत्यत्र तात्पर्यम् । अत एव निर्निमित्तत्वे सत्युपा-

पुत्रोत्पादनविधेर्नित्यतया तल्लोपस्य प्रत्यवायनिमित्ततापर्यवसानात्

न्दुरितक्षयातिरिक्तासाधारणफलाजनकत्वे च सति तदनाचरणे प्रत्यवायजनकं नित्यमिति नित्यकर्मलक्षणं वदन्त्यभियुक्ताः । यत्र यदकरणे दोषप्रतिपादकं वचनं साक्षान्नोपलभ्यते तत्र फलबलकल्प्यं दोषश्रवणमिति ध्येयम् ।

नैमित्तिकस्थले तु राहूपरागप्रयुक्तपुरुषगताशुचित्वाख्यदोषपरिहारः फलं स्नानविधेः संभवतीति कथं नैमित्तिकस्याकरणं प्रत्यवायजनकत्वमित्याशङ्क्य नैमित्तिकस्य नित्यत्वमपीत्यत्र प्रमाणं दर्शयितुमाह—पुत्रोत्पादनविधेरिति । अयं भावः—भिक्षामटेत्यत्राटनेन भिक्षां प्राप्नुहोति भिक्षाटनाविधिवत् 'ऋतुकालाभिगामी स्यात्' ( म० स्मृ० ३ । ४५ ) 'पुत्रार्थी संविशेदार्तवे स्त्रियम' । ( म० स्मृ० ३।४८ ) 'तस्मिन्युग्मासु संविशेत्' ( या० स्मृ० १ । ७९ ) इत्यादिभिर्योऽयमृतौ भार्यागमनेन पुत्रं भावयेदिति पुत्रोत्पादनविधिरभिहितः स किमपूर्वो विधिर्नियमः परिसंख्या वा । उच्यते—न तावदयमपूर्वो विधिः । भार्यागमनस्य रागतः प्राप्तत्वात् । नापि परिसंख्या । स्वार्थहानिपरार्थकल्पनाप्राप्तबाधात्मकदोषत्रयग्रस्तत्वात् । अतोऽयं 'समे यजेतेतिवत्पक्षेऽप्राप्तांशपूरणफलको नियमविधिरिति प्रतिपेदिरे न्यायविदः । तत्र यदा स्वेच्छयैवर्तौ भार्यागमने प्रवर्तते तदेदं वचनमुदास्ते । स्वार्थस्य प्राप्तत्वात् । यदा तु ऋतौ भार्यागमने नैव प्रवर्तते तदा ऋतौ स्त्रियं संविशेदिति स्वार्थं विधत्ते । तदानीं स्वार्थस्याप्राप्तत्वात् । अनृतौ गमननिवृत्तिस्त्वार्थिकी विषमदेशनिवृत्तिवत् । 'ऋतौ भार्याभिगमनेन पुत्रोत्पत्तिसिद्धेरनृतावभिगमनेन पुत्रोत्पादनं यथाशास्त्रं न स्यादिति । अत एव 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति । घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः' इत्यृतावगमने दोषश्रवणं संगच्छते । यदि चात्र परिसंख्या स्यात्तदाऽनृतौ न गच्छेदिति ऋतुभिन्नकाले गमननिषेधनर्तौ गमने न विधिर्नापि प्रतिषेध इति ऋतौ गमनागमनयोर्दोषापादकत्वाभावादृतावगमने दोषश्रवणं न संगच्छेत । तस्मान्न परिसंख्या, किंतु नियम एव । एतेन ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र स्वर्गफलवदृतौ स्त्र्यभिगमनेन पुत्रं भावयेदिति पुत्रोत्पत्तिफलश्रवणेनास्य विधेः काम्यत्वशङ्काऽपि निरस्ता । यतः फलेच्छुं प्रति काम्यस्य विधानात् । ततश्च यः फलेच्छुः स काम्यं कर्म करोति विहितं फलं च लभते । यस्तु फलानिच्छुः स न करोति न च फलं लभते नापि प्रत्यवायं भजते । तं प्रति तद्विधानाभावात् । अत एव 'तदनुष्ठाने

विहितफलजनकत्वे सति तदननुष्ठाने प्रत्यवायाजनकम्' इति काम्यलक्षणं वर्णयन्ति धर्मशास्त्रनिबन्धारः। सत्येवं यद्यस्य पुत्रोत्पादनविधेः काम्यत्वमभिप्रेतं स्यात्तर्ह्यननुष्ठाने प्रत्यवायजनकत्वं श्रूयमाणं न श्रावितं स्यात्। यतश्च श्रावयति तस्मादस्य विधेः काम्यत्वं नैव शक्यशङ्कम्।

नापि नैमित्तिकत्वम्। राहूपराग इव निमित्ताश्रवणात्। किंतु नित्यत्वम्। ऋतुस्नातामित्यकरणे दोषश्रवणात्। अस्तु वाऽकरणे दोषश्रवणात्करणे फलश्रवणाच्च संयोगपृथक्त्वन्यायेन नित्यकाम्योभयरूपत्वम्। न चैवं नित्यकाम्याग्निहोत्रवन्नित्यः प्रयोगो भिन्नः काम्यः प्रयोगश्च भिन्न इति प्रयोगभेदः स्यादिति वाच्यम्। एकस्य कर्मणः कालभेदेन कर्तृभेदेन वा विना द्वौ प्रयोगौ न संभवतः। न चात्र कालभेदः संभवति। नित्यकाम्ययोः पुत्रोत्पादनकर्मणोरुभयोरप्यृतुकाल एव विधानात्। नाप्यत्र कर्तृभेदोऽस्ति। यद्यपि काम्यं परित्यज्य केवलं नित्यमनुष्ठातुं शक्यं तथाऽपि काम्यमनुतिष्ठासुना नित्यस्य परित्यक्तुमशक्यत्वात्। अतः कर्त्रैक्यात्कालैक्याच्च न प्रयोगभेदः संभवति। अत एव नित्यकाम्योभयरूपत्वेऽप्येकादशीव्रतस्य न प्रयोगभेदः. किंतु सकृदेवानुष्ठानमिति कालमाधव एकादशीप्रकरणे सिद्धान्तितं संगच्छते। संगच्छते च पूर्वमीमांसायां षष्ठाध्याये द्वितीयपादे शेषे 'ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्' (पू० मी० ६। २। ३१) इत्यधिकरणे प्रजामुत्पादयेदिति प्रजोत्पादनस्य 'अनुत्पाद्य सुतान्न लोकं गच्छति' इति स्मृत्यकरणे दोषश्रवणात्काम्यत्वनिराकरणेन नित्यत्वस्यैवोपवर्णनम्।

यदि पुनर्नित्यकाम्योभयरूपस्यैकस्यैव कर्मणः कालकर्तृभेदमन्तरेणैव भेदेनानुष्ठानं संभवेत्तदा काम्यत्वनिराकरणमनुपपन्नं स्यात्। एवं ज्योतिष्टोमेन स्वर्गकामो यजेतेति कामसंयोगेनाऽऽम्नातस्यापि 'वसन्ते वसन्ते ज्योतिषा यजेत' इति वीप्साश्रुतेर्नित्यत्वमेव नतु काम्यत्वमिति बोध्यम्। सोऽयं पुत्रोत्पादनविधिः। अयमेव नैयमिकपुत्रोत्पादनविधिरिति स्मृतिषु प्रसिद्धः। तद्वत 'अपुत्रेणैव कर्तव्यः' इत्ययमपि पुत्रोत्पादनविधिः। तत्रैतावान् विशेषः। नैयमिकपुत्रोत्पादनविधिर्मुख्यः। अयं पुनर्मुख्याभावे प्रतिनिधिरिति न्यायेन गौणः। तस्यैतस्य विधेर्नैमित्तिकत्ववन्नित्यत्वमप्यस्ति। नित्यत्वं च वीप्सादिभिरष्टभिः प्रकारैर्भवति। ते चाष्टौ प्रकाराः संग्रहकारेण प्रदर्शिताः—

नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्।

नापुत्रस्य लोकोऽस्तीति पुत्रसामान्याभाव एवालोकताश्रवणात् ।

---

इत्युक्त्याऽतिक्रमे दोषश्रुतेरत्यागचोदनात् ।

फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम् । इति ।

नित्यशब्दादीन्यष्टौ नित्यत्वसाधकानीति तदर्थः । एतदन्यतमेन येन केनापि साधकेन नैमित्तिकस्य सर्वत्र नित्यत्वं भवति । एवं च नैमित्तिकस्य सर्वदा नित्यनैमित्तिकोभयरूपत्वमेव नतु कदाचिदपि केवलनैमित्तिकत्वम् । तत्र नैमित्तिकत्वांशेन फलविशेषजनकत्वं नित्यत्वांशेन च प्रत्यवायजनकत्वं भवति । अत एवांशद्वयघटितमेव नैमित्तिकलक्षणमुक्तं प्राक । यस्य कर्मणो निमित्तं न श्रूयते किंतु केवलं वीप्साद्यष्टकान्यतमेन नित्यत्वं भवति तदेव नित्यमिति नित्यनैमित्तिकयोर्भेदो बोध्यः । अत एव नित्यकर्मलक्षणे निर्निमित्तत्वे सतीत्युक्तं प्राक । प्रकृते नापुत्रस्य लोकोऽनुत्पाद्य सुतानित्यादिना चातिक्रमे दोषश्रुतेर्नित्यत्वम् । तथा च नैमित्तिकपुत्रीकरणविधेरनुष्ठानेऽप्रजस्त्वप्रयुक्तदोषपरिहारः फलं राहूपरागजन्याशुचित्वाख्यदोषपरिहार इव स्नानविधेः । अत एवोक्तं पुत्रदानसंकल्पवाक्ये ' ममाप्रजस्त्वप्रयुक्तदोषपरिहारार्थं पुत्रदानं करिष्ये ' इति प्रयोगकारैः । इदमेव चाप्रजस्त्वप्रयुक्तदोषकल्पनायां प्रमाणम । पुत्राकरणे च प्रत्यवायोत्पत्तिरित्यतपत्स्यमानदोषद्वयराहित्यं सिध्यति नैमित्तिकानुष्ठानेन । एवं च पुत्रोत्पादनविधेः—पुत्रीकरणविधेः । नित्यतया—नैमित्तिकत्वेऽपि नित्यतया । तल्लोपस्य—गौणपुत्रोत्पादनलोपस्य । प्रत्यवायनिमित्ततापर्यवसानात्—अलोकताख्यप्रत्यवायहेतुतातात्पर्यात, इत्यर्थ इति बोध्यम ।

तत्र पुत्राकरणे प्रत्यवायोत्पत्तौ प्रमाणं दर्शयितुमाह—नापुत्रस्येत्यादि । पुत्ररहितस्य लोकप्राप्तिर्न भवतीति तदर्थः । ' अनुत्पाद्य सुतान० अपुत्रस्य न भोक्तव्यम् ' इत्यादिस्मृतयोऽप्यत्रानुसंधेयाः ।

नन्विदमलोकतादिदोषप्रदर्शनं गौणमुख्यन्यायेन मुख्यपुत्राभाववत एव किं न स्यात । तथा च दत्तकपुत्राकरणेऽपि न कश्चित्प्रत्यवायप्रसङ्ग इत्याशङ्कायामाह—पुत्रसामान्याभाव इति । यदि चेयमलोकता मुख्यपुत्राभावविषय एवेष्यत तदा ' नानौरसस्य लोकोऽस्ति ' इत्येव स्पष्टमवक्ष्यत् । किं पुत्रेति सामान्यप्रयोगेणेत्यर्थः । ततश्चेयमलोकता गौणपुत्राभाववतोऽपि गले पततीत्याशयः । यथौरसपुत्रजननेनायं जन्मतः संबद्धात्पितृऋणान्मुच्यते तथा गौणपुत्रजननेनापि मुच्यते । तत्रापि श्रुतौ सामान्यपुत्रपदप्रयोगादेवेति तां श्रुतिं पठति—जायमानो वा इत्यादि । जायमान उत्पद्यमानो ब्राह्मणो द्विजः । ब्राह्मणग्रहणस्य त्रैवर्णिकोपलक्षणात् । जन्मना सहर्षि-

‘ जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी च ’ इत्यत्रापि पुत्रसामान्यस्याऽऽनृण्यहेतुताश्रवणाच्च । अपुत्रेणैवेत्येवकारेण पुत्रवतोऽनधिकारो बोधितः । अनेन

देवपितृऋणैस्त्रिभिः संबद्ध एवाभिजायत इति तदर्थः । इति प्रसिद्धचर्थः । वा इत्यवधारणार्थः । ब्रह्मचर्येण ऋषिभ्य इत्यस्य ब्रह्मचर्येण हेतुनर्षिभ्यो मुच्यत इत्यर्थः । उत्तरत्र ‘ एष वा अनृणो यो ब्रह्मचारी ’ इति ब्रह्मचर्यस्याऽऽनृण्यहेतुताभिधानात् । एवमेव ‘ यज्ञेन देवेभ्यः प्रजया पितृभ्यः ’ इत्यत्रापि बोध्यम् । एवं च-एष वा अनृण इत्यादि पर्यायेऽप्येव व्याख्यानं ज्ञेयम् । यदि चेयमानृण्यहेतुताऽऽरसविषयिण्येव स्यात्तदा गौणमुख्योभयसाधारणार्थप्रतिपादकपुत्रपदप्रयोगस्वारस्य-भङ्गापत्तिः । ततश्चाऽऽनृण्यहेतुताऽपि स्वरसतो गौणपुत्रेऽपि लगतीति भावः ।

अपुत्रेणैवेत्येवकारेणेति । एवेति पुत्रप्रतिनिधीकरणविधानादपुत्रस्य दत्तकग्रहणाधिकारः सिध्यति । एतद्गतैवकारेण च पुत्रवतोऽनधिकारः सूचितः । विशेष्यसंगतैवकारस्यान्ययोगव्यवच्छेदार्थकत्वेन पुत्राभाववतोऽन्यस्मिन्पुत्रवति दत्तकग्रहणाधिकारसंबन्धस्य निवर्तितत्वादिति भावः । तदाह-पुत्रवतोऽनधिकारो बोधित इति ।

नन्विदं वाक्ये अपुत्रेणेत्यत्र पुत्रपदेन मुख्यपुत्र एव गृह्यते, न तु गौणः पुत्रः । गौणपुत्रपदार्थप्रसिद्धिश्चापुत्रेणैवेत्येतद्वाक्यार्थबोधोत्तरमेव । एतद्वाक्यार्थबोधश्चैतद्वाक्यघटकपदार्थबोधाधीनः, अपुत्रेणेत्येतद्घटकपुत्रपदार्थबोधकाले वाक्यार्थबोधस्यैवाभावेन गौणपुत्रस्य तदा सुतरामप्रसिद्धेः । बालंभट्ट्यां पृष्ठे ( ६९२ ) ‘ आतिदेशिकपुत्रत्वस्य पत्न्यामपि सत्त्वेन तदाऽपि तद्ग्रहणानापत्तेश्च ’ इत्युक्तेश्च । अस्यायमर्थः— यदि पुत्रपदेन मुख्यपुत्र इव गौणपुत्रोऽपि गृह्येत तदा गौणपुत्राभाववता पुत्रप्रतिनिधिः कर्तव्य इत्यर्थः स्यात् । ततश्च तदाऽपि--मुख्यपुत्राभावकालेऽपि तद्ग्रहणानापत्तिः । दत्तकग्रहणाप्राप्तिरित्यर्थः । तत्र हेतुमाह आतिदेशिकेत्यादि । आतिदेशिकपुत्रत्वस्य पत्न्यामप्युक्तत्वात्सत्त्वेन तस्य गौणपुत्रत्वेन गौणपुत्राभाववत्त्वस्य वक्तुमशक्यत्वादिति । ‘ अपुत्रा पुत्रवत्पत्नी ’ इत्यतिदेश इत्यपि तत्रैवोक्तम् । तथा च मुख्यपुत्राभाववत एवाधिकारप्रतिपादनात्तत्संगतैवकारेणापि मुख्यपुत्रवत एवानधिकारो बोधित इति । अत एव मिताक्षराटीकायां बालंभट्ट्यां ( बनारससंस्कृतसीरीज ) मुद्रितायां ( ६९२ ) पृष्ठे, अपुत्रेणैवेत्यत्र तु पुत्रपदं मुख्यौरस•

‘ माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ’

परम् । प्रतिनिधिपदसमभिव्याहारेण तथैव लाभात् । ‘ एवंन तादृशपुत्रवतोऽनधिकारः सूचितः ’ इति चोक्तं संगच्छते । ततश्च दत्तके गृहीतेऽपि यदि पुनर्दत्तकान्तरजिघृक्षा स्यात्तदा सोऽपि सिध्यत्येव । गौणपुत्रवत्यधिकारप्रयोजकस्य मुख्यपुत्राभाववत्त्वस्य सत्त्वादनधिकारप्रयोजकस्य मुख्यपुत्रवत्त्वस्यासत्त्वाच्च । ‘ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ’ इति पुत्रबहुत्वप्रशंसकार्थवादानुरोधान्मुख्यपुत्रोत्पादन इव गौणपुत्रोत्पादनेऽपि वारं वारं प्रवृत्तेर्दुर्वारत्वाच्चेति भाति । अत्र ग्रन्थकारसंमत्येपक्षायामौरसदत्तकयोः समवाये धनग्रहणविचारप्रसङ्गे मूलग्रन्थ एवाग्रे ‘ पुत्रोत्पत्तावौरसाभावस्यापि विशेषणत्वात् ’ इत्युक्तिस्वारस्येन तथाऽर्थोऽवगम्यत इति ज्ञेयम् । एवं दत्तके सत्यपि दत्तकान्तरस्वीकरणं युक्तिबलादायातमपि यावद्वाचनिकं प्रमाणमिति न्यायमनुसरन्तो मनुयाज्ञवल्क्यस्मृतिचन्द्रिकाप्रभृतिषु मान्यतमेषु निबन्धेषु स्पष्टमेवमनुपलम्भादनुचितमिदमिति मन्यन्ते मान्यतमाः शिष्टाः । इदानीं लोके क्वापि दत्तकपुत्रद्वयपरिग्रहस्यादृश्यमानत्वात्प्रत्युत तत्र द्वेषदर्शनाच्च । ‘ औरसस्य मुख्यत्वम् ’ ( म० स्मृ० ९ । १६६ ) ‘ दत्तकस्य तु गौणत्वम् ’ ( म० स्मृ० ९ । १८० ) इति स्मृतेर्ज्ञेयम् । अनेन–मुख्यपुत्रवतोऽनधिकारबोधनेन ।

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ’ ( म०स्मृ०९।१६८ )

प्रसङ्गादस्य श्लोकस्य प्रतिपदं व्याख्यानं क्रियते । अत्र दानक्रियाकर्तृत्वे त्रयः कल्पाः । मातापितराबुभौ समुच्चित्य कर्ताराविति मातापित्रोः समुच्चयः । केवला वा माता कर्त्री केवलः पिता वा कर्तेति । तत्र ‘ शुक्रशोणितसंभवः पुत्रो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इति वचनान्मातापित्रोः समुच्चयः । मातापितृभ्यामुभाभ्यां परस्परानुमत्या दत्त इत्यर्थः । वाशब्दस्तयोर्मातापित्रोरन्यतरग्रहणेन विकल्पार्थः । तथा च केवलमात्रा केवलपित्रा वा दत्त इति त्रयः कल्पाः । एवं च मातापितृभ्याम्, अन्यतराभावेऽन्यतरेण वा विधिपूर्वकं दत्तः पुत्रो दत्तको ज्ञेय इति यावत् । अत्र मातापितरौ मुख्यौ जनकावेव गृह्येते, नतु गौणौ पालकौ । गौणमातापित्रोः प्रसिद्धिर्हि माता पिता वेत्यादिवाक्यार्थबोधानन्तरमेव । एतद्वाक्यार्थबोधश्चैतद्वाक्यघटकयावत्पदपदार्थबोधोत्तरमेवेति मातापितृपदार्थबोधकाले वाक्यार्थबोधस्यैवाभावेन गौणमातापित्रोस्तदानीं सुतरामप्रसिद्धेः ।

पश्चात्तु गौणमातापित्रोरुपस्थितावपि प्रथममुपस्थितौ मुख्यौ मातापितरौ गृहीत्वा तयोर्दानक्रियायां कर्तृत्वेनान्वये जातेऽधुना दानक्रियाकर्तृत्वेनाऽऽकाङ्क्षाया अभावेनोपस्थितावपि तौ गौणौ वरातादनन्तरमागताश्ववन्नैष्फल्यान्नान्वीत. । तथा च मुख्ययोरर्थाज्जनकयोरेव मातापित्रोः पुत्रदातृत्वमभिहितं भवति । तेन च पालकयोर्मातापित्रोः पितामहादेर्वा पुत्रदानाधिकारो नास्तीति सूचितम् । अत एव पालितस्य पुत्रस्यान्यस्मै दानं पालकमातापितृभ्यां, पितामहेन वा पौत्रस्यान्यस्मै दानं नैव कर्तव्यं भवति । आद्भिरिति । दत्तकविधेरुपलक्षणम् । वसिष्ठशौनकाद्युक्तविधिनोदकपूर्वकं दत्त इत्यर्थः । अनेन विधिपूर्वकमपरिगृहीतस्य दत्तकपुत्रत्वं नास्तीति सूचितम् । अत एव वृद्धमनुः—' अविधाय विधानं यः परिगृह्णाति पुत्रकम् । विवाहविधिभाजं तं न कुर्याद्धनभाजनम् ' इति । परिग्रहविधिं विना गृहीतस्य विवाहमात्रं कार्यं नतु धनदानं किंतु तत्र पत्न्यादय एव धनभाजः पिण्डादाश्च । विधिं विना तस्य पुत्रत्वानुत्पादादित्युचितम् । पुत्रमिति । पुत्रत्वं नाम जन्यपुंस्त्वम् । तद्विशिष्टस्तामित्यर्थः । तेन कन्याया दानं न भवति । तत्र पुंस्त्वाभावात् । एतेन ' कर्तव्यः पुत्रसंग्रहः ' इति वाक्ये पुत्रपदं पुत्रपुत्रीसाधारणार्थकम् ' पुमान् पुत्रो जायते ' इति श्रुतौ वृत्तिकारेण तथोक्तेः । तेन पुत्र्या अपि स्वीकार उक्तविधिना कार्यः । दानप्रतिग्रहविधिवाक्येषूद्देश्यविशेषणपुंस्त्वाविवक्षणात् । इतिहासपुराणादौ कुन्त्या दत्तकत्वोक्तेश्च । किंच ' क्त्रेर्मम्नित्यम् ' ( पा० सू० ४ । ४ । २० ) इति मप्प्रत्ययान्तो दत्रिमशब्दो दानकर्मत्वाविशेषाद्गरायान्यस्मै वा दत्तां कन्यामप्याचष्ट इति संज्ञासंज्ञिभावनिर्वाह इति परास्तम् ।

' क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ' इति मनुना दत्तकस्य क्रियालोपभयेनौरसप्रतिनिधित्वोक्तेरौरस इव प्रतिनिधिष्वपि पुंस्त्वविवक्षाया आवश्यकत्वात् । अन्यथौरसेऽपि पुंस्त्वाविवक्षणापत्त्यौरसकन्यायाश्च प्रथममौर्ध्वदेहिकाधिकारप्रसङ्गेन बहुव्याकोपः स्यात् । कुन्त्याश्च दत्तकत्वं विधिं विनैव स्यात् । कथम्—

आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।
धर्मेण विधिना दानमसगोत्रेऽपि युज्यते ॥

इति वचनात् । अत्र सुवर्णशब्दः प्रलोभनोपायपरः । तथा च पालकपित्रा

स्नेहादिना प्रलोभितः कुन्त्या जनकपिता स्वपुत्रीं कस्मैचिद्राज्ञे दत्तवान् इत्येवं कल्पनयेतिहासादिषु श्रुतं कुन्त्या दत्तकत्वमुपपद्यते । तथा च विधिनैव कुन्ती दत्तेत्यत्र न किंचित्प्रमाणम् ।

ननूक्तप्रकारेण विधिं विनैव दानमस्तु । तथाऽपि विधिं विना निरुक्तदान-प्रकारेणैव कुन्ती दत्तेत्यत्र तवापि किं प्रमाणम । ‘ कर्तव्यः पुत्रसंग्रहः ’ इत्यादिषु पुत्रदानविधिपरेषु वचनेषु पुत्रशब्दप्रवृत्तिनिमित्तस्य जन्यपुंस्त्वस्य विवक्षाया आवश्यकत्वेन कन्याया दत्तकविधिना दानं सुतरामसंभवि । ततश्च पुराणादौ श्रुतं कुन्त्या दत्तकत्वमनुपपद्यमानं सत्पीनत्वं रात्रिभोजनमिव निरुक्तवचनाभिहितलौकिक-दानप्रकारमेव कल्पयत्स्वात्मानमासादयेत । एवं च पुराणादौ वर्ण्यमानं कुन्त्या दत्तकत्वमस्मदुपवर्णितरीत्यैव निर्वाह्यमित्यत्रान्यथानुपपत्तिरेव प्रमाणमित्याशयः । न च तत्पुंस्त्वमविवक्षितमिति वाच्यम् । दत्तोत्तरत्वात । कुन्त्या दत्तकविधिनैव दानं कृतमित्याग्रहश्चेत्कुन्त्याः पित्रादीनां राजर्षित्वादृषीणां चाधिकारवैशेष्यात्तत्तथाऽस्तु । किंतु नैतावताऽस्मादृशैर्दत्तकविधिना कन्यादानं कर्तुमर्हम ।

‘ ऋष्युक्तमेव कर्तव्यं नतु तत्कृतमाचरेत ’

इत्यृषिकृतेरनृषिभिरनुष्ठानस्य निषिद्धत्वादृष्युक्तस्यैवानुष्ठेयत्वाभिधानत्वाच्च । ‘ पुमान् पुत्रो जायते ’ इति श्रुतौ च पुंशब्दवैयर्थ्यपरिहाराय वृत्तिकारेण तथोक्तं न च बुधैस्तत्र निर्भरः कार्यः । किंच ‘ स ज्ञेयो दत्रिमः सुतः ’ इति सुतशब्देन कन्याया अव्यावृत्तौ प्रकृते सुतशब्दस्य नपुंसकापत्ये लक्षणा कर्तव्या स्यात् । मम तु पुंस्त्वविशिष्टापत्यार्थलाभेन नपुंसकस्येव कन्याया अपि व्यावृत्तिः सिध्यति । एवं च दत्तकविधिना कन्यादानं नैव शास्त्रसंमतमित्यलं पल्लवितेन ।

अत्र पुत्रपदमपि मुख्यपुत्रार्थकमेव न गौणपुत्रार्थकम् । पुत्रपदार्थबोधकाले पूर्वोक्तरीत्या गौणपुत्रस्य सुतरामप्रसिद्धेः । अत एव दत्तकस्य पुत्रस्य पुनरन्यस्मै दानं नैव भवति । सदृशमिति । प्रतिग्रहीतृसवर्णम् । सजातीयमिति यावत । कौस्तुभे तु त्रयाणां वर्णानां ब्राह्मणत्वादिना तत्रापि देशभेदप्रयुक्तगुर्जरत्वादिजात्या च समानजातीयमित्युक्तम् । प्रीतिसंयुक्तमिति । इदं देयपुत्रविशेषणम् । पित्रादिना स्वदाने निश्चिते तत्र प्रीत्याऽनुमतिं ददानम् । परस्य पुत्रीभवनं यस्यानुमतमस्ति तादृशमिति यावत् । ‘ विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः । दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत् ’ इति कात्यायनेनानिच्छोरदेयत्वाभिधानात् । स ज्ञेयो दत्त्रिमः सुत इति । अत्र स इति उद्देश्यसमर्पकम् । दत्त्रिम इति च विधेयसमर्पकम्

इत्यापत्पदमपि मानवीयं व्याख्यातम्। व्याख्यातं चापरार्केणापि तथा—'आपदि प्रतिग्रहीतुरपुत्रत्वे' इति। यद्वाऽऽपदि दुर्भिक्षादौ। आपद्ग्रहणादनापदि न देयः। दातुरयं प्रतिषेध इति मिताक्षरा। तथा च कात्यायनः—

आपत्काले तु कर्तव्यं दानं विक्रय एव वा।
अन्यथा न प्रकर्तव्यमिति शास्त्रविनिश्चयः॥ इति।

---

स इति तच्छब्देन पुत्रस्य परामर्शः। स च 'माता पिता वा दद्याताम्' इत्यादिचरणत्रयोक्तयावद्विशेषणविशिष्टस्य। 'अष्टवर्षं ब्राह्मणमुपनयीत। तमध्यापयीत' इत्यत्र तच्छब्देनाष्टवर्षत्वब्राह्मणत्वपुंस्त्वोपनयनसंस्कारविशिष्टस्य परामर्शवत्। तथा च मातापितृकर्तृकप्रीतिजलगुणकापन्निमित्तकदानकर्मीभूतसजातीयपुंस्त्वविशिष्टो यः सुतः स दत्रिमो दत्तकः पुत्रो ज्ञेय इत्यर्थः। अत्र पुंस्त्वेतिविशेषणश्रवणेन न स्त्रियो दत्तकत्वप्रसक्तिरिति।

आपदीत्यस्य प्रतिग्रहीतुरन्यपुत्राभावरूपायामापत्तावित्यर्थः। तत्रैव प्रमाणं दर्शयति—व्याख्यातं चेत्यादि। ननु दद्यातामिति दानक्रियाकाङ्क्षितोऽत एवाश्रुतो यः संप्रदानप्रतिग्रहीता तेन सहाऽऽपदीत्यस्यान्वयकरणापेक्षया प्रत्यक्षश्रुतदानक्रियाकर्तृमातापितृभ्यामेवान्वयो युक्त इत्याह—यद्वेति। तथा च मातापित्रोरापदि दुर्भिक्षादिरूपायामापत्तौ सत्यामित्यर्थो ज्ञेयः। एतदाशयेनैव 'अक्षतायां क्षतायां वा०' (याज्ञ० स्मृ० २। १३०) इति श्लोकव्याख्यानावसरे 'माता पिता वा दद्याताम०' (मनुस्मृ० ९। १६८) इति मनुस्मृतिस्थं प्रकृतं श्लोकमुदाहृत्य तत्रस्थापद्ग्रहणस्य प्रयोजनमेवमाह मिताक्षरायां विज्ञानेश्वरः— 'आपद्ग्रहणादनापदि न देयः। दातुरयं प्रतिषेधः' इति। एतेनाऽऽपदीत्यस्य दानक्रियाकर्त्रैवान्वयोऽङ्गीकृतो विज्ञानेश्वरेणेति स्पष्टमेव प्रतीयते।

आपदीत्यस्य दात्रैव सहान्वये प्रमाणं प्रदर्शयन्नाह—तथा चेति। आपत्काले त्विति। तुशब्दोऽवधारणार्थकः। 'शूद्रैस्तु क्रियते सुतः' इत्यत्रत्यतुशब्दवत्। दुर्भिक्षाद्यापत्काल एव पुत्रस्य दानं विक्रयोऽपि वा कर्तव्य इत्यर्थः। अन्यथा—आपत्तावसत्यामनापदि न प्रवर्तेत। पुत्रो न देय इत्यर्थः। अयं च प्रतिषेधो दातुरेव पुरुषार्थ इति प्राञ्चः। पुरुषार्थो नाम पुरुषप्रीतये विधीयमानोऽर्थः। दुर्भिक्षाद्यभावरूपानापदवस्थायां पुत्रदाननिषेधपरिपालनेनादृष्टोत्पत्तौ सत्यां कृतार्थोऽस्मीति

पुरुषस्य प्रीतिरुत्पद्यतेऽतोऽयं निषेधोऽदृष्टोत्पत्तिद्वारा पुरुषप्रीतये भवतीत्ययं निषेधः पुरुषार्थ इत्युच्यते । तदुक्तं जैमिनीये चतुर्थाध्याये प्रथमपादे द्वितीयाधिकरणे— 'यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात्' ( जै० ४ । १ । २ ) इति । अस्य च निषेधस्य वाक्यरूपप्रमाणाददृष्टार्थताऽवगम्यते । वाक्यं च 'पदान्तरसमभिव्याहारः' इति मीमांसापरिभाषायामुक्तम् । तदर्थस्तु शेषशेषिणोः सहोच्चारणमिति यावत् । यथा 'यस्य पर्णमयी जुहूर्भवति' इत्यत्र पर्णताजुह्वोः शेषशेषिणोरङ्गाङ्गिनोः सहोच्चारणं विद्यते । पर्णः पलाशवृक्षः । 'पलाशे किंशुकः पर्णः' इत्यमरोक्तेः । स च पर्णः शेषोऽङ्गम् । तद्विकारो जुहूः पात्रविशेषः शेष्यङ्गीत्यर्थः । सोऽसावङ्गाङ्गिभावः पर्णताजुह्वोः समभिव्याहारात्मकवाक्यप्रमाणेनावगतो भवति । तथा च पलाशकाष्ठेन जुहूं निर्मिमीयादिति 'पर्णमयी जुहूर्भवति' इत्यस्यार्थः पर्यवस्यति । ननु काष्ठान्तरेणापि जुहूनिर्माणसंभवात्पलाशकाष्ठेनैव जुहूनिर्माणविधाने विशेषादर्शनाच्च पर्णकाष्ठस्य जुह्वङ्गत्वाभिधानं विफलमिति चेन्मैवं वादीः । पर्णमयी जुहूर्भवतीत्यस्य न केवलं पर्णकाष्ठेन जुहूं निर्मिमीयादित्येतावानेवार्थः । किंतु पर्णकाष्ठेन जुह्वपूर्वं भावयेदित्यर्थः । जुहूशब्दस्य जुह्वपूर्वे लक्षणाऽऽश्रीयत इति यावत् । सा च लक्षणा, पदान्तरसमभिव्याहारात्मकवाक्यप्रमाणेन पर्णताया यज्जुह्वङ्गत्वमभिहितं तत्सामर्थ्यात्क्रियते । अन्यथा जुह्वङ्गत्वाभिधानं व्यर्थं स्यात् । लक्षणायामाश्रीयमाणायां त्वङ्गत्वाभिधानस्य साफल्यं पर्णकाष्ठेन जुहूनिर्माणविधानस्यादृष्टार्थत्वं चेत्युभयं सिध्यति । तद्वत्प्रकृतस्थले 'अनापदि पुत्रो न देयः' इत्यत्र दुर्भिक्षाद्यभावरूपानापदवस्था पुत्रदाननिषेधश्चेत्यनयोरङ्गाङ्गिभावः पदान्तरसमभिव्याहारात्मकवाक्यप्रमाणेनावगम्यते । अनापदवस्था शेषोऽङ्गम् । पुत्रदाननिषेधश्च शेष्यङ्गीति बोध्यम् । सत्येवमवस्थान्तरेऽपि पुत्रप्रदानवर्जनसंभवादनापद्येव पुत्रप्रदानवर्जनविधाने विशेषादर्शनाच्चानापदो निषेधाङ्गत्वाभिधानं व्यर्थीभूय पुत्रदाननिषेधजन्यापूर्वं लक्षयति । तथा च दुर्भिक्षाद्यापत्त्यभावोपलक्षितावस्थया पुत्रदाननिषेधजन्यापूर्वं भावयेदिति 'अनापदि पुत्रो न देयः' इत्यस्य पर्यवसानादस्य निषेधस्य वाक्यप्रमाणाददृष्टार्थता सिध्यतीत्यर्थः । तथा च कात्यायनेनाऽऽपद्येव कर्तव्यमित्येवकारमभिधायान्यथा न कर्तव्यमित्यनापदि पुत्रदाननिषेधः स्पष्टमभिहितः । तत्र केनचित्कारणेन निषेधमुल्लङ्घ्यानापदि पुत्रदाने कृते तत्र निषेधजन्यापूर्वाभावेन तन्मूलकस्य दत्तकविधिजन्यकार्यविशेषप्रयोजकदत्त-

मनुरपि—

अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः।
पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च॥
अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्। इति।

यत्तु विश्वामित्रादीनां पुत्रवतामपि देवरातादिपुत्रपरिग्रहलिङ्गदर्शनं तदपुत्रेणैवेत्यादिश्रुतिविरोधाच्छ्वजाघनीभक्षणादिवन्न श्रुत्यनुमापकमिति ध्येयम्।

---

कत्वरूपादृष्टस्याप्यसिद्धिः। निषेधजन्यापूर्वसहकृतस्यैव पुत्रदानस्य प्रतिग्रहद्वारा दत्तकविधिजन्यादृष्टविशेषात्मकपुत्रत्वोत्पत्तिप्रयोजकत्वात्। मन्त्रैरेवार्थः स्मर्तव्य इत्येवं नियमादृष्टसहकृतस्यैवार्थस्मरणस्य कर्मानुष्ठानजन्यफलोत्पत्तिप्रयोजकत्ववत्। किंचाऽऽपत्काले तु कर्तव्यमित्युक्तत्वादापन्निमित्तकं पुत्रदानं विज्ञायते। नैमित्तिके कर्मणि च निमित्तवत एवाधिकारः। तथा चानापदि दाने दानस्वरूपासिद्धिः। दत्ताप्रदानिके भर्त्राद्यनुमतिं विना स्त्र्यादिकृते दाने दानस्वरूपासिद्धिवत्। तथा 'अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति। तावुभौ चोरवच्छास्यौ दण्ड्यौ चोत्तमसाहसम्' इतिवचनादनापदि दत्ते पुत्रे प्रतिग्रहीतुः स्वत्वोत्पत्त्यसिद्धिश्चेत्यनापदि दत्ते पुत्रे दत्तकपुत्रत्वं न सिध्यति। एतेन 'विवाहे रोगिण्यादिनिषेधातिक्रमे दृष्टविरोध एव भार्यात्वं तूत्पद्यत एव' इत्युक्तमपास्तमिति केचिदाहुः। अन्ये त्वन्यथा न प्रवर्तेतेति निषेधश्रवणाद्दुर्भिक्षादिकामापत्तिमन्तरेण पुत्रदाने कृते दातुरधर्मोत्पत्तिमात्रम्। निषेधोल्लङ्घनेऽधर्मोत्पत्तेरवश्यंभावात्। दानं तु सिध्यत्येव। प्रतिग्रहीतुः पुनरधर्मोत्पत्तिमात्रमपि नास्ति। दातुर्दोषश्रवणात्। तथा चानापदि दत्ते पुत्रे दत्तकत्वं स्वत्वं चोत्पद्यत एव। अत एव च विवाहे रोगिण्यादिनिषेधातिक्रमे दृष्टविरोध एव भार्यात्वं तूत्पद्यत एवेति मिताक्षरायामुक्तं संगच्छत इति वदन्ति। मनुरप्यपुत्रेण पुत्रग्रहणं पुत्रिकाकरणं च कर्तव्यमित्याह—अपुत्रेण सुत इति।

यद्यपि 'शुनःशेपो विश्वामित्रस्याङ्कमाससाद स होवाच जागर्तः सोऽयं ऋषिः पुनर्मे पुत्रं देहीति, नेति होवाच विश्वामित्रो देवा वा मह्यमरासतेति, स ह देवरातो विश्वामित्र आस' इति बह्वृचब्राह्मणे पुत्रवतामपि विश्वामित्रादीनां देवरातादेः पुत्रत्वेन परिग्रहस्य वर्णनात्पुत्रवतोऽपि पुत्रान्तरपरिग्रहे लिङ्गं दृश्यते, तथाऽपि न तल्लिङ्गं तादृशीं श्रुतिमनुमातुं समर्थमित्याशयेनाऽऽह—यत्त्विति। श्रुति-

विरोधादिति । ' अपुत्रेणैव कर्तव्यः ' इत्यत्रिस्मृत्याऽनुमिता या ' अपुत्रः पुत्रान्तरमाददीत ' इत्यार्थिका श्रुतिस्तया लिङ्गस्य बाधितत्वादित्यर्थः । अयं भावः—वेदमूलकत्वेन स्मृतीनां प्रामाण्यस्य सिद्धान्तितत्वाद्यत्र स्मृतिमूलभूता श्रुतिः प्रत्यक्षतो नोपलभ्यते तत्र श्रुतिरनुमीयते । सा च ' अपुत्रः पुत्रान्तरमाददीत ' इत्यर्थिका । सर्वभावानां सामर्थ्यं लिङ्गमित्युच्यते । लिङ्गं हि कंचिदर्थं बोधयति नतु विधत्ते । विधिबोधकशब्दाभावे तन्न किंचिद्विधातुं शक्नुयात् । अतस्तत्र विधिबोधकः शब्दः कल्प्यो भवति । यावच्च तेन विधिबोधिका श्रुतिः ' सपुत्रः पुत्रान्तरं परिगृह्णीत ' इत्येवमर्थिका कल्प्यते तावदनुमितया श्रुत्याऽपुत्रं प्रति पुत्रान्तरपरिग्रहस्य विधानाल्लिङ्गं बाधितं नाम व्याहतशक्तिकं भवति । व्याहतशक्तिकं च तन्न विधायिकां श्रुतिं कल्पयितुं प्रभवति । ततश्च विधायकश्रुत्यभावेन पुत्रवता पुत्रान्तरकरणं न श्रुतिविहितं किंत्वपुत्रेणैव पुत्रान्तरकरणमेव श्रुतिविहितं भवतीत्याशयः । तदुक्तम्—' धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् ' ( पू० मी० १ । ३ । १ ) इति । धर्मस्य ' चोदनालक्षणोऽर्थो धर्मः ' ( पू० मी० १ । १ । १ ) इति लक्षणलक्षितस्य वेदमूलकत्वादवेदमूलकं यस्य वेदो मूलं न भवति तदनपेक्ष्यमनादरणीयमिति तदर्थः । लिङ्गस्य विधात्र्याः श्रुतेरननुमापकत्वे दृष्टान्तमाह—श्वजाघनीभक्षणादिवदिति । ' क्षुधार्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम् ' ( म० स्मृ० १० । १०८ ) । ऋषिर्विश्वामित्रो धर्माधर्मज्ञः क्षुत्पीडितः कुक्कुरजघनमांसं भक्षितुमध्यवसितवानिति तदर्थः । इयं स्मृतिः स्वमूलभूतां श्रुतिं नानुमापयितुं प्रभवति । अभक्ष्यभक्षणप्रवृत्तौ हेतोर्दृश्यमानत्वात् । यतो विश्वामित्रः क्षुधार्तः, अतो धर्मज्ञोऽप्यकार्यकरणे प्रवृत्त इति बलवत्क्षुत्पीडामूलिकेयं स्मृतिरित्यपि संभाव्यते । अतो न वेदमूलिकेयम् । तदुक्तम्—' हेतुदर्शनाच्च ' ( पू० मी० १ । ३ । ४ ) इति । वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति । वैसर्जनहोमकाले धृतं वस्त्रमध्वर्युणा गृह्यते । इयं स्मृतिर्न स्वमूलभूतं वेदमनुमिनोति । कुतः । कदाचिदध्वर्युर्लोभादेतद्वासो जग्राह । तन्मूलैवैषा स्मृतिरित्यपि कल्पना संभवति । दक्षिणया परिक्रीतानामृत्विजां लोभदर्शनात् । अतो न मूलश्रुतिः कल्पयितुं शक्यत इति तदर्थः । यथेयं मनुस्मृतिः क्षुत्पीडामूलकत्वान्मूलभूतं वेदमनुमापयितुमसमर्था तद्वत्पुत्रवतो देवरातादिपुत्रग्रहणलक्षणं लिङ्गमपि बाधितत्वाच्छ्रुतिं कल्पयितुमसमर्थमित्यर्थः । ननु लिङ्गं प्रत्यक्षश्रुतश्रुत्युपलब्धत्वात्प्रत्यक्षम् । श्रुतिस्त्वपुत्रेणैव पुत्रग्रहणलक्षणाऽनुमिता । प्रत्यक्षस्य सर्वतो

न च स्मार्ता श्रुतिः श्रौतस्य लिङ्गस्य न बाधिकेति वाच्यम् । नापुत्रस्य लोकोऽस्तीत्यादिप्रत्यक्षश्रुत्युपष्टम्भेन तस्या एव बलवत्त्वात् । अथापि स्मार्तश्रुतित: श्रौतलिङ्गबलवत्त्व एव श्रीमतामाग्रहातिशयश्चेत्तर्हि पुत्रानुज्ञया पुत्रवतोऽप्यस्तु पुत्रान्तरपरिग्रहाधिकारः ।

यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम् ।
पुरस्तात्सर्वं कुर्महे त्वामन्वञ्चो वयं स्म हि ॥

---

बलिष्ठत्वादनुमानस्य च तदपेक्षया दुर्बलत्वात्कथं श्रुत्या लिङ्गस्य बाध इत्याशङ्कते— न चेति । स्मार्ता श्रुतिरिति । स्मृत्याऽनुमिता श्रुतिरिति तदर्थः । श्रौतस्य लिङ्गस्येति । प्रत्यक्षबह्वृचब्राह्मणोक्तस्य सपुत्रस्य पुत्रान्तरपरिग्रहलक्षणस्य लिङ्गस्येत्यर्थः । तस्या एव बलवत्त्वादिति । ' नापुत्रस्य लोकोऽस्ति ' इति प्रत्यक्षश्रुतां श्रुतिं मूलत्वेनावलम्ब्य लब्धात्मिकाया अनुमितश्रुतेरपि प्रत्यक्षत्वाङ्गीकारेण प्रत्यक्षयोः श्रुतिलिङ्गयोर्मध्ये श्रुतेरेव प्रबलत्वाल्लिङ्गस्य बाधः सुकर इति भावः । उपष्टम्भेनेति । उपष्टम्भ आधारः । मूलमिति यावत । नापुत्रस्येत्यादिप्रत्यक्षश्रुतिमूलकत्वेनेत्यर्थः ।

नन्वेवं धर्मविरुद्धाचरणेन विश्वामित्रः प्रत्यवेयादिति चेन्मैवं मंस्थाः । तदुक्तमापस्तम्बीयधर्मसूत्रे— ' दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषाम् । तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ' इति । तथा चर्षीणां तादृशमाचारं दृष्ट्वा यद्यन्यस्तमाचारमनुसरेत्तर्हि स प्रत्यवेयादेव । तदप्युक्तं तत्रैव—' तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः ' इति । अन्यत्रापि— ' कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा । नाऽऽचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् ' इति ।

नन्वनुमितश्रुतेः प्रत्यक्षत्वं न साक्षात्, किंतु प्रत्यक्षश्रुतिमूलकत्वात्परम्परयेति गौणं तत् । लिङ्गस्य तु साक्षादिति मुख्यं प्रत्यक्षत्वम् । गौणेन च मुख्यस्य बाधो दुर्वच इति स्मार्तश्रुत्या श्रौतलिङ्गस्य बाधोऽनुचित इत्याशयेनाऽऽह— अथापि स्मार्तश्रुतित इति । तथा च प्रत्युत लिङ्गेनैव श्रुतिबाधो युक्त एतादृशस्थल इत्याग्रहवानाह—पुत्रानुज्ञयेति । औरसपुत्रानुज्ञया पुत्रान्तरपरिग्रहाधिकारोऽस्त्वित्यर्थः । तत्रैव प्रमाणं प्रदर्शयति—यन्नः पितेति । नोऽस्माकं पिता जनको यत्संजानीतेऽनुमन्यते तस्मिंस्तिष्ठामहे पित्रनुमते वर्तामहे । पित्रनुमतार्थाङ्गीकरणं प्रतिजानीमह इत्यर्थः । तिष्ठामह इत्यत्राऽऽङोऽभावेऽपि छान्दसत्वात् ' आङः प्रतिज्ञायामुपसंख्यानम् ' ( पा. म. १ । ३ । २२ वा० ) इति वार्तिकेन प्रतिज्ञायामात्मनेपदं बोध्यम् । पित्रनुमतमेवार्थं निर्दिशन्ति—सर्वं वयं त्वां पुरस्तादस्माकं पालयितारं ज्येष्ठं कुर्महे । अत्र च वयमन्वञ्चोऽनुगताः कनिष्ठाः स्म भवामेति तदर्थरूपाल्लिङ्गादित्यर्थः ।

इति श्रौतलिङ्गात् । न चेदं ज्येष्ठीकरणे लिङ्गं न पुत्रीकरण इति वाच्यम् । तस्य तदभावेनैवासिद्धेरित्यलं पल्लवितेन ।

अपुत्रेणेति । पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणम् ।

पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्त्यमश्नुते ।

अथ पुत्रस्य पौत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम् ।

इति पौत्रादिना विशिष्टलोकप्राप्तिप्रतिपादनेन नापुत्रस्य लोकोऽस्तीत्याद्यलोकतापरिहारात् । न च पिण्डोदकदानार्थं तत्करणमिति वाच्यम् ।

'पुत्रः पौत्रः प्रपौत्रश्च तद्वद्वा भ्रातृसंततिः'

इत्यनेन तयोरेव तदधिकारावगमात् ।

---

अपत्यं तु ममैवैकं कुले महति भारत ।

अपुत्रमेकपुत्रत्वमित्याहुर्धर्मवादिनः ।

चक्षुरेकं च पुत्रश्च अस्ति नास्ति च भारत ।

चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः ।

अनित्यतां च मर्त्यानां ज्ञात्वा शोचामि पुत्रक ।

संतानस्याविनाशं तु कामये भद्रमस्तु ते ॥

इति बाळंभट्टयां पृष्ठे ( ८५४ ) भारतोक्तिरपि तत्र प्रमाणं बोध्यम् । अनेनापि न्यायेन दत्तकपुत्रवतो दत्तकान्तरग्रहणाधिकारः सुतरामवर्जनीय एवेति बोध्यम् ।

नन्विदं ज्येष्ठीकरणे लिङ्गं न पुनः पुत्रीकरण इत्याशङ्कयाऽऽह—तस्येति । ज्येष्ठीकरणस्य पुत्रीकरणमन्तरेणासंभवादन्यथानुपपत्त्या पुत्रीकरणमाक्षेपात्सिध्यतीत्यर्थः। यथैव च पुत्रस्य स्वर्गादिलोकसंपादनेन नापुत्रस्येत्यलोकतापरिहारकत्वं तथा पौत्रप्रपौत्रयोरपि तदस्तीत्यपुत्रेणेत्यत्रत्यपुत्रपदं मुख्यौरसपरमपि तयोरुपलक्षकं भवतीत्याह—अपुत्रेणेति । पुत्रपदमिति । पुत्रेण लोकानिति ( म० स्मृ० ९ । १३७ ) । स्पष्टोऽर्थः । एवं च पौत्रप्रपौत्राभ्यां विशिष्टलोकसंपादनेनालोकतापरिहारस्य जातत्वेन पौत्रप्रपौत्रसत्त्वे दत्तकः पुत्रो न ग्राह्यः । दत्तकपरिग्रहाधिकारो नास्तीत्यर्थः ।

ननु पुत्रकार्यस्यालोकतापरिहारस्य पौत्रप्रपौत्राभ्यां सिद्धावप्यन्यस्य पुत्रकर्तव्यस्य पिण्डोदकदानादेः सिद्ध्यर्थं दत्तकग्रहणापेक्षेत्याशङ्क्य ताभ्यामेव तस्यापि निर्वाहात्सैवमित्याह—पुत्र इति । पृष्ठे ( ६७९ ) बाळंभट्टीधृतविष्णुपुराणस्थपराशरवचनेनानेन पौत्रप्रपौत्रयोरपि पिण्डदानाद्यधिकारस्य लोकानन्त्यं दिवः प्राप्तिः० ( या० स्मृ० १ । ७८ ) इत्यनेन वंशकरत्वस्य च प्रतिपादनादित्यर्थः । तयोरेवेत्यत्रैवकारोऽप्यर्थक इति बोध्यम् ।

अपुत्रेणेति पुंस्त्वश्रवणान्न स्त्रिया अधिकार इति गम्यते । अत एव वसिष्ठः—' न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः ' इति । अनेन विधवाया भर्त्रनुज्ञानासंभवादनधिकारो गम्यते । न च सधवायाः स्वभर्त्रनुज्ञापेक्षापारतन्त्र्यान्न विधवाया इति वाच्यम् । स्त्रीसामान्योपादानेन पारतन्त्र्यस्याप्रयोजकत्वात् । अभावे ज्ञातयस्तेषामिति ज्ञातिपारतन्त्र्यस्य सद्भावाच्च ।

---

नन्वेवमपुत्रत्वस्य निमित्तत्वे पुत्रस्य दाने परिग्रहे वा स्त्रिया अप्यधिकारः स्यात्पुरुषवत्तस्या अप्यपुत्रत्वाविशेषादित्याशङ्कयाऽऽह—अपुत्रेणेति । पुंस्त्वश्रवणादिति । अपुत्रेणैवेत्यत्रिवचनेन न केवलं पुत्रप्रतिनिधिर्विधीयते । अपुत्रस्य कर्तुरप्राप्तत्वात् । नापि केवलं तत्कर्तृत्वेनापुत्रो विधीयते । पुत्रप्रतिनिधेरप्राप्तत्वात् । अत उभयं विधातव्यम् । उभयविधाने च वाक्यभेदः स्यादित्यतः ' अपुत्रकर्तृकपुत्रप्रतिनिधिः कर्तव्य इति विशिष्टं विधीयते । तदुक्तम्—' अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ' ( तन्त्रवा० २ । २ । ६ ) इति । विशिष्टविधौ च विशेषणविधिरार्थिक इति तत्कर्तृत्वेनापुत्रस्य विधेयतया तद्गतपुंस्त्वस्य विधेयविशेषणत्वेन पशुना यजेतेत्यत्र यागोद्देशेन विहितपशुगतपुंस्त्वविशेषणवद्विवक्षितत्वेन पुंसा पशुना यागः कर्तव्यः, न स्त्रीपशुनेतिवत् पुंसाऽपुत्रेण पुत्रप्रतिनिधिः कर्तव्यः, न स्त्रियाऽपुत्रयेति वाक्यार्थपर्यवसानात्स्त्रिया नाधिकार इत्यवगम्यत इत्यर्थः । अत एव—स्त्रिया अनधिकारादेव । न स्त्री पुत्रं दद्यादिति । अनेन वचनेन वसिष्ठेन भर्त्रनुज्ञानिरपेक्षत्वेन स्त्रियाः पुत्रदानपरिग्रहौ निषिद्धावित्यर्थः । तथा च भर्तृमरणेन विधवाया भर्त्रनुज्ञानस्यासंभवादधिकारो नास्तीत्याह—अनेनेति । अन्यत्रानुज्ञानाद्भर्तुरित्यनेन भर्त्रनुज्ञासापेक्षाधिकारबोधनेनेत्यर्थः । भर्तृमरणोत्तरं तदनुज्ञानासंभवेऽपि यदि जीवनदशायामनुज्ञा दत्ता स्यात्तदा विधवाया अप्यधिकारोऽस्तीति बोध्यम् । एतदप्यन्यत्रानुज्ञानाद्भर्तुरिति वदतैव सूचितम् । एवं च स्त्रिया अधिकारप्रयोजकं न भर्तृजीवनं किंतु भर्त्रनुज्ञानम् । अत एव नाप्यधिकारप्रतिबन्धकं भर्तृमरणमिति बोध्यम् ।

ननु स्त्रियाः पुत्रपरिग्रहाद्यधिकारे यद्भर्त्रनुज्ञानापेक्षापराधीनत्वं युक्तमुक्तं तद्विधवाया अयुक्तम् । तस्या मृतभर्तृकत्वात् । किंतु सौभाग्यवत्या एव युक्तम् । तस्याः पतिमतीत्वात् । इति चेत्तत्राह—स्त्रीसामान्येति । ईदृशी तादृशीत्येवं कंचिदपि विशेषमनुपादाय सामान्यतः स्त्रियमुपाददतो वसिष्ठस्य सूत्रकृतो द्विविधाया अपि स्त्रिया अनुज्ञानापेक्षापारतन्त्र्यमधिकारप्रयोजकत्वेनाभिप्रेतमिति प्रतीतेः । अन्यथा ' न स्त्री सौभाग्यवती ' इत्येव वदेन्न तु न स्त्रीति सामान्यम् । पार-

तर्हि ज्ञात्यनुज्ञयैव तस्याः पुत्रीकरणमास्त्विति चेन्न। भर्तृपदस्योपलक्षणतापत्तेः प्रयोजनासिद्धेश्च। प्रयोजनं तु भर्त्रनुज्ञानस्य स्त्रीकृतपरिग्रहेणापि भर्तृपुत्रत्वसिद्धिः। अत एव 'अथोढक्षेत्रजकृत्रिमपुत्रिकापुत्रस्त्रीद्वारजासुराद्यूढजदक्षिणाजानां पित्रोश्च' इति सत्याषाढसूत्रे स्त्रीद्वारजस्य गोत्रद्वयसंबन्धोऽभिहितः 'मातुरुत्तरं पितुः प्रथमम्' इति सूत्रेणापि। पितृगोत्रसंबन्धश्च पितुः पुत्रत्वेन। पुत्रत्वं च पित्रनुज्ञानेनैव न परिग्रहेण। तस्य तत्र स्त्रीकर्तृत्वात्। ऊढः सहोढः। स्त्रीद्वारजः स्त्रीपा-

---

तन्त्र्याग्रहे तु 'रक्षेत्कन्यां पिता विन्नां पतिः पुत्राश्च वार्धके। अभावे ज्ञातयस्तेषां न स्त्री स्वातन्त्र्यमर्हति' इति ज्ञात्यनुज्ञापेक्षापारतन्त्र्यस्य निर्बाधत्वाच्चेत्यर्थः।

नन्वेवं विधवाया ज्ञात्यनुज्ञयैव पुत्रीकरणाधिकारोऽस्त्वित्याशङ्कयाऽऽह—भर्तृपदस्येति। तथा सति 'अन्यत्रानुज्ञानाद्भर्तुः' इत्यत्रत्यभर्तृपदस्य ज्ञातिपरत्वाङ्गीकारेणोपलक्षणत्वापत्तेर्नाम-मुख्यवृत्तिकत्वपरित्यागेन विना कारणं जघन्यवृत्तिकत्वाङ्गीकरणापत्तेः।

ननु माऽस्त्वनुज्ञापारतन्त्र्यं किंतु स्त्र्यैव स्वातन्त्र्येण परिगृह्णणात् पुत्रकमिति चेदाह—प्रयोजनेति। प्रयोजनं भर्तरमुकस्य पुत्र इति व्यवहारः। नामसंकीर्तनायेत्युक्तेः। तस्यासिद्धेरनिष्पत्तेश्चेत्यर्थः। स्त्रियैव परिग्रहस्य कृतत्वादमुकस्याः पुत्र इत्येव व्यवहारः स्यान्न त्वमुकस्य पुत्र इति तात्पर्यम्। परिग्रहक्रियायां पुरुषस्य कर्तृत्वेन संबन्धाभावात। भर्त्रनुज्ञानेऽपेक्षिते तु परिग्रहक्रियायां स्त्रिया इवानुज्ञाप्रदानद्वारा तदानीमविद्यमानस्यापि भर्तुः कर्तृत्वेन संबन्धसत्त्वादमकस्य भर्तः पुत्र इत्येवमपि व्यवहारः सिध्यति। भर्त्रनुज्ञानस्य प्रयोजनं स्त्रीकृतपरिग्रहेणापि भर्तृपुत्रत्वसिद्धिरित्यन्वयः। भर्त्रनुज्ञानस्येदमेव प्रयोजनं यद्दत्तके भर्तृनिरूपितपुत्रत्वस्य सिद्धिरित्यर्थः। यथौरसः पुत्रो देवदत्तायाः पुत्र इति देवदत्तस्य च पुत्र इत्युभाभ्यामपि मातापितृभ्यां व्यपदिश्यते तथाऽयमपि दत्तक उभाभ्यामपि व्यपदिश्यते। इदमेवानुज्ञानस्य फलम्। अन्यथा भर्त्रनुज्ञानाभावेन परिग्रहक्रियायां केनापि प्रकारेण भर्तृसंबन्धस्य वक्तुमशक्यत्वात्स्त्रियैव परिगृहीते दत्तके भर्तृनिरूपितपुत्रत्वं न सिध्येत्। तथा चोभाभ्यां व्यपदेशो न स्यादिति तात्पर्यम्। अत एव—स्त्रीमात्रकर्तृकपरिग्रहेणापि दत्तके भर्तृनिरूपितपुत्रत्वसिद्धेरेव। अथोढक्षेत्रजेति। ऊढः सहोढः (म० स्मृ० ९। १७३)। क्षेत्रजः—(म० स्मृ० ९। १६७) इत्यत्रोक्तः। कृत्रिमः—(म० स्मृ० ९। १६९) इत्युक्तः। पुत्रिकापुत्रः—पुत्रिकायाः पुत्रः। स च 'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति। इति वसिष्ठोक्तः। स्त्रीद्वारजः—स्त्रिया द्वारेण जातः।

चितः स्त्रीसत्ताकः। यज्ञे दक्षिणात्वेन प्राप्तायां कन्यायां जातो दक्षिणाजः। अन्ये प्रसिद्धा इति शबरस्वामिनः।

अत्र च स्त्रिया द्वारताभिधानेन द्वारी पुरुषो लभ्यते। अन्यथा स्त्रीपरिगृहीतस्य तन्मात्रपुत्रत्वेन तद्भर्तृगोत्रसंबन्धाभावात्। तद्भर्तृक्रियायामनधिकारापाताच्चद्विवाहा-

---

प्रवासादिना भर्तुरसंनिधानेन स्त्रीमात्रकर्तृकपरिग्रहेण भर्तुः पुत्रत्वमापन्नः। तदुक्तं स्त्रीयाचित इति। एवकारगर्भस्तृतीयातत्पुरुषः। आसुरशूद्रजः—आसुरगान्धर्वराक्षस-पैशाचाख्यैर्विवाहविशेषैः स्वीकृतायां कन्यायां जातः। आसुरादिविवाहस्वरूपं मनु-स्मृतौ ( अ० ३। श्लो० ३१। ३२। ३३। ३४ ) इत्यत्र द्रष्टव्यम्। दक्षिणाजः—दैवविवाहविधिनोढायामुत्पन्नः। दैवविवाहस्वरूपं ( म० स्मृ० अ० ३। श्लो० २८ ) इत्यत्रावलोक्यम्। तदुक्तम्—यज्ञ इति। पित्रोश्चेत्यन्तेन सूत्रेण तथा मातु-रुच्चारमित्यग्रिमसूत्रेणापि स्त्रीद्वारजस्य गोत्रद्वयसंबन्धः प्रतिपादित इत्यर्थः। तथा सति स्त्रीमात्रपरिगृहीतदत्तकस्य यः पालकपितृगोत्रसंबन्धो भवति स पालकनिरूपितपुत्रत्वस-त्त्वादेव भवति। तन्निरूपितपुत्रत्वं च तदनुज्ञानेनैव वक्तव्यं न परिग्रहणकर्तृत्वेन। तादृशदत्तकपरिग्रहस्य स्त्रीमात्रकर्तृकत्वादिति भावः। भर्त्रनुज्ञानाभावे स्त्रीमात्रकर्तृकपरि-ग्रहस्याप्रसक्तेः स्त्रीद्वारजस्य खपुष्पायमाणत्वेनासतो गोत्रद्वयसंबन्धः सुतरां दुर्घटः। अतस्तदन्यथाऽनुपपत्त्या स्त्रीद्वारजोऽवश्यमङ्गीकार्य एव। अङ्गीकृते च तस्मिन्भर्त्रनुज्ञानमपि स्त्रिया गले पतितमेव। 'न स्त्री. पुत्रं दद्यात्०' इति सूत्रेण भर्त्रनुज्ञानमन्तरेण नेत्येवं भङ्ग्यन्तरेण स्त्रियाः पुत्रदानादेः प्रतिषेधं कुर्वता वसिष्ठेन नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वमिति न्यायेन भर्त्रनुज्ञानसहकारेणैव स्त्रियाः पुत्रदानाद्यधिकारस्य प्रतिपादनात्। तथा सत्यनुज्ञानद्वारेण स्त्रीकर्तृकपरि-ग्रहे भर्तुरपि संबन्धात्स्त्रीद्वारजे भर्तृपुत्रत्वसिद्धिः। तत्सिद्ध्या च स्त्रीद्वारजे गोत्रद्वयसंबन्धाभिधानं सूपपादमिति भावः। तदेवोपपादयति—अत्र चेति। स्त्र्येव द्वारं स्त्रीद्वारम्। स्त्रीद्वाराज्जातः पुत्रः स्त्रीद्वारज इति व्युत्पत्त्या स्त्री द्वारमित्येवं प्रतिपादनेन प्रत्यासत्त्या तद्भर्ता द्वारी पुरुषो लभ्यत इत्यर्थः।

ननु मा भूद्द्वारी पुरुषः, का हानिरत आह—अन्यथेति। द्वारिणः पुरुषस्यास्वीकारे। स्त्रीपरिगृहीतस्य—स्त्रिया याचित्वा गृहीतस्य। तन्मात्रपुत्रत्वेन—तस्याः स्त्रिया एव पुत्रत्वेन। तद्भर्त्रिति। तस्या भर्ता तद्भर्ता। तद्भर्तुर्गोत्रं तत्संबन्धाभावात्। परिग्रहक्रियायां तद्भर्तृसंबन्धाभावेन भर्तृगोत्रसंबन्धस्याप्यभावादित्यर्थः। तस्या भर्तुः क्रियायामनधिकारापातात्—स्त्रियैव गृहीते दत्तके तद्भर्तृनिरूपितपुत्रत्वासिद्ध्या तद्भर्तरि च तादृशपुत्रनिरूपितपितृत्वासिद्ध्या च तयोः परस्परं पितापुत्रत्वलक्ष-

द्वौ च भिन्नभावेन पितृगोत्रानुल्लेखप्रसङ्गाच्च । यद्येवं तर्हि भर्तुरपि स्व्यनुज्ञापेक्षा स्यात् प्रयोजनतौल्यादिति चेन्न । भर्तृप्राधान्यात्तत्परिग्रहेणैव स्त्रिया अपि तस्मिन्पुत्रत्वसिद्धेः । भर्तृपरिगृहीतवस्त्वन्तरस्वत्ववत् । किंच व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसंनिकृष्टमेव प्रतिगृह्णीयादिति समानकर्तृकताबोधकक्त्वाप्रत्ययश्रव-

णसंबन्धाभावेन तद्भर्तृक्रियायां तत्पुत्रस्याधिकाराभावः प्रसज्येत । किंच तादृशपुत्रस्य तद्भर्तरि पितृत्वापादकत्वाभावेन पितृरहितत्वात्तद्विवाहादौ पितृगोत्रानुल्लेखप्रसङ्गः ।

ननु मातरि भर्तृगोत्रव्यतिरिक्तगोत्रसंबन्धाभावेन तन्मात्रपुत्रे मातृगोत्रसंबन्धस्यावर्जनीयतया तद्गोत्रप्राप्त्यैव भर्तृगोत्रसंबन्धस्याप्यर्थाज्जातत्वेन कथं तद्भर्तृक्रियायामस्यानधिकारः कथं वा तद्विवाहादौ पितृगोत्रोल्लेखाप्रसङ्ग इति चेद्भ्रान्तोऽसि । जायापत्योर्मध्ये स्त्रियं प्रति पत्युः प्राधान्येन पतिं प्रति च स्त्रिया उपसर्जनत्वेन प्रधानसंबन्धेन प्राप्यमाणस्यैव शास्त्र आद्रियमाणत्वदर्शनेनाप्रधानसंबन्धेन प्राप्तस्याकिंचित्करत्वात् । लोकेऽपि मुख्यस्य पितुः संमतिमन्तरेण स्त्रीपुत्रादिना दीयमाने प्रतिग्रहीतुरनादरो दृश्यते तद्वदत्रापीति बोध्यम् ।

ननु यथा स्त्रीमात्रपरिगृहीते तद्भर्तृनिरूपितपुत्रत्वसंपत्त्यर्थं स्त्रिया भर्त्रनुज्ञापेक्षाऽऽवश्यकी तथा भर्तृपरिगृहीते दत्तके तद्भार्यानिरूपितपुत्रत्वसिद्ध्यर्थं भर्तुरपि स्वभार्यानुज्ञापेक्षा स्यादिति शङ्कते–यद्येवं तर्हीति । प्रयोजनतौल्यादिति । प्रयोजनस्य दंपतिनिरूपितपुत्रत्वसिद्धिलक्षणस्य तुल्यत्वादित्यर्थः । उत्तरयति–नेति । दंपत्योर्मध्ये भर्तुः प्राधान्येन तत्कृतपरिग्रहेणैव तस्यैव स्त्रिया अपि तस्मिन्पुत्रत्वसिद्धेर्निर्बाधत्वान्न भर्तुः स्त्र्यनुज्ञापेक्षाऽपेक्षितव्येत्यर्थः । भर्तृकृतपरिग्रहेणैव स्त्रिया अपि तस्मिन्पुत्रत्वसिद्धौ दृष्टान्तमाह–भर्तृपरीति । यथा भर्त्रा परिक्रीते वस्त्रालंकारादौ भर्तुरिव स्वव्यापाराभावेऽपि तद्व्यापारेणैव स्त्रिया अपि तत्र स्वत्वं लोकप्रसिद्धं सिध्यति तथा भर्तृपरिगृहीते दत्तकपुत्रे भार्याव्यापाराभावेऽपि भार्यानिरूपितपुत्रत्वसिद्धौ न किंचिद्बाधकमित्यर्थः । एवं भर्तुः स्वातन्त्र्येणाधिकारं व्यवस्थाप्य स्त्रियाः स्वातन्त्र्येणाधिकाराभावं वाचस्पतिसंवादप्रदर्शनेन संसाधयितुमाह–किंचेति । हुत्वेति । 'समानकर्तृकयोः पूर्वकाले' ( पा० सू० ३।४।२१ ) इति क्त्वाप्रत्ययः । ततश्च हुत्वा प्रतिगृह्णीयादित्यन्वयेन होमानन्तरं प्रतिग्रह इति प्रतिपादितं भवति । अदूरबान्धवमित्यादेरर्थो मूले ग्रन्थकृतैवाग्रे विवृत इति नेह विव्रियते । संक्षेपतस्तु संनिहितसपिण्डमित्यर्थः । बन्धुसंनिकृष्टमित्यस्य च सपिण्डानां संनिकृष्ट इत्यर्थः । समानकर्तृकेति । समानकर्तृकतायां विहितस्य च क्त्वाप्रत्ययस्य श्रवणेन होमकर्तृपरिग्रहीत्रोरैक्यप्रतीतेः स्त्रीणां च भर्तृनैरपेक्ष्येण होमाधिकाराभावेन तदु-

णाद्धोमकर्तुरेव प्रतिग्रहसिद्धेः । स्त्रीणां होमानधिकारित्वात्प्रतिग्रहानधिकार इति वाचस्पतिः ।

न च शौनकीय आचार्यवरणाम्नानात् तद्द्वारा होमसिद्धिरिति वाच्यम् । होमसिद्धावपि प्रतिग्रहमन्त्रानधिकारेण प्रतिग्रहासिद्धेः । तदाह शौनकः—

देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च ।
अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनि ॥ इति ।

न चैवं शूद्राणामनधिकारप्रसङ्गः । 'शूद्राणां शूद्रजातिषु' इति व्यवस्थापकलिङ्गेन तदधिकारकल्पनात् । एतेन शूद्राणां होमप्रतिग्रहमन्त्रानधिकारेण पुत्रप्रतिग्रहानधिकार इति वदन्वाचस्पतिः परास्तः । विधवानां स्त्रीणां तु यथाविनियोगमधिकारसमर्थनान्न पुत्रपरिग्रहाधिकार इति सिद्धम् ।

---

कारभाविनः पुत्रपरिग्रहस्याप्यर्थादधिकाराभाव आयात इत्यर्थः । भर्तृसापेक्षत्वेन तु स्त्रिया अपि होमाधिकारात्परिग्रहेऽप्यधिकारोऽस्त्येव । अनेन वाचस्पतिसंवादेन स्त्रीणां स्वातन्त्र्येण पुत्रपरिग्रहाधिकारो नास्तीति सिद्धम् ।

यद्यपि शौनकोक्ते पुत्रप्रतिग्रहप्रयोगे 'आचार्यं धर्मसंयुक्तं वैष्णवं वेदपारगम्' इत्याचार्यवरणस्योक्तत्वात्तद्द्वारा स्त्रियाऽपि होमः सिध्यति, तथाऽपि प्रतिग्रहमन्त्राधिकाराभावात्प्रतिग्रहाधिकाराभाव एव स्त्रिया इत्याशयवानाह—न च शौनकीय इति । प्रतिग्रहमन्त्रौ प्रदर्शयति—देवस्य त्वेति । अङ्गादङ्गेति च ।

ननु तुल्यन्यायात्स्त्रीणामिव शूद्राणामपि पुत्रपरिग्रहाधिकाराभावप्रसङ्ग इति शङ्कते—न चैवमिति । योऽयं पुत्रप्रतिग्रह उक्तस्तत्र केन वर्णेन कस्मिन्वर्णे पुत्रसंग्रहः कर्तव्य इत्याकाङ्क्षायां शौनकीये पुत्रपरिग्रहविधौ 'ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः' इत्यादिना ब्राह्मणैर्ब्राह्मणेषु क्षत्रियैः क्षत्रियजातौ वैश्यैर्वैश्यजातिषु पुत्रसंग्रहः कर्तव्य इत्युक्त्वा 'शूद्राणां शूद्रजातिषु' इत्यनेन शूद्रैः शूद्रजातिषु पुत्रसंग्रहः कर्तव्य इति व्यवस्था कृता । तथा 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' ( या० स्मृ० २ । १३३ ) इत्युक्तम् । 'समानजातीयेष्वेव पुत्रेष्वयं पूर्वाभावे परः परः' इत्युक्तो विधिः । न भिन्नजातीयेषु' इति मिताक्षरायां तदर्थो वर्णितः । सत्येवं यदि शूद्राणां पुत्रपरिग्रहेऽधिकारो नास्तीति ब्रूषे चेत्पूर्वोक्ता व्यवस्था नोपपद्येत । यतश्च शूद्रैः शूद्रजातिष्वेव पुत्रसंग्रहः कर्तव्य इति व्यवस्थापयति, ततः सत्यं शौनक आचार्यः शूद्राणां पुत्रप्रतिग्रहाधिकारोऽस्तीति दृढमवैतीति निश्चप्रचम् । एवं च शूद्राणां पुत्रपरिग्रहानधिकार इति वाचस्पतिमतमयुक्तमित्याह—एतेनेति । विधवानां स्त्रीणां तु भर्त्रनुज्ञाने सत्येवाधि-

न चैवं सधवानामप्यनधिकारापत्तिर्होममन्त्राद्यनधिकारादिति वाच्यम् । अन्यत्रानुज्ञानाद्भर्तुरिति प्रतिप्रसवेन प्रधानाधिकारसिद्धावधिकृताधिकाराद्धोममन्त्रादिप्राप्तौ 'स्त्रीशूद्राणाममन्त्रकम्' इति मन्त्रपर्युदाससिद्धेरमन्त्रकप्रतिग्रहसिद्धिर्वस्त्वन्तरप्रतिग्रहवत् । किंच 'न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा' इत्यौत्सर्गिकनिषेधस्य 'अन्यत्रानुज्ञानाद्भर्तुः' इत्यपवादकः प्रतिप्रसवः । तत्र च निमित्तं भर्त्रनुज्ञानम् । ततश्च विधवाया भर्त्रभावेनानुज्ञानासंभवान्निर्निमित्तकप्रतिप्रसवाप्रवृत्त्या प्रापकान्तराभावाच्चानाधिकार इति सर्ववादिसंप्रतिपन्नमेव । न चैवमलोकतापरिहारो न स्यादिति वाच्यम् ।

मृते भर्तरि साध्वी स्त्री ब्रह्मचर्यव्रते स्थिता ।
स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥

---

कारस्य प्रतिपादनाद्भर्त्रनुज्ञां विना न पुत्रपरिग्रहाधिकार इति सिद्धम् । ननु सधवानां विधवानां च स्त्रीणां होममन्त्राद्यधिकाराभावेन परिग्रहाधिकारो न प्राप्नोति इति चेत्—'अन्यत्रानुज्ञानाद्भर्तुः' इत्यनेन वसिष्ठो न भर्त्रनुज्ञानमन्तरेण 'न स्त्री पुत्रं दद्यात्' इति भङ्ग्यन्तरेण परिग्रहाधिकाराभावं प्रतिपादयन् भर्त्रनुज्ञाने सत्यवश्यं स्त्रिया अप्यधिकार इति सूचनात्पुत्रप्रतिग्रहाधिकारसिद्धमेवामित्याह—न चैवं सधवानामपीत्यादि । प्रतिप्रसवेनेति । प्रतिप्रसवो नाम निषिद्धस्य पुनः प्रापणम् । न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वेत्यनेन निषिद्धस्य प्रतिग्रहाद्यधिकारस्यान्यत्रानुज्ञानादित्यनेन पुनर्भर्त्रनुज्ञाने सति प्रापणात्प्रभवत्ययं प्रतिप्रसव इत्यर्थः । प्रधानस्य मुख्यस्याङ्गिनः पुत्रप्रतिग्रहाद्यधिकारस्य सिद्धौ सत्याम् । अधिकृते पुत्रपरिग्रहाद्यधिकारसद्भावात्तदङ्गतया होममन्त्रादिप्राप्तौ सत्यां 'स्त्रीशूद्राणाममन्त्रकम्' इति मन्त्रनिषेधेनामन्त्रकः प्रतिग्रहः सिध्यति । तत्र दृष्टान्तमाह—वस्त्वन्तरेति । वस्त्रालंकारादेर्यथा मन्त्ररहितः परिग्रहस्तथा पुत्रस्यापि मन्त्ररहितः प्रतिग्रह इत्यर्थः । किंच न स्त्री पुत्रमिति निषेध उत्सर्गः । प्रतिप्रसवस्तु तस्यापवादः । अपवादप्रवृत्तौ च निमित्तं भर्त्रनुज्ञानम । ततश्च विधवाया भर्तुरभावेन तदनुज्ञानासंभवेन निमित्ताभावादपवादो न प्रवर्तते नाप्यधिकारप्रापकं वचनान्तरं दृश्यत इति निरपवादमुत्सर्गस्य निषेधस्यावस्थानेन विधवानां नाधिकार इति सर्वसंमतम् । नात्र विप्रतिपत्तिरित्यर्थः ।

ननु भर्त्रभावेनानुज्ञानासंभवाद्विधवायाः सर्वथा नाधिकार इति नापुत्रस्येत्यलोकता वज्रलेपायत इति चेन्मैवं भाषिष्ठाः । भर्तृमरणोत्तरं ब्रह्मचर्यव्रतपरिपालनेन तस्यास्तद्दोषपरिहाराभिधानादित्याह—मृते भर्तरीति ( म० स्मृ० ५ । १६० ) । 'साध्वाचारा

**इति मनुना ब्रह्मचर्येणैव तत्परिहाराभिधानादिति सकलमकलङ्कम् ।**

**अपुत्रेणेत्येकत्वश्रवणाच्च न द्वाभ्यां त्रिभिर्वैकः पुत्रः कर्तव्य इति गम्यते ।**

---

स्त्री मृते भर्तर्यकृतपुरुषान्तरमैथुना पुत्ररहिताऽपि स्वर्गं गच्छति । यथा ते सनकबालखिल्यादयः पुत्रशून्याः स्वर्गं गताः ' इति तट्टीका मन्वर्थमुक्तावली ।

एवं च सुवासिनीनामपुत्राणां स्त्रीणां भर्त्रनुज्ञाने सत्येव पुत्रप्रतिग्रहेऽधिकारो नेतरथा । विधवानां तु भर्तृजीवनदशायां लब्धानुज्ञानामधिकारोऽस्त्येव । भर्तृजीवनदशायां कथमप्यपरिज्ञातानुज्ञानां विधवानां पुनः सर्वथा पुत्रप्रतिग्रहाधिकारो नास्तीति दत्तकमीमांसाकारमतेनोपपादितम् । संस्कारकौस्तुभे तु–' उक्तविधदत्तकस्वीकारः पुंभिरिव स्त्रीभिरपि सधवाभिर्विधवाभिश्च कार्यः '। ' वन्ध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्य च ' इति शौनकीयवचनस्य विशेषश्रवणात् । केचित्तु ' अपुत्रेणैव० इत्यस्मिन वाक्य एवकारश्रवणात्पुंस्त्वश्रवणाच्च न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्र भर्तुरनुज्ञानादिति वसिष्ठवाक्ये भर्तुरनुज्ञाभावे स्त्रीणां प्रतिग्रहनिषेधाच्च नापुत्राणां स्त्रीणां भर्तुरनुज्ञाभावे पुत्रप्रतिग्रहेऽधिकार इत्याहुस्तदयुक्तम ' इति प्रतिज्ञायाग्रे बहुभिः प्रकारैरयुक्तत्वस्योपपादनं कृतम । तच्चातिविस्तृतत्वान्मीमांसाजालजटिलत्वाच्छास्त्रीयगहनविषययुक्तत्वाच्च मध्यमाधिकारिणामपि दुर्बोधमिति विस्तरभीतेर्नेह विव्रियते तत्तु तत्रैव द्रष्टव्यम् ।

**एकत्वश्रवणाच्चेति** । अपुत्रेणैव कर्तव्य इत्यत्रिवचनेन पुत्रप्रतिनिधिर्विधीयते । तत्र च कर्तृत्वेनापुत्र उक्तः । तथा सति कतिभिरेकेन द्वाभ्यां बहुभिर्वाऽपुत्रैः पुत्रप्रतिनिधिर्विधेय इति बुभुत्सोदयान्क्रियमाणैकवचनात्प्रतीयमानेनैकत्वेन सा बुभुत्सा पूर्यते । यथा–एकेनापुत्रेण पुत्रप्रतिनिधिः कर्तव्य इति । ततश्च बुभुत्सापूर्त्यर्थमुपयुक्तमेकत्वमिति कृत्वाऽविवक्षाकारणाभावाद्विवक्षितं श्रूयमाणमेकत्वम् । यथा पशुना यजेतेत्यत्र वाक्यान्तरगतं यागमुद्दिश्य तत्करणत्वेन पशोर्विधानात्कियद्भिः पशुभिर्यागः कर्तव्य इत्याकाङ्क्षोदये सति श्रूयमाणेन नैत्यैकवचनेन तच्छान्तेर्विधेयपशुगतमेकत्वं विवक्षितम् । ततश्चैकेनैव पशुना यागोऽनुष्ठेयो न द्वाभ्यां त्र्यादिभिर्वेति सिद्धान्तितं तद्वदिहापीति बोध्यम् । एवं चैकेनापुत्रेण पुत्रप्रतिनिधिर्विधेयो न द्वाभ्यां त्रिभिर्वेत्यपुत्रेणेत्येकत्वश्रवणादवगम्यत इत्यर्थः । **एकः पुत्रः कर्तव्य इति** । पुत्रप्रतिनिधिर्विधीयत इत्युक्तम् । तच्च विधानं कियद्भिः पुत्रप्रतिनिधिभिः संपादनीयमित्याकाङ्क्षायां प्रतिनिधिपदोत्तरं श्रूयमाणेनैकवचनेन तच्छान्तेर्विधेयपुत्रप्रतिनिधिगतस्य विशेषणस्यैकत्वस्य विवक्षणेन एकः पुत्रः कर्तव्य इत्यर्थः सिध्यतीत्यर्थः ।

ननु यदि द्वाभ्यामपुत्राभ्यां नैकः पुत्रः प्रतिनिधातव्यश्चेद्दत्तकस्य व्यामुष्याय-

नन्वेवं दत्तकादीनां द्व्यामुष्यायणत्वस्मरणं विरुध्येत । तथा च प्रयोगपारिजाते स्मृत्यन्तरम्--

द्व्यामुँष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथा ॥

इति । मैवम् । द्व्यामुष्यायणत्वस्य जनकपरिग्रहीतृद्वयाभिप्रायकत्वात् । निषेधश्च परिग्रहीतृद्वयमभिप्रेत्येति न विरोधः । प्रतिनिधिश्च क्षेत्रजादिरेकादशविधः ।

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

---

णत्वव्यवहारः स्मृतिषु क्रियमाणो न संगच्छेत । तादृशव्यवहारस्य जनकपरिग्रहीतृपितृद्वितयाभिप्रायेणोपपत्तेर्मैवमित्याह—**नन्वेवं दत्तकादीनामिति** । **द्व्यामुष्यायणेति**। अमुष्यापत्यमामुष्यायणः । अदस्शब्दप्रकृतिकात्षष्ठ्यन्तादपत्येऽर्थे नडादित्वात् ( ४ । १ । ९९ ) फक्प्रत्ययः । तस्याऽऽयन्नादेश आदिवृद्धौ तद्धितान्तत्वात्प्रातिपदिकतया प्राप्तस्य सुब्लुकः ' आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च ' ( ६ । ३ । २१ वा० ) इति वार्तिकेन निषेधे नस्य णत्वे चाऽऽमुष्यायणेति रूपम् । ततो द्वयोरामुष्यायण इति षष्ठीतत्पुरुषे द्व्यामुष्यायण इति सिध्यति । प्रसिद्धस्यास्य योऽयं पुत्रः स द्वयोर्जनकप्रतिग्रहीत्रोः पुत्र इत्यर्थः । तव मम चायमिति समयेन परिगृहीतो दत्तकविशेष इति यावत् । तथा च जनकप्रतिग्रहीतृपितृद्वयाभिप्रायेण स्मृतिषु द्व्यामुष्यायणव्यवहारः । निषेधः पुनः प्रतिग्रहीतृद्वयाभिप्रायेणेति न विरोध इत्यर्थः ।

**प्रतिनिधिश्चेति** । मुख्याभावे तत्कार्यकारी हि प्रतिनिधिः । स चैकादशविध इत्याह-**क्षेत्रजादीनिति** । क्षेत्रजादीनां स्वरूपं वक्तुमादौ मुख्यपुत्रलक्षणं कथ्यते-(१) सवर्णायां धर्मविवाहोढायां पत्न्यां जात औरस उरसो जातः स पुत्रो मुख्यः । (२) परक्षेत्रे नियोगधर्मेण नियुक्तेन सपिण्डेन देवरेण जातः पुत्रः स क्षेत्रजः । (३) मात्रा भर्त्रनुज्ञया प्रोषिते प्रेते वा भर्तरि, पित्रा वोभाभ्यां वा यः पुत्रो यस्मै सवर्णाय दीयते स तस्य दत्तकः पुत्रः । ( ४ ) पुत्रार्थिना स्वयं कृतया मम पुत्रो भवेति प्रार्थनया कृतस्तत्र पुत्रोऽस्मीति स्वीकारितः कृत्रिमः पुत्रः । ( ५ ) गृहे पत्न्यामन्येन सजातीयेन प्रच्छन्नोऽनियोगेऽपि चौर्यरताहितगर्भमूलक उत्पन्नः स भर्तुर्गूढजः पुत्रः । ( ६ ) मातापितृभ्यां भरणासामर्थ्येन परित्यक्तोऽन्येन पुत्रतया गृहीतः स ग्रहीतुरपविद्धः पुत्रः । ( ७ ) कन्यकायां सजातीयात्पितृगृहे

इति मानवात्। तत्र च येषु दंपत्योरन्यतरावयवसंबन्धस्तेषां न्यायादेव

---

जात: स वोढुः कानीनः पुत्रः। ( ८ ) या गर्भवती कन्या ज्ञातगर्भाऽज्ञातगर्भा वा परिणीयते तस्यां जातः स परिणेतुः सहोढजः पुत्रः। ( ९ ) मातापित्रोः सकाशादपत्यार्थं यः क्रीतः स क्रेतुः क्रीतः पुत्रः। ( १० ) पुनर्विवाहिता पुनर्भूस्तस्यां क्षतायां पूर्वपत्युपभुक्तायामक्षतायामताद्दश्यां वा जातः स उत्पादकस्य पौनर्भवः पुत्रः। ( ११ ) प्रार्थनां विनैव यः स्वयमात्मानं ददाति स प्रतिग्रहीतुः स्वयंदत्तः पुत्रः। ( १२ ) परिणीतायां शूद्रायां ब्राह्मणेन कामादुत्पादितः स तस्य ब्राह्मणस्य पारशवः पुत्र उच्यते। अत्र मूलवचनानि म० स्मृ० अ० ९ श्लो० १६६ आरभ्य १७८ पर्यन्तानि द्रष्टव्यानि।

याज्ञवल्क्यस्मृतौ तु 'औरसो धर्मपत्नीजः' इत्यनेनौरसपुत्रलक्षणमुक्तम्। अस्यायमर्थः—यया सह धर्मश्चर्यते सा धर्मपत्नी। यद्यपि पत्नीशब्देनैव सहधर्मचारिणी कथ्यते तथाऽपि धर्मशब्दोपादानादत्र पत्नीशब्दो भार्यामात्रपरः। धर्मपत्नीशब्देन च शूद्रा व्यावर्त्यते। तस्याः सहधर्मचारित्वाभावात्। 'कृष्णवर्णा वै रामा रमणायैव न धर्माय' इति वसिष्ठोक्तेः। अत एव तत्पुत्रो नौरसः। अत एव 'स्वयंदत्तश्च शौद्रश्च' ( म० स्मृ० ९। १६० ) इति पुत्रप्रतिनिधिषु तं परिगणितवान् मनुः। एवं च यो धर्मपत्नीजः परिणेतुरुरसा निर्मितः स औरसः, इति मुख्यमौरसमुक्त्वा 'तत्समः पुत्रिकासुतः' इति पुत्रिकासुतस्यौरससाम्यमुक्तम। तत्र पुत्रिकासुत इत्यत्र द्वेधा समासः। पुत्रिकायाः सुतः पुत्रिकासुत इत्येकः। पुत्रिकैव सुतः पुत्रिकासुत इति द्वितीयः। तत्राऽऽद्येऽनुग्राहकं प्रमाणम्—अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति। इति वसिष्ठवचनम्। द्वितीये–'द्वितीयः पुत्रिकैव' इति वसिष्ठः। द्वितीयः पुत्रः पुत्रिकैवेति तदर्थः। युज्यते चेदम्। पुत्रिकायां पित्रवयवानामल्पत्वान्मात्रवयवानां बाहुल्याच्च। अत्र केचित्–आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्। तथैकादशपुत्रास्तु पुत्रिकौरसयोर्विना। इत्याहुः। एते प्रतिनिधयः क्रियालोपो मा भूदित्युपादीयन्ते। निरुक्तानामेषां प्रतिनिधीनां मध्ये येषु जायापत्योरन्यतरावयवसंबन्धो वर्तते तेषां युक्त्यैव सौसादृश्यलक्षणयाऽऽयातं प्रतिनिधित्वम्। यथा क्षेत्रज–पौत्रिकेय–पुत्रिका–कानीन–पौनर्भव–सहोढज–गूढजेषु। तत्रापि क्षेत्रज–कानीन–सहोढज–गूढजेषु केवलं मात्रवयवसंबन्धः।

ननु सौसादृश्यस्य सुसदृशस्य भावः सौसादृश्यमिति व्युत्पत्त्या सुसदृशनिष्ठधर्मस्य निरूपितार्थत्वान्निरूपितार्थस्य च निरूपकाकाङ्क्षायां यन्निरूपितं प्रतिनिधित्वं

**प्रतिनिधित्वम् । वचनं तु नियमार्थम् । येषु पुनरवयवसंबन्धाभावस्तेषां वाचनिकं प्रतिनिधित्वम् । यथा क्षेत्रजपौत्रिकेयपुत्रिकाकानीनपौनर्भवसहोढजगूढजानां**

---

स औरसपुत्रः परामृश्यते । एवं चौरसपुत्रनिष्ठमातापित्रवयवसंबन्धप्रयोज्यं सादृश्यमित्यर्थः फलति । ततश्च क्षेत्रजकानीनादीनां कथं प्रतिनिधित्वम् । प्रत्युत तेषु मात्रवयवसंबन्धसत्त्वेन मुख्यपुत्रत्वमेव स्यादिति चेन्न । तत्रान्यतरावयवसंबन्धसत्त्वेऽपि, एकसत्त्वेऽपि द्वयं नास्तीति न्यायान्मातापित्रोरुभयोरवयवसंबन्धस्याप्यभावान्न मुख्यत्वम् । ततश्चान्यतरावयवसंबन्धप्रयोज्यं सादृश्यं प्रतिनिधिव्यवहारहेतुः । मातापितृद्वयावयवसंबन्धो मुख्यत्वहेतुरिति विवक्षितत्वात् ।

ननु पौत्रिकेयस्य मातामहपुत्रत्वेनोक्तत्वात्तत्र मातामहीमातामहयोरेकस्याप्यवयवसंबन्धाभावेन दंपत्योरन्यतरावयवसंबन्धवत्सु पुत्रप्रतिनिधिषु परिगणनमनुपपन्नं किंतु वाचनिकप्रतिनिधित्ववत्सु दत्तकादिष्वेव तद्युक्तमिति चेन्न । तत्र मातृद्वारोभयावयवसंबन्धोपपत्तेः । न चैवमौरसत्वापत्तिः । मातृद्वारेत्युक्त्या परम्परयोभयावयवसंबन्धबोधनात् । औरसे तु साक्षादुभयावयवसंबन्ध इति विशेषः ।

ननु पुत्रिकायां दंपत्योरुभयोरप्यवयवानां संबन्धस्य साक्षात्सत्त्वेन तस्या मुख्यत्वमेव स्यान्न प्रतिनिधित्वमिति चेन्नैतद्भद्रम् । तस्याः साक्षादुभयीयावयवसंबन्धावच्छिन्नत्वेऽपि मात्रवयवानां प्राचुर्यात्पित्रवयवानां स्वल्पत्वात्स्वतः पिण्डदातृत्वाभावाच्च मुख्यौरसत्वस्य दुर्वचतया मुख्यौरसादूनत्वेन प्रतिनिधित्वस्यैव न्यायायातत्वात् । एवं च पित्रवयवाधिक्ये सति साक्षादुत्कृष्टोभयावयवसंबन्धवत्त्वमौरसत्वम् । पुत्रिकायां मुख्यपुत्रत्वं वारयितुं सत्यन्तम् । पौत्रिकेय औरसत्ववारणाय साक्षादिति । पौनर्भवे तद्वारणायोत्कृष्टेति । क्षेत्रजादिषु तद्वारणायोभयीयेत्यादिरिति बोध्यम । स एव च मुख्यः पुत्रः श्राद्धादिनामसंकीर्तनाद्यखिलकरणेन पितुः संपूर्णोपकारकः । यश्च न तथा स प्रतिनिधिः । यथा क्षेत्रजादयः पुत्राः । एतेन पुत्रिकाया यन्मुख्यत्वमुक्तं तदेकीयमतेनेति बोध्यम् । न चैवमपि पित्रवयवाधिक्ये सति साक्षादुभयीयावयवसंबन्धसत्त्वात्पौनर्भवस्यौरससमत्वं शङ्कनीयम् । तन्मातुः पुनर्भूत्वेनापकृष्टत्वात्तज्जन्यस्य तस्याप्यपकृष्टत्वादिति ज्ञेयम् ।

ननु यदि युक्त्यैव प्रतिनिधित्वं सिद्धं तर्हि कृतं वचनेनेत्याशङ्क्याऽऽह—**नियमार्थमिति** । सोऽयं नियम एवम्—यद्यन्यतरावयवसंबन्धेन प्रतिनिधित्वं स्यात्तर्हि क्षेत्रजादीनामेव नान्येषामिति । तेनावरुद्धदास्यामुत्पन्नस्यावयवसंबन्धेऽपि न प्रतिनिधित्वम् । किंच यत्र न दंपत्योरन्यतरस्याप्यवयवसंबन्धस्तत्र सौसादृश्यन्यायासंभवादप्राप्तं प्रतिनिधित्वं बोधयितुं वचनमित्याह—**येषु पुनरिति** । दत्तकक्रीतकृत्रिमदत्तात्मापविद्धेषु । **कश्चिच्च विकलो-**

**क्वचिन्मातृमात्रसंबन्धात्क्वचिच्च विकलोभयसंबन्धाद्विकलावयवत्वेन मुख्यं प्रति-**

**भयेति** । विकलौ यावुभावर्थान्मातापितरौ तयोः संबन्धोऽन्वयस्तस्मादित्यर्थः । अत्र मातापितृशब्देन तदवयवा लक्ष्यन्ते । 'त्रीणि मातृतस्त्रीणि पितृतः' इति श्रुतेः। तथा च विकलानामुभयीयावयवानां संबन्धादिति यावत्। तदेतदुक्तं-**विकलावयवत्वेनेति** । विकलावयवसंबन्धेनेत्यर्थः । अवयववैकल्यं च क्वचित्स्वरूपतः क्वचित्संबन्धतः क्वचिद्गुणतश्चेति त्रिधा । आद्यमपि द्विधा । पित्रवयवाल्पत्वसहकृतमात्रवयवभूयस्त्वेन पित्रवयवात्यन्ताभावसहकृतमात्रवयवत्वेनेति चतुर्विधमवयववैकल्यम् । ततश्च यत्र विकलोभयावयवसंबन्धस्तत्र न मुख्यं पुत्रत्वं, किंतु पुत्रप्रतिनिधित्वमेव । तत्रापि सर्वाद्येन मुख्यं प्रतिनिधित्वम् । तद्भिन्नेण तु गौणं प्रतिनिधित्वमित्यूह्यम् । तत्र सर्वाद्यं 'तत्समः पुत्रिकासुतः' (या० स्मृ० २ । १२८) इत्यत्र मिताक्षरायां पुत्रिकैव सुतः पुत्रिकासुत इति कर्मधारयसमासाश्रयेणोक्ते पुत्रिकारूपपुत्रे । द्वितीयः पुत्रः पुत्रिकैवेत्यर्थकं 'द्वितीयः पुत्रिकैव' इति वसिष्ठवचनमपि पुत्रिकारूपपुत्रं स्पष्टमेव वदति । पुत्रिकायामोरस्यामुभयावयवसंबन्धस्य साक्षात्सत्त्वेऽपि तस्याः स्त्रीत्वेन पुमवयवानामल्पत्वात्स्त्र्यवयवानामाधिक्यात्स्वरूपतोऽवयववैकल्येन विकलावयवसंबन्धसत्त्वेन पुत्रिकायां मुख्यं प्रतिनिधित्वम् । इदमेव मात्रवयवभूयस्त्वसहकृतपित्रवयवाल्पत्वमेव हि विकलावयवत्वं प्रतिनिधिगतमुख्यत्वस्य प्रयोजकमिति बोध्यम्। द्वितीयं क्षेत्रजकानीनगूढजसहोढजेषु । क्षेत्रजादिः पुत्रो हि नोत्पादकस्यापि तु वोढुरेवेति (या० स्मृ० २ । १२८) मिताक्षरायामुक्तम् । स्पष्टं च मनुस्मृतौ क्षेत्रजादिस्वरूपप्रतिपादके तत्तद्वचने (म० स्मृ० ९ । १६७)। ततश्च क्षेत्रजादिषु चतुर्षु पुत्रेषु पित्रवयवानामंशतोऽप्यभावेन मातृमात्रावयवसंबन्धसत्त्वाद्द्वितीयावयववैकल्येन क्षेत्रजादेः प्रतिनिधित्वम्। तृतीयं पुत्रिकायाः पुत्रे । पौत्रिकेये ह्युभयावयवसंबन्धस्य मातृद्वारैव वक्तव्यतया परम्परयोभयावयवसंबन्धसत्त्वेन संबन्धगतसाक्षात्त्वस्य वैकल्येन संबन्धतोऽवयववैकल्येनास्य पुत्रप्रतिनिधित्वम् । इदमेव हि संबन्धतोऽवयववैकल्यं यत्संबन्धवैकल्यप्रयुक्तमवयवानां वैकल्यम् । चतुर्थं तु पौनर्भवे । पौनर्भवः पुत्रो ह्युत्पादकस्यैव न वोढुः । 'तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः' इति कात्यायनवचनात्। तथा च पौनर्भवपुत्र उभयावयवसबन्धः। स च पुनः साक्षाद्यद्यपि वर्तते तथाऽपि तन्मातुः पुनर्भूत्वेनापकृष्टतयैकसत्त्वेऽपि द्वयं नास्तीति न्यायेनोभयोरप्यपकृष्टतया शुद्ध्यादिगुणानामभावाद्गुणतोऽवयववैकल्येन तज्जन्यस्याप्यपकृष्टतयाऽस्य प्रतिनिधित्वमेवोचितम् । इदमेव हि गुणतोऽवयववैकल्यं यदुत्कृष्टत्वादिगुणाभावप्रयुक्तमवयवानां वैकल्यमिति । एवं च यत्रोत्कृष्टत्वविशिष्टसा-

निधित्वं दत्तकक्रीतकृत्रिमदत्तात्मापविद्धानां वाचनिकं प्रतिनिधित्वमिति । प्रतिनिधिशब्दश्चोभयत्रापि भूम्ना सृष्टीरुपदधातीतिवत् ।

यत्तु मेधातिथिना 'नह्येषां प्रतिनिधिता संभवति, प्रारब्धस्य कर्मणोऽङ्ग-

---

क्षान्मात्रावयवाधिक्यसहकृतपित्रवयवाल्पत्वात्मकविकलावयवसंबन्धस्तत्र मुख्यं पुत्रप्रतिनिधित्वमन्यत्र तु गौणमिति मम भाति । तत्र युक्तायुक्तत्वं विद्वद्भिर्विचार्यमित्यं स्खलितं कृपया प्रदर्शनीयमित्यभ्यर्थये ।

अन्यत्र क्षेत्रजादिषु दत्तकक्रीतादिषु च न मुख्यं प्रतिनिधित्वं, किंतु गौणमित्यर्थः । प्रतिनिधिशब्दश्चायं छत्रिणो गच्छन्तीत्यत्र यथा छत्रिपदं छत्र्यच्छत्रिसमुदायपरं तथा मुख्यामुख्यप्रतिनिधिसमुदायपरोऽजहल्लक्षणया । यथा वा सृष्टीरुपदधातीत्यत्र सृष्टिशब्दः सृष्टिशब्दोपेतसृष्टिशब्दानुपेतमन्त्रसमुदायपरोऽभ्युपेतो मीमांसकैस्तद्वदिहापीति बोध्यम् ।

यत्त्विति । मनुस्मृतौ नवमाध्याये षट्षष्ट्युत्तरशततमे श्लोके मेधातिथिकृतटीकायामयं ग्रन्थो दृश्यते । तस्यायमर्थः-एषां क्षेत्रजादीनां पुत्रप्रतिनिधित्वं न संभवति । यतः प्रारब्धस्य कर्मणो यदङ्गं तस्यापचारे हि प्रतिनिधिर्विधीयते । न च पुत्रः 'ऋतौ भार्याभिगमनेन पुत्रं भावयेत' इति पुत्रोत्पादनकर्मणोऽङ्गम् । तादृशविधौ तस्य विधेयत्वेन मुख्यत्वादिति । अयं भावः-मुख्याभावे तत्सदृशो हि प्रतिनिधिः । तत्सादृश्यं च तत्कार्यकारित्वेन । कार्यकारित्वं च लब्धसत्ताकस्यार्थात्सिद्धस्यैव संभवति न साध्यस्य । तस्याद्याप्यनिष्पन्नतया लब्धसत्ताकत्वाभावात् । एवं चाङ्गस्योपकारकस्यात एव सिद्धस्य वस्तुनोऽपचार उच्छेदे प्रतिनिधिरुपादातुं शक्यो न पुनः साध्यस्यालब्धसत्ताकस्य वस्तुनो विषये । न च पुत्रोऽङ्गमिति भ्रमितव्यम् । न हि स्वयं स्वस्यैवाङ्गभावं भजत इति सिद्धवस्तुविषये प्रतिनिधेरुपादानं संभवेन्न साध्यवस्तुविषय इति । तस्मात्क्षेत्रजादीनां पुत्रशब्दवाच्यत्वे स्थिते यत्तेषां प्रतिनिधित्वप्रतिपादकं वचनं तन्नहि निन्दा निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुमिति न्यायेनौरसप्रशंसार्थम् । यथा ह्यौरसो भूयांसमुपकारं कर्तुं शक्नोति न तथेतरे क्षेत्रजादय इत्यौरसः प्रशस्यते । यथा ह्यौरसपुत्रेण पुत्रवान्नरः पुत्रवानहमित्येवं ससंतोषं पुरुषकाराभिमानं वहति, न तथा क्षेत्रजादिना पुत्रेण पुत्रवान्नरोऽभिमन्यत इति क्षेत्रजादयः पुत्राः पितुर्बहूपकर्तुमक्षमाः । यश्च यावदुपकर्तुं प्रभवति यश्चान्यो न तावदुपकर्तुमीशते किंतु तदपेक्षयेषन्न्यूनमुपकरोति स प्रतिनिधिरित्युच्यते । तदुक्तं मनुना-यादृशं फलमाप्नोति कुप्लवैः संतरञ्जलम् । तादृशं फलमाप्नोति कुपुत्रैः संतरंस्तमः ॥ इति । अस्य कुल्लूक-

पचारे प्रतिनिधिः। न च पुत्रः कर्माङ्गमपत्योत्पादनकर्मणोऽगुणकर्मत्वात्। तेन सत्येव क्षेत्रजादीनां पुत्रशब्दे प्रतिनिधित्ववचनमौरसप्रशंसार्थम्। उपकारापचया-भिप्रायत्वात्प्रतिनिधिव्यवहारस्य। यथौरसो भूयांसमुपकारं कर्तुं शक्नोति न तथेतर इत्युक्तम्' तच्चिन्त्यम्। दत्तकादीनां प्रतिनिधित्वाभावे साध्ये पुत्रोत्पा-दनकर्मणोऽनङ्गत्वस्य हेतोरपक्षधर्मत्वात्। तेषां सिद्धत्वेनोत्पादनायोग्यत्वात्।

---

कृता व्याख्या वितथम्—औरसेन सह क्षेत्रजादीनां पाठात्तुल्यत्वाशङ्कायां तन्निरासार्थमाह— **यादृशमिति**। तृणादिनिर्मितकुत्सितोडुपादिभिरुदकं तरन्यथाविधं फलं प्राप्नोति तथाविधमेव कुपुत्रैः क्षेत्रजादिभिः पारलौकिकं दुःखं दुरुत्तरं प्राप्नोति। अनेन क्षेत्रजादीनां मुख्यौरस-पुत्रवत्संपूर्णकार्यकरणक्षमत्वं न भवतीति दर्शितमिति।

उपकाराणामपचयो ह्रासस्तद्धेतुकत्वात्प्रतिनिधिव्यवहारस्येति। **तदयुक्तम्**। अयं भावः। अनेन दत्तकादीनां प्रतिनिधित्वाभावेऽनुमानं प्रदर्शितम्। अनुमानप्रयोगश्चेत्थम्— दत्तकादीन् पक्षीकृत्य प्रतिनिधित्वाभावः साध्यते, अपत्योत्पादनकर्मणोऽनङ्गत्वाद्धेतो-रिति। अनुमानप्रयोगे चोपात्तस्य हेतोः पक्षवृत्तित्वं चेत्स्यात्तदैव तदनुमानं भवितुमर्हति नान्यथा। यथा पर्वतो वह्निमान् धूमात्, इत्यनुमानस्थले धूमरूपहेतोः पर्वतरूपपक्षवृत्तित्वं चेद्वह्न्यनुमानं भवेत्। यदि तु पर्वते धूमो न दृश्येत तदा न स्यादनुमानम्। प्रकृतस्थले दत्तकादिः पक्षः। अपत्योत्पादनकर्मणोऽनङ्गत्वं हेतुः। अनङ्गत्वं नामा-ङ्गघटितत्वाभावः। न अङ्गं यस्मिन्निति बहुव्रीहिः। पुत्रोत्पादनविधौ पुत्रस्य भाव्य-त्वेन प्राधान्यात्पुत्रोत्पादनकर्मणोऽङ्गघटितत्वं न घटत इत्यर्थः। तत्र पुत्रोत्पादन-कर्मणोऽनङ्गत्वस्य हेतोः पक्षे दत्तकादावभावः स्पष्ट एव। कर्मणोऽनङ्गत्वस्य कर्म-वृत्तित्वादिति भावः। अथानङ्गत्वमुत्पादनकर्मणि। तच्चोत्पादनकर्म विषयतासं-बन्धेन पुत्रे, इत्येवं परम्परया हेतोः पक्षवृत्तित्वमङ्गी क्रियत इति चेत्तदपि नेत्याह— **तेषामिति**। तेषां दत्तकादीनाम्। **सिद्धत्वेन**। साध्यत्वाभावेनेत्यर्थः। **उत्पादनायो-ग्यत्वात्**। उत्पादनकर्मविषयत्वाभावात्। साध्यमेव ह्युत्पादनयोग्यं भवति न सिद्धम्। यथा—अविद्यमानं घटादि वस्तु कुलालेन चक्रभ्रमणादिव्यापारेणोत्पादयितुं शक्यते तद्वदिति भावः। एवं च परम्परयाऽपि हेतोः पक्षवृत्तित्वाभावान्नानुमानं संभवतीत्याशयः।

यद्यपि ऋतौ भार्याभिगमनेन पुत्रं भावयेदित्युत्पादनविधौ पुत्रस्य विधेयत्वे-नानङ्गत्वं तथाऽपि 'एष वा अनृणो यः पुत्री' इतिश्रुतिप्रतिपादिते पुत्रेणाऽऽ-नृण्यं भावयेदिति विध्यन्तरे पुत्रस्य तृतीयाविभक्त्यभिहितकरणत्वेन पुत्रेण लोका-

अथ पुत्रोत्पादनविधौ पुत्रस्य भाव्यत्वेनानङ्गत्वम् । सत्यमनङ्गत्वं किंतूत्पादनविधावेव नतु विध्यन्तरे । एष वा अनृणो यः पुत्रीत्यादिवाक्येषु पुत्रेणाऽऽनृण्यं भावयेदिति विधिपर्यवसानेन पुत्रस्याऽऽनृण्यकरणतयाऽङ्गतासिद्धेः । उक्तं च साक्षादेव मनुना पुत्रस्य करणत्वं पुत्रेण लोकाञ्जयतीत्यादिना । यद्येवं तर्हि पौत्रप्रपौत्रयोरप्यानन्त्यब्रध्नविष्टपप्राप्त्यर्थं पुत्रप्रतिनिधिः स्यात् । आस्तां नाम किं नश्छिन्नम् ।

न चोभयैकवाक्यतयैकविधित्वसंभवः । ऋतुगमनपुत्रयोः करणयोः पुत्रानृण्ययोर्भाव्ययोश्चैकविधावनन्वयात् । अन्वये च विरुद्धत्रिकद्वयापत्तेः । तस्मादानृण्य-

---

ञ्जयतीत्यत्र मनुनाऽपि पुत्रस्य साक्षात्करणत्वेनोक्तत्वेन चाङ्गत्वात्प्रतिनिधित्वं युक्तं स्यादित्यर्थः ।

ननु विध्यन्तरश्रुतकरणत्वेनाङ्गत्वमादाय प्रतिनिध्यङ्गीकारे ' पौत्रेणाऽऽनन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम् ' म० स्मृ० ९ । १३७ ) इतिवचनादानन्त्यप्राप्त्यर्थं पौत्रस्य ब्रध्नविष्टपप्राप्त्यर्थं प्रपौत्रस्य चापि पुत्रवत्प्रतिनिधिः स्यादिति शङ्कयम् । यदि पौत्रप्रपौत्रविषये प्रतिनिधिः प्राप्नोति तर्हि प्राप्नोतु इष्ट एव सोऽस्माकं नानिष्टप्रसङ्ग इत्यर्थः ।

पुत्रोत्पादनविधौ पुत्रस्य भाव्यत्वेनानङ्गत्वमुक्तं तत्रोत्पादनविधावपि पुत्रस्याङ्गत्वं वक्तुं शङ्कते—**न चेति** । अयं भावः—ऋतुगमनेन पुत्रं भावयेत्, पुत्रेणाऽऽनृण्यं भावयेत्, इत्यत्र पुत्रभाव्यकभावनानृण्यभाव्यकभावनयोर्भावयेदिति विधिरूपयोः प्रतीत्या क्रियाद्वयसत्त्वादुभयोर्भिन्नवाक्यत्वादेकवाक्यतयैकविधित्वं न संभवति ।

न चोभयवाक्यस्थकरणयोर्ऋतुगमनपुत्रयोस्तथा भाव्ययोः पुत्रानृण्ययोश्च ऋतुगमनपुत्राभ्यां पुत्रानृण्ये भावयेदित्येवमेकवाक्यतयैकभावनायां भावयेदिति विधिरूपायामन्वयः संभवति । अर्थादेकवाक्यताबलात्प्रतीयमानयोर्द्वयोर्भावनयोर्मध्ये प्रयोजनाभावादेका भावनाऽविवक्षिता भवति । ततश्चोभयोरेकवाक्यतयैकभावनायां विधिरूपायामन्वयादेकविधित्वसंभवात्पुत्रभाव्यकभावनायां पुत्रस्य करणत्वेनाङ्गत्वात्तदपचारे क्षेत्रजादीनां प्रतिनिधित्वं संभवतीति कथमुक्तं मेधातिथिना ' नह्येषां प्रतिनिधिता संभवति " इत्यादीति वाच्यम् । तथाऽन्वये सति विरुद्धत्रिकद्वयदोषापत्तेः । उद्देश्यत्वम्, अनुवाद्यत्वम् ' मुख्यत्वं चेत्येकं त्रिकम् । उपादेयत्वं, विधेयत्वम्, गुणत्वं चेत्यपरं त्रिकम् । उद्देश्यत्वं नाम मानसापेक्षो विषयत्वाकारः । ज्ञातस्य कथनमनुवादः । मुख्यत्वं प्रधानत्वम् । उपादेयत्वं नामानुष्ठीयमानताकारः । अज्ञातस्यानुष्ठेयत्वकथनं विधेयत्वम् । गुणत्वमुपसर्जनत्वम् । तत्र ऋतुगमनेन पुत्रं भाव-

भाव्यिकायां भावनायां पुत्रस्य करणतया तदपचारे दत्तकादीनां प्रतिनिधित्वमविरुद्धं सोमापचारे पूतिकानामिव। एतदेव स्पष्टीकृतं मनुना—क्रियालोपान्मनीषिण इति। क्रिया—पिण्डोदकक्रिया। औरसाभावे प्रतिनिध्यकरणे तल्लोपापत्तेः। तथाऽत्रिणाऽपि—पिण्डोदकक्रियाहेतोरिति सर्वमनवद्यम्।

यद्यपि न स्वामित्वस्य भार्यायाः पुत्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्मणः

---

येत पुत्रेणाऽऽनृण्यं भावयदित्यन्वये सति पुत्रे विरुद्धं यत्त्रिकद्वयं तत्प्रसज्यते। तथा हि—प्रथमविधौ पुत्रमुद्दिश्य ऋतुगमनमुपादीयते। अतः पुत्रस्योद्देश्यत्वम्। पुत्रमनूद्य ऋतुगमनं विधीयत इति पुत्रस्यानुवाद्यत्वम्। करणस्यर्तुगमनस्य कार्यत्वात्पुत्रः प्रधानामिति कृत्वा पुत्र उद्देश्यत्वमनुवाद्यत्वं मुख्यत्वं चेति त्रयो धर्मा विद्यन्ते। द्वितीयविधावानृण्यमुद्दिश्य पुत्रः साधकत्वेनोपादीयते। अतः पुत्रस्योपादेयत्वम्। आनृण्यमनूद्य पुत्रो विधीयत इति तस्य विधेयत्वम्। तथा भाव्यस्याऽऽनृण्यस्य करणत्वेन पुत्रस्याङ्गत्वरूपं गुणत्वं चेत्येतत्त्रिकं पुत्रे विद्यते। तत्रोद्देश्यत्वस्य साध्यत्वरूपत्वेन तद्विरुद्धमुपादेयत्वम्, उपादेयत्वस्य साधकत्वस्वरूपत्वात्। अनुवाद्यत्वस्य ज्ञातस्य कथनरूपत्वेन तद्विरुद्धं विधेयत्वम्। विधेयत्वस्याज्ञातबोधनरूपत्वात्। मुख्यत्वस्योपकार्यत्वस्वरूपत्वात्तद्विरुद्धं गुणत्वम्। गुणत्वस्योपकारकत्वस्वरूपत्वात्। एवं चैतत्त्रिकद्वयविरोधात्तयोः पुत्रोत्पादनविध्यानृण्यविध्योरेकविधित्वं न संभवतीति भावः। तस्मात्सोमेन यजेतेत्यत्र सोमस्य करणत्वेनाङ्गत्वात्तदपचारे 'यदि सोमं न विन्देत्पूतीकानभिषुणुयात्' इति श्रुतेः पूतीकलताखण्डानां प्रतिनिधित्ववत् पुत्रेणाऽऽनृण्यं भावयेदित्यानृण्यभाव्यिकायां भावयेदिति विधिरूपायां भावनायां पुत्रस्य करणत्वेनाङ्गत्वात्तदपचारे दत्तकादीनां प्रतिनिधित्वमविरोधि। नतु ऋतुगमनेन पुत्रं भावयेदिति पुत्रभाव्यिकायां भावनायां पुत्रस्य भाव्यत्वेनानङ्गत्वात्तदपचारे दत्तकादीनां प्रतिनिधित्वमिति निष्कर्षः। एतदेव स्पष्टमुक्तं मनुना—पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण इति। क्रिया—पिण्डोदकादिक्रिया। 'पिण्डोदकक्रियाहेतोः' इति वचनेनैकवाक्यत्वात्। औरसाभावे प्रतिनिध्यस्वीकारे पिण्डोदकादिलोपः प्रसज्येत। किंच 'अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा' इत्यत्रिवचसौरसाभावे दत्तकादीनां प्रतिनिधित्वं स्पष्टमेवोक्तमिति ज्ञेयम्।

औरसाभावे यः प्रतिनिधिरुक्तस्तमाक्षिपति—**यद्यपीति**। **न स्वामित्वस्येति**। स्वामिनः फलभोक्तुः पुरुषान्तरं प्रतिनिधिर्नास्ति। तदुक्तं जैमिनिना—स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात् (जै० सू० ६। ३। २१) इति। फलस्य कर्मयोगित्वात्। प्रयोक्तृगामित्वात्। फलसमवायात्प्रतिनिधौ फलोत्पत्त्यापत्तेः स्वामिनः

शब्दस्य च प्रतिनिधिरिति सत्याषाढवचनेन पुत्रप्रतिनिधिनिराकरणं तत् ‘ तन्तवे ज्योतिष्मतीं तामाशिषमाशास्महे ’ इत्यादावपुत्रस्य पुत्रप्रतिनिधिं कृत्वाऽऽशीराशंसननिवृत्त्यर्थम् । अत एव श्रुतिः–‘ यस्य पुत्रो जातः स्यात्तन्तवे ज्योतिष्मतीमिति ब्रूयात् ’ इति । तथा पितापुत्रीय सामनि ‘ अमुकस्य पिता यजते ’ इत्यादावपुत्रस्य पुत्रप्रतिनिधिं कृत्वा तत्प्रवचननिराकरणार्थं न पुनः सर्वथैव पुत्रप्रतिनिधिनिराकरणार्थम् । ‘ पुत्रप्रतिनिधीनाहुः ’ इत्यादिस्मृतिविरोधात् ।

---

प्रतिनिधिर्नास्तीति तदर्थः । भार्यायाः स्त्र्यन्तरं प्रतिनिधिर्नास्ति पुत्रस्य पुत्रान्तरं न प्रतिनिधिः । देशस्य कुरुक्षेत्रादेः प्रयागादिर्न प्रतिनिधिः । कालस्य प्रातःकालादेर्न सायंकालादिः प्रतिनिधिः । अग्नेराहवनीयादेरसंस्कृतोऽग्निः प्रतिनिधिर्न भवति । देवतायाः शिवस्य न विष्णुः प्रतिनिधिः । कर्मणः प्रोक्षणादेः कर्मान्तरं न प्रतिनिधिः । शब्दस्य बर्हिर्देवसदनं दामीत्यादेर्मन्त्रान्तरं न प्रतिनिधिः । तदुक्तं जैमिनिना—‘ न देवताग्निशब्दक्रियमन्यार्थसंयोगात ’ ( जै० सू० ६ । ३ । १८ ) इति । अस्यायमर्थः—देवता, इन्द्रादिः । अग्निराहवनीयादिः । शब्दा मन्त्रकलापः । क्रिया प्रयाजादिः । न प्रतिनिधिमर्हति । अन्यार्थेन संयोगात् । अत्रार्थशब्दो न्यायपरः । तथा च प्रतिनिधिसाधका या न्यायस्तस्मादन्येन न्यायेन युक्तत्वाद्देवतादेः । अयं भावः—द्रव्यस्य पुरोडाशसाधकत्ववन्नीवारस्यापि तत्साधकत्वं प्रत्यक्षगम्यम् । देवतादेरदृष्टसाधकत्वं, विहितदेवताप्रयोज्य यददृष्टं तदन्येन भवतीति शास्त्रमन्तरा ज्ञातुमशक्यमिति । इत्येवं सत्याषाढवचनेन यत्पुत्रप्रतिनिधिनिरसनं तत ‘ तन्तवे ज्योतिष्मती तामाशिषमाशास्महे ’ इति यदाशीराशंसनमुक्तं तदपुत्रेण पुत्रप्रतिनिधिं गृहीत्वा न करणीयमित्येवंपरम्, न सर्वात्मना पुत्रप्रतिनिधिनिषेधकम् ।

ननु सत्याषाढकृतपुत्रप्रतिनिधिनिषेध आशीराशंसनकर्मण्येवेति कुत इत्यत आह—**अत एव श्रुतिरिति** । यस्य पुत्रो जातः स्यात । औरसः पुत्रो यस्य स्यादित्यन्वयः । सर्वं वाक्यं सावधारणमिति न्यायेनौरसपुत्रवतैवाऽऽशीराशंसनं कर्तव्यं न दत्तकादिपुत्रवतेत्यर्थः । **पितापुत्रीय इति** । किञ्च पितृनामपुत्रनामयुक्तः ‘ अमुकस्य पिता यजते ” इत्येवंरूपो यः सामप्रवचनविधिः पुत्रवतो विहितः स दत्तकादिपुत्रवता मा प्रमाङ्क्षीदित्येवंपरः पुत्रप्रतिनिधिप्रतिषेधः । पितापुत्रीयसामप्रवचनविधिरपुत्रेण पुत्रप्रतिनिधिं कृत्वा नानुष्ठेय इति भावः । तथा च सत्याषाढेन मुनिना यः पुत्रप्रतिनिधिनिषेधोऽभिहितः स निरुक्ताशीराशंसनसामप्रवचनविषय एवेति न कोऽपि विरोधः । सत्याषाढकृतनिषेधस्य सर्वथा पुत्रप्रतिनि-

**अथेदं चिन्त्यते—योऽयं पुत्रप्रतिनिधिर्विधीयते स किं पुत्रोत्पादनविधावुत पिण्डोदकादिविधाविति, उभयथा श्रवणात् । यथा—अपुत्रेणैव कर्तव्य इत्यनेन पुत्रोत्पादनविधौ पिण्डोदकक्रियाहेतोरित्यनेन च पिण्डोदकादिविधाविति । तत्र नाऽऽद्यः। पुत्रोत्पादनविधौ पुत्रस्य भाव्यत्वेनानङ्गतया प्रतिनिध्ययोग्यत्वात् । न द्वितीयः। विरोधात् । अपुत्रं प्रति पुत्रप्रतिनिधिः श्रूयते न तत्कृता पिण्डोदक-**

---

धिनिराकरणार्थत्वे ‘ पुत्रप्रतिनिधीनाहुः । पुत्रप्रतिनिधिः सदा ’ इत्यादिबहुवचनव्याकोपापत्तिरित्याशयः ।

अथेदं चिन्त्यते अपुत्रेणैवेत्यत्रिवचनेन योऽयं दत्तकादिः प्रतिनिधिरभिहितः स किमपुत्रेणेत्यपत्रस्य कर्तृत्वश्रवणादौरसपुत्रोत्पादनाभावे तदर्थं प्रतिनिधिराहो-स्वित्पिण्डोदकक्रियाहेतोरित्यादिश्रवणात्पिण्डोदकाद्यभावे प्रसक्ते तदर्थं प्रतिनिधि-रिति । तत्र न प्रथम इत्याह— **पुत्रोत्पादनविधाविति** । ऋतुगमनेन पुत्रमुत्पाद-येदिति विधौ पुत्रस्य विधेयत्वेन प्राधान्यादङ्गत्वाभावेनाङ्गापचारे प्रतिनिधिरिति पूर्वोक्तयुक्तिविरोधेन तस्य प्रतिनिधियोग्यत्वाभावात् । द्वितीयोऽपि न विरोधादिति वदंस्तमेव विरोधं प्रतिपादयति **अपुत्रं प्रतीति** । अपुत्रेणैव कर्तव्य इति वच-नादपुत्रकर्तृकः प्रतिनिधिविधिः श्रूयते । यदर्थं च प्रतिनिधिरुपादीयते सा पिण्डो-दकदानादिक्रिया येन प्रतिनिधिः स्वी क्रियते तत्कर्तृका न भवति, किंतु पुत्रक-र्तृका । यत्कर्तृका च पिण्डोदकादिक्रिया न तत्कर्तृकः प्रतिनिधिविधिः । ततश्च प्रतिनिधिस्वीकर्तुः पिण्डोदकादिक्रियाकर्तृत्वं न लभ्यत इत्यन्यकर्तृके पिण्डोदका-दिकर्मण्यन्यं प्रति प्रतिनिधिर्विधीयत इत्यनुचितमित्ययं विरोध इत्यर्थः । किंच पिण्डोदकादिविधेः कर्ता पुत्रः । कर्तुश्च प्रतिनिधिर्नास्ति । क्रियाकर्तुः फलभो-क्तृत्वेन स्वामित्वात्स्वामिनश्च प्रतिनिध्यभावात् । तदुक्तं जैमिनीयनये—‘ स्वामिनः फल-समवायात्फलस्य कर्मयोगित्वात् ’ ( जै० सू० ६ । ३ । २१ ) इति । स्वामिनः प्रतिनिधिर्नास्ति । यतः फलस्य प्रयोक्तृगामित्वं वर्तते । प्रयोक्ता हि स उच्यते यो ह्यनेन कर्मणेदं फलं मां प्राप्नुयादिति शास्त्रान्निश्चित्य तत्र प्रवृत्तः । यदि तु स्वामिना प्रतिनिधिर्गृह्येत तदा तं प्रतिनिधिं कर्मफलं नोपतिष्ठे-दित्यनेन बोधितम् । यदि च प्रतिनिधिं प्रति फलं प्राप्नुयादित्युच्यते तर्हि तस्य फलसमवा-यात्स्वामित्वापत्तिः । एतावता स्वामिनः क्रियाकर्तुः प्रतिनिधिर्नास्तीति तात्पर्यमिति तदर्थः । अथ कर्तुः कार्यद्वयम् । क्रियानिष्पादकत्वं तत्फलभोक्तृत्वं च । तत्र फलभोगांशे पूर्वोक्तन्यायेन प्रतिनिधेरभावेऽपि क्रियानिष्पादकत्वांशे प्रतिनिधिः संभ-वेत् । यथा ‘ ऋद्धिकामाः सत्रमासीरन् ’ इत्युक्ते सप्तदशसंख्याकपुरुषकर्तृके सत्र

क्रिया । पुत्रकर्तृका च पिण्डोदकक्रिया न तं प्रति प्रतिनिधिविधिरिति । किंच पिण्डोदकादिविधिः पुत्रकर्तृको न च कर्तुः प्रतिनिधिः । अथापि क्रियाकर्तृत्वांशे प्रतिनिधिर्न फलभोगांशे, यथा सत्रे सप्तदशानामन्यतमस्य मृतस्य क्रियाकर्तृत्वांशे प्रतिनिधिस्तथाऽत्रापीति वाच्यम् । तदपि न । वैषम्यात् । सत्रे ह्यारब्धक्रियस्य प्रतिनिधिः प्रकृते त्वत्यन्तासतः क्रियारम्भस्यैवासंभवात्कथं प्रतिनिधिसंभवः । न च प्रतिनिधिना क्रियारम्भो न्यायवित्संमतः ।

अथापुत्रस्य जीवच्छ्राद्धे स्वकर्तृक एव पिण्डादिविधिरिति तत्रैव प्रतिनिधिरिति वाच्यम् । तदपि न । पुत्रप्रतिनिधिसंभवे जीवच्छ्राद्धविधेरेवाप्रवृत्तेः । किंच जीवच्छ्राद्धस्य स्वकर्तृकत्वेन स्वस्यैव प्रतिनिधिः स्यान्न पुत्रस्य । पुत्रकर्तृत्वाभा-

---

एकस्यर्त्विजोऽपचारे क्रियाकर्तृत्वांशे ऋत्विगन्तरं प्रतिनिधित्वेन स्वी क्रियते तद्वदत्रापीति चेत्तदपि न समीचीनम् । दृष्टान्तस्य वैषम्यात् । तदेव वैषम्यं प्रदर्शयितुमाह—**सत्रे हीति** । सत्रनामके यागे हि प्रारब्धक्रियस्यर्त्विजो मृतावन्यस्तत्कार्यकारी प्रतिनिधित्वेन गृह्यते । प्रकृतस्थले च यः क्रियाकर्ता मुख्यः पुत्रः सोऽत्यन्तासन्ननुत्पन्न एव । अपुत्रं प्रति दत्तकविधानश्रवणात । ततश्च पुत्रस्य क्रियाकर्तुरेवात्यन्ताभाव इति दूरे तत्कर्तृकक्रियाया आरम्भः । यथा केतोर्ग्रहस्य शिर एव नास्ति कथं तस्य शिरोव्यथेति भावः । एवं च क्रियाकर्तुर्मुख्यपुत्रस्याभावेनापुत्रस्य क्रियैव नास्ति तत्र कथमिव क्रियाकर्तृत्वांशे प्रतिनिधिग्रहणावसरः । अथ मुख्यपुत्राभावेन मा भूदपुत्रस्य क्रियारम्भः, किंतु प्रतिनिधिनैव क्रियारम्भः कार्य इत्याशङ्क्याऽऽह—**न च प्रतिनिधिनेति** । प्रतिनिधिद्वारा क्रियारम्भो मीमांसकसंमतो न भवतीत्यर्थः । काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः । काम्येऽप्युपक्रमादूर्ध्वं केचित्प्रतिनिधिं विदुः ॥ इति स्मृतेः ।

दैवान्मानुषाद्वाऽपराधात्क्रियाकर्तुर्मुख्यपुत्रादेरभावेन स्वौर्ध्वदेहिकादिक्रियात्यन्ताभावसंभावनायां स्वजीवनदशायामेव स्वेनैव स्वकीयश्राद्धादिविधिरनुष्ठेय इत्यभिहितं धर्मनिबन्धेषु । तादृशविध्यनुसारेणापुत्रस्य जीवच्छ्राद्धे स्वकर्तृक एव पिण्डादिविधिरिति तदपचारे क्रियाकर्तृत्वांशे प्रतिनिधिसंभवो युक्त एवेति चेत्तदपि न शोभनमित्याह—**तदपि नेति** । तादृशपिण्डादिविधिसंपत्त्यर्थमेव पुत्रप्रतिनिधिविधानस्याभिहितत्वाद्दत्तकादिनैव तन्निर्वाहे जीवच्छ्राद्धविधेर्गर्भस्रावेणैव विलीनत्वात्तदुत्थितेरेवासंभवात् । अथ यथाकथंचिद्गत्या जीवच्छ्राद्धविधिरभ्युपेतव्यस्तथाऽपि न प्रतिनिधिसंभव इत्याह—**किंचेति** । यस्य जीवतः श्राद्धं तत्र स जीवन्नेव कर्तेति तस्य जीवत एव

वात्। तस्माल्लोकविधिद्वयेऽपि पुत्रप्रतिनिधिसंभवः। किंच पिण्डोदकक्रिया-हेतोरिति हेतुवचनमप्ययुक्तमेव। अपक्षधर्मत्वात्। नह्यपुत्रस्य पिण्डोदकक्रिया-प्राप्तिरस्तीत्युक्तमेवेति।

अत्रोच्यते—नापुत्रस्य लोकोऽस्तीत्याद्यर्थवादानुगृहीते पुत्रेण लोकाञ्जयतीत्या-दिविधौ पुत्रापचारे क्षेत्रजाद्येकादशविधः प्रतिनिधिर्विधीयते। तत्र च लोक-पुत्रयोः साध्यसाधनभावनिर्वाहकावान्तरव्यापारभूताक्रियापेक्षायां पिण्डोदकक्रि-याहेतोरित्युच्यते।

सदेति। 'वन्ध्याऽष्टमेऽधिवेत्तव्या' इत्यादिवदत्रावधिप्रतीक्षाभावं बोधयति।

---

दत्तकादिः प्रतिनिधिः स्यान्न पुत्रप्रतिनिधिः। जीवच्छ्राद्धस्य पुत्रकर्तृकत्वाभावादिति भावः। **विधिद्वयेऽपीति**। पुत्रोत्पादनविधौ पिण्डोदकादिविधौ च प्रतिनिधिर्नैव संभवतीत्यर्थः। ननु पिण्डोदकक्रियाहेतोरिति हेतुवचनोपन्यासादपुत्रं प्रति पुत्रप्र-तिनिधिविधानमनर्थकमायत इति चेन्नैवमित्याह—**किंचेति**। अपुत्रं पक्षीकृत्य पुत्रप्र-तिनिधिमत्त्वं साध्यते पिण्डोदकक्रियावत्त्वाद्धेतोरित्यनुमानप्रयोगो बोध्यः। **अपक्षधर्मत्वादिति**। पुत्रप्रतिनिधिमत्त्वसाध्यके पवोक्तेऽनुमाने पिण्डोदकक्रियाव-त्त्वस्य हेतोः पक्षेऽपुत्रेऽसत्त्वाद्धेतुवचनमयुक्तमित्यर्थः। यतः पिण्डोदकक्रियायाः पुत्र-कर्तृकत्वेन श्रवणादपुत्रस्य तादृशक्रियाकरणाप्रसक्तेः। 'अथेदं चिन्त्यते' इत्या-रभ्य योऽयं पूर्वपक्ष उद्भावितस्तत्समाधिपूर्वकं सिद्धान्तं प्रदर्शयति—**अत्रोच्यत इति**। पुत्रहीनस्य लोकाभावरूपनिन्दार्थवादोपोद्बलिते पुत्रेण लोकाञ्जयति, पुत्रकरणकलोक-कर्मकभावनाविधावङ्गस्य पुत्रस्यापचारे तदर्थं क्षेत्रजादय एकादश प्रतिनिधयोऽभि-धीयन्ते। तत्र लोकस्य साध्यत्वं पुत्रस्य च साधनत्वमवगम्यते। द्रव्यं च क्रियामन्तरेण फलं साधयितुं न क्षमत इति लोकपुत्रयोः साध्यसाधनभावनिर्वाह-कावान्तरव्यापारजिज्ञासायां पिण्डोदकक्रियाहेतोरित्युक्तम। पिण्डोदकश्राद्धादिभिरेव तन्निर्वहति न स्वरूपतः। अन्यथा पतितषण्ढादिनाऽपि पुत्रेणालोकतापरिहारो भवे-दित्याशयः।

**सदेतीति**। पुत्रप्रतिनिधिः कदा कर्तव्य इत्याकाङ्क्षायां यथा प्रथमर्तुमार-भ्याष्टवर्षपर्यन्तं यदि पुत्रोत्पत्तिर्न जायेत तदा वन्ध्यां तां निश्चित्य पुत्रार्थं भार्या-न्तरं करणीयमिति भार्यान्तरकरणस्य कालावधिः 'वन्ध्याऽष्टमेऽधिवेत्तव्या दशमे च मृतप्रजा। एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी' (म० स्मृ० ९। ८१) इति वचनेनोक्तस्तथा पुत्रप्रतिनिधिकरणे कियन्त्यपि वत्सराणि प्रतीक्षां कृत्वा तत ऊर्ध्वं दत्तको ग्राह्य इत्येवं कालावधिर्नास्तीति सदेत्यनेन प्रतिपाद्यते। किंतु यदाऽपुत्रत्वावधारणं भवेत्तदा दत्तको ग्राह्य इत्यर्थः। अधिवेत्तव्या। अधिवेदनं

पिण्डः श्राद्धम् । उदकमञ्जलिदानादि । क्रिया—और्ध्वदेहिकं दाहादि । अत एव हेतुः पुत्रीकरणे निमित्तम् । हेतुरित्येकत्वनिर्देशान्मिलितानामेषां निमित्तत्वं न प्रत्येकमिति गमयति । तेन नैकैकार्थं न पृथक्पृथक्पुत्रीकरणम् । किंतु सर्वार्थमेकमेव पुत्रीकरणमित्यर्थः । पुत्राभावे पिण्डादिलोपप्रसङ्गात् । अत एव मनुः—

'पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः' इति

क्रियालोपादिति व्यतिरेके हेतुः । पुत्रप्रतिनिध्यभावे क्रियालोपादित्यर्थः । यद्वा, अलोपादिति पदच्छेदः । अलोपादिति ल्यब्लोपे पञ्चमी । अलोपार्थमित्यर्थः । यद्यपि 'पुत्राभावे तु पत्नी स्यात्' इत्यादिना पुत्राभावे पत्न्यादीनामपि क्रियाधिकारः श्रूयते, तथाऽपि 'नापुत्रस्य लोकोऽस्ति' इत्यादिश्रवणात्पुत्रकृतक्रियाजन्या लोका न स्यादिकृतक्रियया जन्यन्त इत्यवश्यं वाच्यम् । अन्यथा पुत्रप-

---

भार्यान्तरकरणम् । पिण्डश्चोदकं च क्रिया च पिण्डोदकक्रियाः । ता एव हेतुरिति विग्रहः । ननु श्राद्धोदकाञ्जलिदाहादीनां पुत्रीकरणे निमित्तत्वं तृणारणिमणिन्यायेन प्रत्येकं स्यादित्याशङ्क्य तन्नेत्याह—हेतोरित्येकत्वेति । यदि पिण्डादीनां प्रत्येकं पार्थक्येन निमित्तत्वमभीष्टं स्यात्तदा पिण्डोदकक्रिया एव हेतव इत्येवं बहुवचनान्तहेतुशब्देन समासं कृत्वा निर्देशे कर्तव्ये यद्धेतोरित्येकवचनेन निर्देशं करोति तत एवं सूचयति यत्पिण्डादीनां त्रयाणां मिलित्वा निमित्तत्वं न स्वातन्त्र्येण प्रत्येकमिति । दण्डचक्रकुलालादीनां सर्वेषां मिलित्वा घटकारणत्वं न प्रत्येकं तद्वदिति भावः । तेन सर्वार्थमेक एव पुत्रीकर्तव्यो न पृथक्पृथक् इति सिध्यति ।

ननु पुत्रीकरणाभावे का हानिरित्यत आह—**पिण्डादिलोपप्रसङ्गादिति** । मनुवचने क्रियालोपादित्यस्य प्रतिनिध्यकरण इत्यादिर्बोध्यः । तदुक्तं मूले—**व्यतिरेके हेतुरिति** । प्रतिनिध्यभावे सति क्रियालोपः स्यादतः प्रतिनिधिः कर्तव्य इत्येवंरीत्या हेतुर्बोध्य इत्यर्थः । **यद्वेति** । क्रियाया अलोपात् इति च्छेदे क्रियालोपो मा भूदित्येतदर्थं प्रतिनिधिः कार्य इति सरल एवार्थः । ननु किमर्थं दत्तको ग्राह्य इत्युच्यते । यतः पत्न्या अपि क्रियाधिकारश्रवणात्तयैव पिण्डोदकक्रियाया निर्वाहादित्यत आह—**यद्यपीति** । अपुत्रस्यालोकताभिधानात्पुत्रकृतपिण्डोदकादिक्रियानिबन्धना लोकाः स्त्र्यादिना कृतया पिण्डोदकादिक्रियया नैवोत्पद्यन्त इत्यगत्याऽवश्यं स्वीकार्यम् । इतरथा पुत्रस्य पत्न्यादेश्च समानफलकक्रियाधिकारे समकक्षतया विकल्पापत्तौ पुत्राभावे तु पत्नी स्यात्, इत्येवं पुत्राभावदशायां पत्न्याः क्रियाधिकारविधानमनुपपन्नं स्यात् । अतः पुत्रानुष्ठितया क्रियया ये लोकाः प्राप्यन्ते ते लोकविशेषाः प्राप्नुयुरित्येतदर्थं पुत्रप्रतिनिधिरवश्यमङ्गीकार्य इत्यर्थः । प्रतिपादितेऽर्थे

त्न्यादीनां तुल्यफलकक्रियाधिकारे तुल्यतया विकल्पापत्त्याऽभावविधानानुपपत्तेः। तस्मात्पुत्रकृतक्रियाजन्यलोकविशेषसिद्ध्यै पुत्रप्रतिनिधिरावश्यक इति। उक्तं च मेधातिथिना—तत्र च यदौरसस्य प्रथमकल्पिकत्ववचनं तन्न व्यवहारोपयोगि किंतूपकारातिशयाय। यथौरसो भूयांसं शक्नोत्युपकारं कर्तुं न तथेतर इति। उपकारापचयाभिप्रायश्च प्रतिनिधिव्यवहार इति।

यत्तु तेनैव क्रियाल्लोपादित्यत्र क्रियत इति क्रिया, अपत्यमुत्पादयितव्यमिति विधिस्तस्य लोपो मा भूदिति नित्यो ह्ययं विधिः स यथाकथंचिद्गृहस्थेन संपाद्यस्तत्र मुख्यः कल्प औरसस्तदसंपत्तावेते कल्पा आश्रयितव्या इति व्याख्यातम्। तच्चिन्त्यम्। किं पुत्रोत्पादनविधेर्दत्तकादिविधिः प्रतिनिधिरित्युच्यत आहोस्विदौरसस्य दत्तकादिरिति। नाऽऽद्यः। 'न देवताग्निशब्दक्रियम्' इत्यस्मिन्नधिकरणे क्रियायाः प्रतिनिधिनिराकरणात्। न द्वितीयः। नह्येषां प्रतिनिधिता संभवतीत्यादिपूर्वग्रन्थविरोधात्। तत्र पुत्रोत्पादनविधौ पुत्रस्य भाव्यत्वेनानङ्गतया प्रतिनिध्यसंभवाभिधानात्। तस्मान्न क्रियाशब्देन पुत्रोत्पादनविधिः किंतु पिण्डोदकक्रियैव वाच्या। पिण्डोदकक्रियाहेतोरित्यत्रिवाक्यैकवाक्यत्वादित्यलम्।

---

मेधातिथिं प्रमाणयति—उक्तं चेति। स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम्। तमौरसं विजानीयात्पुत्रं प्रथमकल्पिकम्॥ ( म० स्मृ० ९। १६६ ) इति मनुवचने यदौरसपुत्रस्य प्राथमिकत्वप्रतिपादनं तन्न केवलं दृष्टफलकं किंत्वदृष्टफलकमपीति भावः। यथौरसो दृष्टादृष्टरूपं श्राद्धादिना पालनपोषणादिना च भूयांसमुपकारं कर्तुमर्हति न तथेतरे पत्न्यादयो दत्तकादयश्च। पत्न्यादीनां स्वतः पार्वणपिण्डदातृत्वाभावाद्दत्तकादीनां स्वाभाविकप्रेमातिशयाभावादित्युपकारन्यूनत्ववशात्प्रतिनिधिव्यवहार इति भावः। तथा च स्त्रियाः क्रियाधिकारेऽपि न तथा भूयानुपकारः कर्तुं शक्य इति पुत्रप्रतिनिधिरावश्यक इति तात्पर्यम्।

मेधातिथिमतस्यायोग्यत्वं प्रदर्शयितुं तन्मतमनुवदति—यत्तु तेनैवेति। क्रियत इति क्रिया, इति व्युत्पत्त्या क्रियाशब्दस्यापत्योत्पादनविधिरर्थ इत्यर्थः। तादृशव्याख्याने तामेव चिन्तां प्रदर्शयति—किं पुत्रोत्पादनेति। एतत्तत्त्वं प्राक् ( ३५-३६ ) पृष्ठे प्रतिपादितम्। तस्मात्क्रियाशब्देनापत्योत्पादनविधिर्ग्रहीतुं न शक्यः, किंतु पिण्डोदकादिः क्रियैव ग्राह्या भवति। पिण्डोदकक्रियाहेतोरित्यत्रिवचनैकवाक्यत्वादित्याशयः।

प्रयत्नत इति। पञ्चम्यास्तसिल्। यस्मात्तस्मादिति सामानाधिकरण्यात्। ततश्च येन केनापि प्रयत्नेन पुत्रप्रतिनिधिः कार्य इत्यर्थः। तत्र प्रयत्नसामान्य-श्रुतावप्येकादशपुत्रश्रवणादेकादशैव प्रयत्ना अभ्यनुज्ञायन्ते। तत्रापि कलौ—

अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः।
न शक्यास्तेऽधुना कर्तुं शक्तिहीनतया नरैः।

इति बृहस्पतिश्रवणात्

'दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः'

इति च शौनकेन पुत्रान्तरनिषेधाद्दत्तौरसावेवाभ्यनुज्ञायेते। दत्तपदं कृत्रिम-स्याप्युपलक्षणम्।

'औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः'

इति कलिधर्मप्रस्तावे पराशरस्मरणात्।

न चैवं क्षेत्रजोऽपि पुत्रः कलौ स्यादिति वाच्यम्। तत्र नियोगनिषेधेनैव तन्नि-षेधात्। अस्तु तर्हि विहितप्रतिषिद्धत्वाद्विकल्प इति चेन्न। दोषाष्टकापत्तेः।

---

**प्रयत्नत इति**। यस्मात्तस्मादिति विशेषणेन पञ्चम्यन्तेन सामानाधिकरण्या-द्विशेष्ये प्रयत्नत इत्यत्र पञ्चम्यन्तात्तसिलप्रत्ययो बोध्यः। अत्र यद्यपीदृशस्ता-दृश इत्येवं विशेषानुपादानेन सामान्यतः प्रयत्नपदोपादानेऽपि क्षेत्रजाद्येकादशपु-त्रमध्ये दत्तककृत्रिमौ द्वावेव प्रयत्नौ बोध्यौ। इतरेषां क्षेत्रजादिपुत्रान्तराणां कलौ निषेधश्रवणात्। तदाह—**अनेकधेति**। एकादशधेत्यर्थः। शक्तिहीनतया—अपवित्रप-वित्रीकरणवरदानशापदानादिनिग्रहानुग्रहक्षमब्रह्मवर्चसादितपस्तेजोरहिततया।

ननु 'औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः' इति पराशरस्मृतिवचनात्कलौ दत्तका-दिवत्क्षेत्रजोऽपि पुत्रः स्यादिति वाच्यम्। कलौ नियोगविधिनिषेधेनैव तन्निषेधस्य सिद्धत्वात्। तदुक्तं याज्ञवल्क्यस्मृतिटीकायां वीरमित्रोदयाभिधायाम् (पृ० १३३)-उक्तो नियोगो मनुना निषिद्धः स्वयमेव च। युगह्रासादशक्योऽसौ कर्तुमन्यैर्वि-धानतः॥ तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः। द्वापरे च कलौ नृणां शक्ति-हानिर्विजायते॥ इति। ननु 'औरसः क्षेत्रजश्चैव०' इति पराशरवचनेन कलावपि क्षेत्रजः पुत्रो विहितः 'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः। अन्य-स्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम्' (म० स्मृ० ९। ६४) इति मनुना च क्षेत्रजः पुत्रो नियोगनिषेधान्निषिद्धः। ततश्च विहितप्रतिषिद्धत्वा-त्क्षेत्रजपुत्रविषये विकल्पोऽस्त्वित्याशङ्कयाऽऽह—**दोषाष्टकेति**। दोषाष्टकं यथा—प्रमा-णत्वाप्रमाणत्वपरित्यागप्रकल्पनात्। प्रत्युज्जीवनहानिभ्यामष्टौ दोषाः प्रकीर्तिताः॥

कथं तर्ह्यत्र क्षेत्रजग्रहणमिति चेत् । औरसविशेषणत्वेनेति ब्रूमः । तथा च मनुः—

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः ।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पिकम् ॥ इति ।

तयोर्मध्ये दत्तकाविधिरभिधीयते । स च कः कीदृशश्च कथं ग्राह्य इति त्रितयं निरूपणीयम् । तत्र के इत्याह शौनकः—

ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः ।

---

इति । अयं भावः—अगतिका हीयं गतिर्यद्विकल्पाश्रयणं तस्याष्टदोषग्रस्तत्वात् । तथा हि—व्रीहिभिर्यजेत यवैर्वा यजेतेति वाक्यद्वयमपि मानम् । तत्र केनापि हेतुना व्रीहिवाक्याश्रयणे यववाक्यमनाश्रयणीयम् । श्रुतनैरपेक्ष्यविरोधाद्युगपदुभयानुष्ठानायोगात् । अतो यववाक्यस्थं मानं हेतुमूते त्याज्यम् । तस्य त्यक्तमानत्वस्यामानत्वमेष्टव्यम् । अथ प्रयोगाङ्गत्वेन यवाङ्गीकारे त्यक्तमानत्वस्य पुनराश्रयणं तन्निरासेन स्वीकृतामानत्वस्य पुनस्त्यागश्चेत्येकस्मिन्वाक्ये चत्वारो दोषाः । एवं द्वितीयेऽपि वाक्ये प्राप्तत्यागाप्राप्ताश्रयणत्यक्तस्वीकारोपात्तत्यागा इति त एव दोषाः, इत्यष्टौ दोषाः । एवं प्रकृते मनुवाक्यं पराशरवाक्यं चोभयमपि मानम् । तत्र मनुवाक्याश्रयणे पराशरवाक्यमनाश्रयणीयम् । अतः पराशरवाक्यस्थं मानं परित्यक्तव्यम् । तस्य त्यक्तमानत्वस्यामानत्वमेष्टव्यम् । अथ पराशरवाक्याङ्गीकारे त्यक्तमानत्वस्य पुनराश्रयणम् । स्वीकृतामानत्वस्य पुनस्त्याग इति चत्वारो दोषाः । एवं द्वितीयवाक्येऽपीति विकल्पस्याष्टदोषग्रस्तत्वात्सत्यां गतावाश्रयणमयुक्तम् । तदुक्तम्—एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ॥ इति । ननु तर्हि 'औरसः क्षेत्रजश्चैव' इति पराशरवचन औरसग्रहणस्य का गतिरिति चेदुच्यते । तस्मिन्वचने 'यस्तल्पजः प्रमीतस्य०' ( म० स्मृ० ९ । १६७ ) इत्युक्तस्य पारिभाषिकस्य क्षेत्रजस्य ग्रहणमिति न मन्तव्यं, किंतु क्षेत्रे जातः क्षेत्रज इति यौगिकस्य ग्रहणम् । तच्चौरसस्य विशेषणं बोध्यम् । तथा चोक्तं मनुना—स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् । तमौरसं विजानीयात्पुत्रं प्रथमकल्पिकम् ॥ इति । तत्र स्वक्षेत्र इति विशेषणस्य प्रयोजनं तु परक्षेत्रे नियोगेनोत्पादिते क्षेत्रज औरसत्वातिव्याप्तिनिवारणमिति बोध्यम् ।

**तयोरिति** । औरसदत्तकयोः । दत्तकः को ग्राह्यः, कीदृशो ग्राह्यः, कथं च ग्राह्य इति निरूपणीयत्रितयमध्ये को ग्राह्य इति जिज्ञासायामाह शौनकः— **ब्राह्मणानामिति** । **सपिण्डेष्विति** । पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।

तदभावेऽसपिण्डं वा अन्यत्र तु न कारयेत् ॥ इति ।

सपिण्डेषु सप्तमपुरुषावधिकेषु । सपिण्डेष्विति सामान्यश्रवणात्समानासमानगोत्रेष्विति गम्यते । तत्र समानगोत्रतायाम्—

'सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥

इति वृद्धगौतमीयं वचनं प्रमाणम् । गोत्रतां संततित्वम् ।

दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः ।
आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ।

इति कालिकापुराणात् ।

'संततिर्गोत्रजननकुलान्यभिजनान्वयौ'

---

सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः ॥ इति वचनोक्तेषु मातृतः पञ्चमपुरुषावधिकेषु पितृतः सप्तमपुरुषावधिकेष्वित्यर्थः । ते च सपिण्डा द्विविधाः । सजातीया भिन्नजातीयाश्च । सजातीयाः पुनर्द्विविधा—समानगोत्रा भिन्नगोत्राश्चेति । सापिण्ड्यं च द्विविधम्— मूलपुरुषैकशरीरावयवान्वयलक्षणमवयवसापिण्ड्यमिति मदनपारिजातविज्ञानेश्वरवाचस्पत्यादयः । एकपिण्डदानक्रियान्वयलक्षणं निर्वाप्यसापिण्ड्यमिति चन्द्रिकापरार्कमेधातिथिमाधवादयः । तत्र भिन्नजातीयाः सपिण्डा यथा ब्राह्मणेन क्षत्रियवैश्यशूद्रकन्यासु परिणीतासूत्पादिताः क्रमेण मूर्धावसिक्ताम्बष्ठपारशवाख्याः पुत्राः । तेष्वश्वतरवन्मातापितृजातिव्यतिरिक्तसंकीर्णजातित्वेन पिण्डदानानर्हत्वान्निर्वाप्यसापिण्ड्याभावेऽप्यवयवलक्षणसापिण्ड्यस्य सत्त्वात् । भिन्नगोत्राः सजातीयाः सपिण्डा मातामहकुलीना मातुलतत्पुत्रादयः । समानगोत्राः सजातीयाः सपिण्डा मूलपुरुषादारभ्य सप्तमावसाना अवयवसापिण्ड्यभाजो निर्वाप्यसापिण्ड्यभाजो वा । सजातीयैर्भिन्नगोत्रैरपि यैः सह विवाहो न जातस्तादृशा भिन्नवंशीयाः सपिण्डा न संभवन्त्येव । भिन्नवंशीयेषु तेषु द्विविधस्यापि सापिण्ड्यलक्षणस्यानन्वयादिति । त एते सर्वे संबन्धिनः । सापिण्ड्यस्य संबन्धलक्षणत्वात् । अत्र सगोत्रत्वासगोत्रत्वरूपविशेषमनुपादाय सामान्यतः सपिण्डेष्वित्युक्त्या सगोत्रसपिण्डेष्वसगोत्रसपिण्डेषु चेत्यर्थोऽवगम्यते । तत्र सगोत्रसपिण्डा भ्रातृपुत्रादयः । असगोत्रसपिण्डा दौहित्रादयः । तत्रेति । सगोत्रेषु ये दत्तक्रीतादयः सुताः कृतास्ते सर्वं वाक्यं सावधारणमिति न्यायाद्विधिनैव गोत्रतां संततित्वं प्रकरणात्पुत्रतामिति यावत्, प्राप्नुवन्ति । गोत्रतामित्यस्य पुत्रतामित्यर्थे प्रमाणं दर्शयितुमाह—दत्ताद्या इति । संततिर्गोत्रेत्यादि च । अत्र निजगोत्रेणेत्युक्त्याऽस्य वचनस्य भिन्नगोत्री-

**इति त्रिकाण्डीस्मरणाच्च। न तु गोत्रतापदेन गोत्रसंबन्धो विधीयते। सगोत्रेष्वेव पुत्रीकरणेन तस्य साहजिकतया विधानायोगात्।**

**न सापिण्ड्यं विधीयत इत्यसपिण्डस्य पुत्रीकरणे सापिण्ड्यं च प्रतिग्रहीतुः पाञ्चपौरुषं साप्तपौरुषं च निषिध्यते। असमानगोत्रस्य पुत्रीकरणे—**

**'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः' इति मानवम्।**

**दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता।**
**पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च॥**

यद्दत्तकविषयता स्फुटी भवति। एवं च कालिकापुराणकवाक्यत्वाद्गोत्रतामित्यस्य पुत्रत्वमित्यर्थो नतु गोत्रसंबन्धो विधीयते। सगोत्रस्यैव पुत्रीकृतत्वेन गोत्रसंबन्धस्यार्थत्नसिद्धत्वेन विधातुमयोग्यत्वात्। विधित्वसंभवेऽनुवादकल्पनस्यानुचितत्वादित्यर्थः। अप्राप्तप्रापकस्यैव हि विधित्वमिति भाव.। **न सापिण्ड्यं विधीयत इति**। विधिना संततित्वं यान्ति परंतु तैः सह सापिण्ड्यं विधिना नोत्पद्यत इत्यर्थः। सापिण्ड्यं च प्रतिग्रहीतृमातापितृकले पाञ्चपौरुषं साप्तपौरुषं पिण्डान्वयरूपं निषिध्यत इति भावः। कितु 'यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः। प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह' इति वचनाद्दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषमेव पिण्डान्वयरूपं सापिण्ड्यं व्यवस्थापितवान्हेमाद्रिः। निर्णयसिन्धुमते तु पालककुल एकपिण्डदानक्रियान्वयित्वरूपं साप्तपौरुषमेव सापिण्ड्यं बोध्यम्।

**असपिण्डस्य पुत्रीकरण इति**। स्वगोत्रीयसोदकसगोत्रस्येत्यर्थः। ततश्चाष्टमपुरुषादारभ्यैकविंशतितमपुरुषपर्यन्तस्य ततः परस्य च यावत्स्वगोत्रीयत्वज्ञानपर्यन्तस्य पुत्रीकरणेऽयं निषेध इति यावत्। सपिण्डस्य पुत्रीकरणे तु शरीरान्वयरूपं पिण्डान्वयरूपं च सापिण्ड्य साप्तपौरुषं पाञ्चपौरुषं चास्त्येवेति ज्ञेयम्। उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम्। पञ्चमी तदभावे तु पितृपक्षेऽप्ययं विधिः॥ इति वचनादित्याशयः। अत्र सप्तमादूर्ध्वमिति मुख्यः पक्षः। तदभावे तु सप्तमीमित्यनुकल्पः। तथा पञ्चमादूर्ध्वमिति प्रथमः कल्पः। तदभावे तु पञ्चमीमित्यनुकल्प इति ज्ञेयम्।

परगोत्रोत्पन्नस्य पुत्रीकरणे त्वाह—**गोत्ररिक्थे इति**। **दत्तक्रीतादिपुत्राणामित्यादि च**। इदं च वचनद्वयं द्व्यामुष्यायणव्यतिरिक्तकेवलदत्तकविषयं बोध्यम्। तत्र प्रथमवचनेन दत्तकस्य जनकगोत्रसंबन्धाभावः प्रतिपाद्यते। द्वितीयवचनेन च दत्तक्रीतादिपुत्राणां जनककुले पाञ्चपौरुषं साप्तपौरुषं सापिण्ड्यं गोत्रं तु पालकस्येत्यभिधीयते। जनकगोत्रासंबन्धः पालकैकगोत्रसंबन्धश्च परगोत्रोत्पन्नकेवलद-

त्तकस्यैव संभवति नतु स्वगोत्रोत्पन्नकेवलदत्तकस्य नापि परगोत्रोत्पन्नव्यामुष्यायणस्य । तथा हि—दत्तकस्त्रिविधः । नित्यव्यामुष्यायणोऽनित्यव्यामुष्यायणः केवलश्चेति । तत्र नित्यव्यामुष्यायणो नाम—आवयोरयं पुत्र इति संकल्प्य जातमात्र एव जनकेन प्रतिग्रहीत्रे दत्तः । अनित्यव्यामुष्यायणो नाम—यश्चूडान्तैः संस्कारैर्जनकेन संस्कृत्य पश्चाद्दत्तः । केवलस्तु जातमात्रं पुत्रं परिगृह्य प्रतिग्रहीत्रा जातकर्माद्यखिलैः संस्कारैश्चूडादिसंस्कारैर्वा संस्कृतः । अत्र त्रिविधेष्वपि दत्तकेषु दत्तकविधिशास्त्रबलादेव प्रतिग्रहीतृगोत्रसंबन्धो भवति । यश्चेदानीं लोके विवाहोत्तरमपि पुत्रोत्पत्त्यनन्तरमपि वा दत्तको दृश्यतेऽसावनित्यव्यामुष्यायणेऽन्तर्भूत इति तस्यापि प्रतिग्रहीतृगोत्रसंबन्धो दानविधिबलादेव सिद्धः । अनेनैवाऽऽशयेनोक्तं बृहन्मनुना—‘ दत्तक्रीतादिपुत्राणां०००० गोत्रं तत्पालकस्य च ’ इति । पालकगोत्रं दत्तकस्य गोत्रं भवतीति तदर्थः । प्रथमदत्तके जनकगोत्रसंबन्धस्तु—आवयोरयमिति संकल्पबलाद्दाने न ममेति त्यागाभावादेकवस्तुनि संकल्पबलादुभयस्वत्वस्य लोकत एव सिद्धेश्च जनकपितृस्वत्वानिवृत्तेर्वक्तुमशक्यत्वात्सिद्ध एव । तथा च गोत्रद्वयसंबन्धादस्य व्यामुष्यायणत्वेन व्यवहारः सिध्यति । गोत्रद्वयसंबन्धभागित्वं हि व्यामुष्यायणत्वम् । युज्यते चैतत् । नडादित्वाद्गोत्रापत्यार्थे फक्प्रत्ययेन व्यामुष्यायणशब्दः सिद्धः । दत्तकश्चायं जनकपालकयोर्द्वयोः साक्षादपत्यं भवति नतु गोत्रापत्यम् । गोत्रापत्यं तु तद्गोत्रभूतयोर्द्वयोर्गोत्रापत्यम् । तथा च तत्रादःशब्देन विप्रकृष्टयोरपि जनकपालकपितृगोत्रभूतयोर्ग्रहणम् । अदसस्तु विप्रकृष्टमित्यभियुक्तोक्तत्वाच्च । एवं च गोत्रभूतयोर्द्वयोर्गोत्रापत्यमित्यर्थेन गोत्रद्वयसंबन्धाभिधानमिति गोत्रद्वयसंबन्धभागित्वं व्यामुष्यायणत्वमिति पर्यवस्यति । एवंविधस्य च जातमात्रस्यैव परिग्रहः । अत एवास्य प्रतिग्रहीतृगोत्रेण जातकर्मादिकाः सर्वे संस्काराः प्रवर्तन्ते । एवं चास्य जन्मत आरभ्यैव गोत्रद्वयसंबन्धः सिद्धो भवति । एतदभिप्रायेणैवास्य नित्यद्यामुष्यायणत्वेन शास्त्रे व्यवहारो दृश्यते । युक्तं चैतत् । तथा हि—नित्यशब्दः कालनैरन्तर्यं ब्रूते । तच्चात्र प्रत्यासत्त्या व्यामुष्यायणोत्पत्त्यधिकरणीभूतक्षणमारभ्य तत्तिरोभवनाधिकरणीभूतक्षणपर्यन्तम् । तथा चोत्पत्तिमारभ्य यावदवसानं गोत्रद्वयसंबन्धभागित्वं नित्यव्यामुष्यायणत्वमिति फलति । द्वितीयव्यामुष्यायणस्थले तूक्तसंकल्पाभावेन न ममेति त्यागेन दानान्तर्गतस्य स्वस्वत्वस्य निवृत्तिदर्शनाज्जनकगोत्रसंबन्धो यद्यपि दुर्घटस्तथाऽपि कतिपयसंस्कारोत्तरमेव दानात्तदंशभूतेन न ममेति त्यागेन जातसंस्काराणां भुक्तवन्तामिति न्यायेन बाधायोगाज्जन्मतः सिद्धस्य तत्रापि संस्कारैरभिव्यक्तीकृतस्य जनकगोत्रसंबन्धस्य सर्वथा निवृत्तेर्युक्त्यसहत्वेन मन्दप्रवृत्ति-

इति बृहन्मानवं च वचः प्रमाणम् । सोऽयं मुख्यः कल्पः ।

तदसंभवेऽनुकल्पमाह—तदभावेऽसपिण्डे वा इति । तेषां सपिण्डानामभावेऽसपि-

---

कस्य तस्यास्त्येव तत्र सत्त्वमिति गोत्रद्वयसंबन्धभागित्वरूपं व्यामुष्यायणत्वमस्यापि सिद्धम् । न चैवं सत्यस्य पूर्वस्मात्को विशेष इति वाच्यम् । गोत्रद्वयसंबन्धस्य समानत्वेऽपि संस्कारोत्तरमेव दानात्तदुत्तरं प्रतिग्रहीतृगोत्रसंबन्धेऽपि तत्पूर्वं तत्संबन्धाभावेन जन्मत आरभ्य गोत्रद्वयसंबन्धाभावात् । अत एव चास्य न जातमात्रस्य परिग्रहः । एतदाशयेनैवायमनित्यव्यामुष्यायणत्वेन शास्त्रकृद्भिर्व्यवहृतः । अयमेव चास्य पूर्वस्माद्विशेषो बोध्यः । तृतीयदत्तकविषये तूक्तसंकल्पाभावेन जनकगोत्रीयसंस्कारविशेषाभावेन च न ममेति त्यागेन दानान्तर्गतस्य जनकपितृस्वत्वस्य सर्वथा निवर्तनात्प्रतिग्रहीत्रेकगोत्रत्वमेवैतस्येति । स्वगोत्रोत्पन्ने द्विविधे व्यामुष्यायणदत्तके व्यामुष्यायणेतिसमाख्याबलादेव जनकगोत्रसंबन्धस्य प्रतीयमानत्वेन जनकगोत्रासंबन्धप्रतिपादकं 'गोत्ररिक्थे जनयितुर्न भजेत्०' इति प्रथमवचनं तद्विषये न प्रवर्तते । द्विविधस्यापि तस्य स्वगोत्रोत्पन्नत्वेन परगोत्रीयत्वाभावेन पालकैकगोत्रसंबन्धाभिधायकं 'गोत्रं तत्पालकस्य च' इति बृहन्मानवमपि न तत्र प्रवर्तितुमुत्सहते । तादृशे केवलदत्तके तु केवलेतिविशेषणबलाज्जनकगोत्रासंबन्धस्य प्रतीयमानत्वेऽपि प्रतिग्रहीतुर्यद्गोत्रं तदेव जनकगोत्रमिति तत्रापि जनकगोत्रासंबन्धस्य पालकैकगोत्रसंबन्धस्य च दुर्वचत्वं स्पष्टमेव । परगोत्रोत्पन्ने द्विविधव्यामुष्यायणदत्तके जनकप्रतिग्रहीत्रोर्भिन्नगोत्रत्वेन तादृशभिन्नगोत्रद्वयसंबन्धस्य तत्रावश्यं स्वीकृतत्वेन न तद्विषयेऽपि जनकगोत्रासंबन्धपालकैकगोत्रसंबन्धाभिधायिनोर्वचनयोः प्रवृत्तिः, किंतु तादृशे केवलदत्तके तयोर्वचनयोः प्रवृत्तिः सुतरां संभवति । तस्य प्रतिग्रहीत्रा स्वगोत्रेण जातकर्माद्यखिलसंस्कारैः संस्कृतत्वेन जनकगोत्रसंबन्धनिवृत्तेः प्रतिग्रहीतृगोत्रसंबन्धस्य चोपादानादित्यवगन्तव्यम् । **सोऽयं मुख्य इति** । सगोत्रसपिण्डेषु पुत्रीकरणरूपः प्रथमः पक्ष इत्यर्थः । **असपिण्डे वा इति।** अयमनुकल्पः । तदभाव इत्युपक्रमात् । असपिण्डाः सपिण्डभिन्नास्ते सप्तमपुरुषाद्बहिर्भूता असंबन्धिनश्च । 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' (या० स्मृ० १।५३) इति वचनेन सप्तमात्परत्र संबन्धलक्षणसापिण्ड्यनिवृत्तेरभिधानात् । असपिण्डा द्विविधाः—सोदकाः सगोत्राश्च । ते पुनः प्रकारान्तरेण द्विविधाः—सजातीया विजातीयाश्च । सजातीया अपि द्विविधाः—समानगोत्रा भिन्नगोत्राश्च । समानगोत्रा अपि द्विविधाः—स्ववंशीया भिन्नवंशीयाश्चेति । तत्र सजातीयविशेषणेन विजातीया

ण्डोऽपि पुत्रीकार्यः । असपिण्डाः सप्तमपुरुषबहिर्भूता असंबन्धिनश्च । तेऽपि द्विविधाः—समानगोत्रा असमानगोत्राश्चेति । तत्रापि पूर्वोदाहृतवचनमेव प्रमाणम् ।

तदयं निर्गलितोऽर्थः—समानगोत्रः सपिण्डो मुख्यः । तदभावेऽसमानगोत्रः

---

व्यावर्तिताः । तत्र सजातीयसमानगोत्रस्ववंशीयसोदकसगोत्ररूपा असपिण्डा यथा—मूलपुरुषादष्टममारभ्य चतुर्दशावसानाः सोदकाः । मूलपुरुषात्पञ्चदशमारभ्यैकविंशावसानाः स्ववंशीयत्वज्ञानपर्यन्ता वा सगोत्राः । सजातीयभिन्नगोत्रभिन्नवंशीया असपिण्डा यथा—मातामहकुले मूलपुरुषमारभ्य सप्तमात्परे । अथ च येषां मिथो विवाहो भवितुं योग्यस्तेऽपि यथा—गुडवादि(गोडबोले)वंशीयाः कौशिकगोत्रा अभयंकरवंशीया वासिष्ठगोत्रास्ते मिथोऽसपिण्डाः। सजातीयसमानगोत्रभिन्नवंशीया असपिण्डास्तु भिन्नकुलानामपि येषां गोत्रैक्यान्न विवाहो भवति ते । यथा—आपटेवंशीयाः खरेवंशीयाश्च । उभयेषां समानं गोत्रं कौशिकमिति बोध्यम् ।

**सप्तमपुरुषेति** । पितृमातृसंबन्धा आसप्तमादविवाह्याः कन्या भवन्ति । आपञ्चमादन्येषामिति सुमन्तुवचनात् ‘ उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् । पञ्चमीं तदभावे तु पितृपक्षेऽप्ययं विधिः ’ इति चतुर्विंशतिमताच्चेति भावः । **तेऽपीति** । असपिण्डा असंबन्धिनोऽपीत्यर्थः । अनुकल्पेऽपि प्रमाणं दर्शयितुमाह—**तत्रापीति** । **पूर्वोदाहृतवचनमेवेति** । ब्राह्मणानां सपिण्डेष्विति पूर्वोक्तं शौनकीयं वचनमेवेत्यर्थः ।

तदेतत्सर्वं मनसि निधायाऽऽह—**तदयमिति** । निर्गलितः—साधकबाधकमीमांसया सिद्धः सिद्धान्तभूतः । **समानगोत्रः सपिण्ड इति** । सपिण्डेषु पुत्रीकरणविधानात्तत्रापि स्वगोत्रीयस्य तस्य प्रत्यासन्नत्वात्स एव मुख्यः प्रथम इत्यर्थः । तादृशश्च भ्रातृपुत्रादिः । तत्रापि भ्रातृपुत्रो मुख्यः । ‘ भ्रातृणामेकजातानां यद्येकः पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ’ ( म० स्मृ० ९ । १८२ ) इति मनुवचनात् । अत्र भ्रातुष्पुत्रेणापुत्रस्य भ्रातुः पुत्रित्वाभिधानेन भ्रातृपुत्रो ग्राह्यत्वेन मुख्य इति प्रतीयते । ततश्च भ्रातृपुत्रसद्भावेऽन्ये पुत्रप्रतिनिधयो न कर्तव्या इत्यर्थः । भ्रातृसुतालाभे समानगोत्रः सपिण्डो यः कश्चित् । प्रत्यासत्त्यतिशयात् । नतु समानगोत्रोऽसपिण्डः । तस्य सपिण्डापेक्षया विप्रकृष्टत्वादिति भावः ।

ननु यदि प्रत्यासत्त्यतिशयः पुत्रीकरणे प्रयोजकश्चेद्भ्रातृसुतापेक्षया प्रत्यासन्नतरत्वाद्भ्रातैव प्रथमं ग्राह्यो भवेत् । यद्यपि कनीयसा भ्रात्रा स्वापेक्षया ज्येष्ठभ्राता ग्रहीतुं न शक्यः, तस्य ज्येष्ठत्वेन कनिष्ठकर्तृकपुत्रत्वबुद्ध्यनर्हत्वात् , तथाऽपि ज्येष्ठेन भ्रात्रा

सपिण्डः । यद्यप्यसमानगोत्रः सपिण्डः समानगोत्रोऽसपिण्डश्चेत्युभावपि तुल्यकक्षौ, एकैकविशेषणराहित्यादुभयोस्तथाऽपि गोत्रप्रवर्तकपुरुषात्सापिण्ड्यप्रवर्तकपुरुषस्य संनिहितत्वेनाभ्यर्हितत्वम् । तेन चासमानगोत्रोऽपि सपिण्ड एव ग्राह्यो

---

स्वापेक्षया कनीयान् भ्राता ग्रहीतुं शक्यः । तस्य कनीयस्त्वेन ज्येष्ठभ्राता पितुः सम इत्यभियुक्तोक्तवचनेन च ज्येष्ठकर्तृकपुत्रत्वबुद्ध्यनर्हत्वस्य दुर्वचत्वादिति चेन्नैतद्भद्रम् । भ्रातॄणां कालकृतज्येष्ठकनिष्ठभावेऽपि परस्परं संबन्धस्य समकक्षतया समकक्षे च स्वस्मिन्स्वपुत्रत्वबुद्धिवत् पुत्रत्वबुद्धेर्लोके क्वाप्यदर्शनात् । किंच भ्रातॄणामिति मनुवचनेन भ्रातृसुतस्य ग्राह्यत्वाभिधानाद् भ्रातॄणां च सर्वं वाक्यं सावधारणमिति न्यायेन ग्राहकत्वस्यैवावधारणेन तेषां परस्परं ग्राह्यत्वाभावः सूचित इत्याशयः । एतदाशयेनैव संस्कारकौस्तुभे—' विरुद्धसंबन्धापत्त्या पुत्रत्वबुद्ध्यनर्हभ्रातृपितृव्यमातुलवर्जमित्युक्तमिति भाति । तथा—एकजातानामित्येव सिद्धे भ्रातृपदं सोदरत्वेऽपि भ्रातृभगिनीनां परस्परपुत्रनियमो न भवतीति ज्ञापनार्थम् । एकजातग्रहणं भिन्नोदराणामेकपितृकाणामपि सपिण्डान्तरलाभदशायां भ्रातृपुत्रनियमो न भवतीति ज्ञापनार्थम् । नतु भिन्नोदरसुतस्याग्राह्यत्वज्ञापनार्थम् । एक इत्येकोऽपीत्यर्थः । तेन द्वयोरपि पुत्रवत्त्वेऽन्येषामपुत्राणां न भ्रातृपुत्रग्रहणासंभवः । पुत्रपदं चौरसपरम् । जन्यपुंस्त्ववाचिनः पुत्रपदस्य तत्रैव मुख्यत्वात् । तेन भ्रातृपुत्रस्यापि दत्तकादेर्भ्रातृमतोऽपि न ग्रहणम् ।

**तदभाव इति** । समानगोत्रसपिण्डालाभे सतीत्यर्थः । **असमानगोत्रः सपिण्ड इति** । सगोत्रसपिण्डलाभासंभवे भिन्नगोत्रः सपिण्ड एव ग्राह्यो भवति । पूर्वोक्तशौनकवचनोत्तरार्धे सपिण्डाभाव एवासपिण्डविधानात् । तादृशश्च दौहित्रमातुलपुत्रादिः । ननु समानगोत्रोऽसपिण्डः सोदकोऽसमानगोत्रः सपिण्डश्चेत्येतावुभौ समानबलौ । असमानगोत्रसपिण्डे समानगोत्रत्वविशेषणविरहात्समानगोत्रासपिण्डे सपिण्डत्वविशेषणविरहादिति कथं मुख्यालाभेऽसमानगोत्रसपिण्डस्यैव ग्राह्यत्वमुच्यत इत्यत आह—**गोत्रप्रवर्तकपुरुषादिति** । ब्राह्मणानां सपिण्डेष्वित्युक्त्या पुत्रीकरणे सपिण्डत्वस्य निमित्ततयोल्लेखात्तस्य प्राधान्यमवगम्यते । सपिण्डत्वं च समानगोत्रेऽसमानगोत्रे च संभवतीति समानगोत्रत्वमसमानगोत्रत्वं च तस्य विशेषणम् । ततश्चाप्रधानबाधकल्पनेनोपपत्तौ प्रधानबाधकल्पनमन्याय्यमिति न्यायेन समानगोत्रासपिण्डसमवाये प्रधानीभूतसापिण्ड्यबाधेन समानगोत्रासपिण्डसंग्रहस्यानुचितत्वेनोपसर्जनीभूतसमानगोत्रत्वबाधेनासमानगोत्रसपिण्डसंग्रहस्यैव न्याय्यत्वादित्याशयेनाऽऽह—**साापिण्ड्यप्रवर्तकेति** । साापिण्ड्यप्रवर्तकपुरुषस्य सप्तमान्तर्गतत्वेन पञ्चमान्तर्गतत्वेन [ च ] सोद-

मातामहकुलीनः। सर्वथा सपिण्डाभावेऽसपिण्डस्तत्रापि समानोदक आ चतुर्दशात् समानगोत्रः प्रत्यासन्नः। तस्याभावेऽसमानोदकः सगोत्र एकविंशात्। तस्याप्यभावेऽसमानगोत्रोऽसापिण्डश्चेति। तदाह शाकलः-

सपिण्डापत्यकं चैव सगोत्रजमथापि वा।
अपुत्रको द्विजो यस्मात्पुत्रत्वे परिकल्पयेत्॥
समानगोत्रजाभावे पालयेदन्यगोत्रजम्॥ इति।

सगोत्रेत्यनेन सोदकसगोत्रौ गृह्येते। अत्र च पूर्वपूर्वस्य प्रत्यासत्त्यतिशयेन निर्देश इति। तदेवाऽऽह वसिष्ठोऽपि-'अदूरबान्धवं बन्धुसंनिकृष्टमेव प्रतिगृह्णी-

---

काद्यपेक्षया संनिहितत्वादभ्यर्हितत्वं प्रथमतो ग्राह्यत्वमिति यावत्। गोत्रप्रवर्तकपुरुषस्य तु—सपिण्डता तु पुरुषे सप्तमे विनिवर्तते। समानोदकभावस्तु निवर्तेत चतुर्दशे। जन्मनामस्मृतेर्वैके तत्परं गोत्रमुच्यते॥ इत्यग्निपुराणोक्तचतुर्दशपुरुषाद्बाह्यत्वेन सापिण्ड्यप्रवर्तकपुरुषाद्विप्रकृष्टत्वेन न प्रथमतो ग्राह्यत्वमिति भावः। अतोऽसमानगोत्रोऽपि सपिण्ड एव समानगोत्रसपिण्डानन्तरं ग्राह्यो भवति। **सर्वथेति**। समानासमानगोत्रीयत्वोभयप्रकारेण सपिण्डालाभे सति समानगोत्रोऽसपिण्डो ग्राह्यो भवति। तत्रापि प्रथमं सोदकः समानगोत्रो ग्राह्यो भवति। सगोत्रापेक्षया सोदकस्य संनिहितत्वादित्यर्थः। **तस्याभाव इति**। स्वगोत्रोत्पन्नसोदकस्यालाभे सतीत्यर्थः। स्वगोत्रोत्पन्नपञ्चदशपुरुषमारभ्यैकविंशतिपर्यन्तपुरुषपरम्परान्तर्गतः सगोत्रः पारिभाषिको ग्राह्यो भवति। **तस्याप्यभाव इति**। समानगोत्रजसगोत्रस्याप्यलाभे सतीत्यर्थः। एवमुक्तमुख्यामुख्यक्रमे प्रमाणभूतं शाकलवचनमुदाहरति-**सपिण्डापत्यकमिति**। सपिण्डापत्यकशब्देन प्रत्यासत्तिवशात्क्रमेण समानगोत्रसपिण्डापत्यमसमानगोत्रसपिण्डापत्यं च निर्दिष्टम्। **अथेति**। तदनन्तरमित्यर्थः। समानगोत्रसपिण्डासमानगोत्रसपिण्डयोरलाभ इति यावत्। **सगोत्रजमिति**। सगोत्रमिति सोदकस्याप्युपलक्षणम्। सपिण्डानन्तरं सगोत्रजस्य ग्राह्यत्वोक्त्या प्रत्यासत्तिन्यायेन ततः पूर्वमेव सोदकस्य प्राप्तेः। प्रत्यासत्त्यतिशयेन पूर्वपूर्वस्य निर्देश इति मूल एवोक्तत्वात्। **समानगोत्रजाभाव इति**। समानगोत्रजोऽसपिण्डः सोदकः सगोत्रश्चेत्यर्थः। ततश्च पूर्वोक्तौ समानासमानगोत्रसपिण्डौ द्वावथ च समानगोत्रासपिण्डः-सोदकः सगोत्रश्चेत्येवं चतुर्णामपि लाभासंभव इत्यर्थः। **अन्यगोत्रजमिति**। भिन्नगोत्रोऽसपिण्ड इत्यर्थः। अत्रैवार्थे वसिष्ठवचनं संवादयति--**अदूरबान्धवमित्यादि**। अदूरबान्धवमिति कर्मधारयः। अदूरः संनिहितः। प्रतिग्रहीतुरिति शेषः। बान्धवो मातृपितृसंबन्धी। सांनिध्यं च समानगोत्रत्वेन स्वल्पपुरुषव्यवधानेन च। तादृशश्च

यात् ' इति । अस्यार्थः—अदूरश्चासौ बान्धश्चेत्यदूरबान्धवः । संनिहितः सपिण्ड इत्यर्थः । सांनिध्यं च द्विधा—सगोत्रतया स्वल्पपुरुषान्तरेण च भवति । तत्र सगोत्रः स्वल्पपुरुषान्तरः सापिण्डो मुख्यः । तदभावे बहुपुरुषान्तरोऽपि सगोत्रः सपिण्डः । तदभावेऽसमानगोत्रः सपिण्डः । तस्याप्यभावे बन्धुसंनिकृष्टः सापिण्डः। बन्धूनां सपिण्डानां संनिकृष्टः सापिण्डः स्वस्यासपिण्डः सोदक इत्यर्थः पर्यवस्यति । तत्रापि संनिकर्षो द्विविधः—सगोत्रतया स्वल्पपुरुषान्तरेण च । स्वस्यासपिण्डोऽपि स्वसमानगोत्रः स्वल्पपुरुषान्तरः सपिण्डानां सपिण्डो मुख्यः । तदभावे बहुपुरुषान्तरोऽपि समोत्रः सपिण्डः सोदक इति यावत् । सपिण्डसोदकासंभवे समानगोत्र एकविंशाद्ग्राह्यः । तदसंभवेऽसमानगोत्रोऽसापिण्डोऽपि ग्राह्यः । ' तदभावेऽसपिण्डोऽपि ' इति शौनकीयात् । ' संदेह चोत्पन्ने दूरबान्धवं

---

सपिण्ड एव संभवति । तत्र समानगोत्रोऽल्पपुरुषव्यवहितः सपिण्डो मुख्यः । तादृशो भ्रातृपुत्रः । स हि समानगोत्र एकपुरुषान्तरितश्च भवति । मूलपुरुषाद्देवदत्तात्प्रतिग्रहीता मैत्रो द्वितीयः । प्रतिग्राह्यो भ्रातुष्पुत्रश्चैत्रश्च तृतीय इत्येकपुरुषव्यवहितो भवतीति स एव मुख्यः । तदलाभे बहुपुरुषव्यवहितोऽपि द्वित्र्यादिपञ्चपुरुषव्यवहितः समानगोत्रः सपिण्डो यः कश्चित् । तदभावेऽसमानगोत्रः सपिण्डो मातामहादिकुलीनः । तादृशश्च मातुलपुत्रदुहितृपुत्रादिः । मूलपुरुषो मातामहश्चैत्रः । तत्पुत्रो वैशाखः । तत्पुत्रो ज्येष्ठः । मातुलपुत्रोऽयम् । चैत्रपुत्री वैशाखी । वैशाखीपुत्रः श्रावणः । प्रतिग्रहीताऽयम् । मातुलपुत्रः प्रतिग्राह्यः । प्रतिग्राहकश्च पितृष्वसृसुतः । तावुभौ मूलपुरुषाच्चैत्रात्तृतीयावेकपुरुषान्तरितौ भवतः । तदभावे द्वित्रिपुरुषान्तरितोऽपि ग्राह्यः । सर्वथा सपिण्डासंभवे बन्धुसंनिकृष्टः । बन्धूनां सपिण्डानां संनिकृष्टः । सपिण्ड इत्यर्थः । सपिण्डसापिण्ड इति यावत् । तत्रापि संनिकर्षो द्विविधः—समानगोत्रत्वेनाल्पपुरुषान्तरेण च । स्वस्यासापिण्डोऽपि स्वसमानगोत्रः स्वल्पपुरुषव्यवहितः सपिण्डानां सपिण्डो मुख्यः । यथा मूलपुरुषाद्देवदत्ताद्द्वितीयो यज्ञदत्तः प्रतिग्रहीता । प्रतिग्राह्यश्च मूलपुरुषात्सप्तमस्य पुत्रो वामनः । अयं च मूलपुरुषादष्टम इति कृत्वा प्रतिग्रहीतुरसपिण्डः सोदकः । सोदकेष्वपि प्रथमत्वादल्पपुरुषान्तरितः समानगोत्रीयश्चेति स एव सोदकेषु मुख्यत्वात्प्रथमतो ग्राह्यो भवति । तदसंभवे स्वगोत्रोद्भवः सोदको यः कश्चिद्द्व्यादिपुरुषान्तरितश्चतुर्दशपुरुषपर्यन्तः । तस्यासंभवे सगोत्र एकाविंशतिपुरुषपर्यन्तः । तस्याप्यसंभवेऽसमानगोत्रोऽसपिण्डोऽपि ग्राह्यः ।

**संदेह इति** । संदेहश्चात्र कुलशीलादिविषयकः । **दूरबान्धवमिति** । बहुव्रीहिसमासः । प्रतिग्रहीतुर्दूरे स्थिता बान्धवाः सपिण्डा यस्य ग्राह्यस्येत्यर्थः ।

शूद्रमिव स्थापयेत्' इति वसिष्ठलिङ्गाच्च। दूरे बान्धवा यस्यासौ दूरबान्धवः। गोत्रसापिण्ड्याभ्यामसंनिहितामित्यर्थः। संदेहोऽत्र कुलशीलादिविषयः। स चासपिण्डेऽसगोत्रे च भवतीति सोऽप्यनुज्ञायते।

अन्यत्र तु न कारयेदिति। यद्यपि सपिण्डासपिण्डेभ्योऽन्यो न संभवति तथाऽपि—

'सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः'

इति वाक्यशेषेण सपिण्डासपिण्डानां सजातीयत्वेन विशेषणादसमानजाती-

---

**शूद्रमिति**। संदेहनिवृत्तिपर्यन्तं शूद्रमिव स्थापयेत्। संदेहनिवृत्त्या ग्रहणयोग्यत्वनिश्चये तु ग्राह्य इत्यर्थात्सिध्यति। एवं च संदिग्धस्य तस्य शूद्रवदवस्थापनकथनेन संदेहनिवृत्तौ तस्य ग्राह्यत्वं स्फोरितम्। संदेहश्चासगोत्रेऽसपिण्डे च भवतीति सोऽपि ग्राह्य इति वसिष्ठेन सूचितमिति यावत्।

**अन्यत्र तु न कारयेदितीति**। ननु सपिण्डोऽसपिण्डश्चेत्युभौ ग्राह्यत्वेनोक्तौ न च ताभ्यां व्यतिरिक्तस्तृतीयोऽस्ति। यदर्थमन्यत्र न कारयेदिति निषेध आरभ्येत। ततश्च निषेधस्य प्राप्तिपूर्वकत्वात्प्राप्तेश्च सपिण्डासपिण्डव्यतिरिक्तस्य तृतीयस्याप्रसिद्धेरेव दुर्वचत्वादन्यत्र न कारयेदिति निषेधो निर्विषय इत्याशङ्क्याऽऽह—**यद्यपीति**। **सर्वेषामिति**। ब्राह्मणक्षत्रियवैश्यादीनां सजातीयेष्वेव पुत्रसंग्रहः कर्तव्यो न भिन्नजातीयेष्विति तदर्थः। **विशेषणादिति**। ततश्च ब्राह्मणानां सपिण्डेष्वित्यस्यायमर्थः संपद्यते—ब्राह्मणैः सपिण्डेष्वसपिण्डेषु च सजातीयेष्वेव पुत्रसंग्रहः कर्तव्यः। भिन्नजातीयेषु सपिण्डेष्वसपिण्डेषु च पुत्रसंग्रहो न विधेय इति। तदाह—**असमानजातीया इति**। ननु जातिष्वेवेत्येवकारेण ये व्यावर्त्यन्ते तेऽसमानजातीयत्वाद्ब्राह्मणादीनां कथमिव सपिण्डा भवितुमर्हन्ति। एकशरीरावयवान्वयित्वस्यैकपिण्डदानक्रियान्वयित्वस्य वा सापिण्ड्यस्य सजातीयेष्वेव संभवादिति चेदुच्यते। तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्। ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मनः॥ (या० स्मृ० १।५७)। अस्य वीरमित्रोदयाख्यटीका त्वित्थम्—वर्णानुपूर्व्येण—वर्णानुलोम्येन। तेन व्युत्क्रमेण विवाहो निषिद्धः। व्युत्क्रमेण विवाहो यथा—वैश्यस्य क्षत्रियकन्यया, क्षत्रियस्य वा ब्राह्मण्या सह विवाह इति। यथाक्रममिति ब्राह्मणस्य तिस्रः, क्षत्रियस्य द्वे, वैश्यस्यैकेत्यर्थः। सवर्णा पुनः सर्वेषां मुख्या स्थितैव। स्वा शूद्रा। तेन संकरजाव्यावृत्तिः। ब्राह्मण्यादिव्यावृत्तेः सवर्ण इत्यनेनैव प्राप्तेः। शूद्रजन्मनः। शूद्रजातीयजातस्य। एतेन पारशवोऽपि संगृहीतः। एवं च ब्राह्मणादितः क्षत्रि-

यादिकन्यासु जातानां स्वमातृजातीयानुत्कृष्टकन्ययैव विवाह इति सूचितम्। इति याज्ञवल्क्येन ब्राह्मणादीनां भिन्नजातीयस्त्रीभिः सार्धं विवाहस्योक्तत्वात्तासु भिन्न-जातीयक्षत्रियादिकन्यकासु ब्राह्मणादिभिरुत्पादिताः पुत्रा ब्राह्मणादीनामसमानजातीयाः सपिण्डा भवन्तीत्यर्थः। सापिण्ड्यं तु तेषामेकशरीरावयवान्वयित्वरूपं बोध्यं, नतु पिण्डदानक्रियान्वयित्वरूपं सापिण्ड्यम्। तेषां भिन्नजातीयत्वेन पिण्डदानाद्यन-धिकारात्। पिण्डदोंऽशहरश्च० सजातीयेष्वयं प्रोक्तः० इति याज्ञवल्क्यवचनार्थप-र्यालोचनेन सजातीयस्यैव पिण्डदानाद्यर्हत्वावगमादिति भावः। यज्जातीयायां भार्या-यामुत्पन्नः स तज्जातीय एव भवति। अत एव शङ्खस्मृतौ 'ब्राह्मणेन क्षत्रि-यायामुत्पादितः क्षत्रिय एव भवति क्षत्रियेण वैश्यायामुत्पादितो वैश्य एव भवति। वैश्येन शूद्रायामुत्पादितः शूद्र एव भवतीत्युक्तम्। ते च षडनुलोमजा मूर्धावसिक्ताम्बष्ठ-पारशवमाहिष्योग्रकरणसंज्ञका भवन्तीति। एतेषामौरसेष्वन्तर्भावः। सप्तभ्यः पुरुषेभ्यः परेऽसमानजातीया असपिण्डाः। ते 'जातिष्वेव' इति नियमेन व्यावर्त्यन्त इत्यर्थः। ब्राह्मणादिना क्षत्रादिस्त्रीषूत्पादितानां मूर्धावसिक्तादीनां पुत्राणामसमानजातीयतया पिण्डो-दकाद्यनर्हत्वं 'पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः। सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' (या०स्मृ० २। १३२, १३३) इति वचनेन व्यक्तं भवति। तथा हि—'औरसो धर्मपत्नीजः' (या० स्मृ० २। १२८) इत्यारभ्य 'सोऽपविद्धो भवेत्सुतः' (या० स्मृ० २। १३२) इत्यन्तेनौरसादीनां द्वादशानां पुत्राणां स्वरूपमुक्त्वा पिण्डद इत्याद्युक्तम्। अस्यार्थः—एतेषां पूर्वोक्तानां द्वादशानां पुत्राणां पूर्वस्य पूर्वस्याभाव उत्तर उत्तरः श्राद्धदोंऽशहरो धनहरो वेदितव्य इति। अत्र यद्यपि दायप्रकरणादंशहर इत्येव प्रथमं वक्तुमुचितमागन्तूनामन्ते निवेश इति च न्यायात्पिण्डद इति तत्पश्चात्तथाऽपि पुत्राणां पिण्डदत्वमावश्यकम्। अदाने प्रत्य-वायश्रवणात्। अंशहरत्वं त्वानुषाङ्गिकमन्वाचयशिष्टं नतु मुख्यमिति, नापि तेषा-मंशहरत्वप्रयुक्तं पिण्डदत्वमिति, अंशहरत्वप्रयुक्तपिण्डदत्वस्यान्यत्र क्वचित्समनियतस्य शास्त्रीयत्वेऽपि पिण्डदत्वप्रयुक्तांशहरत्वस्य न तथा शास्त्रीयत्वमिति, अनयोर्मिथो न व्याप्यव्यापकभावो नापि सार्वत्रिकं समनैयत्यमिति च सूचनार्थं पिण्डदोंऽशहरश्चे-त्युक्तम्। ततश्च चोऽन्वाचये, नतु समुच्चय इति बोध्यमित्याद्युक्त्वा सजा-तीयेष्वित्याद्युपसंहृतम्। समानजातीयेष्वेव पुत्रेष्वयं विधिः पूर्वाभावे परः पर इत्ये-वंरूपो मयोक्तो न भिन्नजातीयेष्विति तदर्थः। एवं च सजातीयेष्वेवेति नियमेन भिन्नजातीयानां मूर्धावसिक्तादीनां स्पष्टमेव पिण्डोदकाद्यनधिकारित्वमभिहितं भवति।

याः सपिण्डा असपिण्डाश्च व्यावर्त्यन्ते। अप्रतिषिद्धमनुमतं भवतीति न्यायेनानुकल्पतया तत्प्राप्तिसंभवात्। अत एव वृद्धगौतमः-

यदि स्यादन्यजातीयो गृहीतो वा सुतः क्वचित्।
अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत्॥

इत्यसमानजातीयस्यांशभाक्त्वं निषेधति। तस्मादसमानजातीयो न पुत्रीकार्य इति सिद्धम्। अत एव मनुः-

'सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः' इति।

सदृशं सजातीयम्-

'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः'

---

**अप्रतिषिद्धमिति**। निषेधाविषयमित्यर्थः। **अनुकल्पतयेति**। सजातीयः सुतो ग्राह्यः पिण्डदाता स रिक्थभाक्। तदभावे विजातीयो वंशमात्रकरः स्मृतः। इति वृद्धयाज्ञवल्क्यवचने सजातीयस्य ग्राह्यतामभिधाय तदभावे-सजातीयाभावे विजातीय इत्युक्तत्वादप्रतिषिद्धमनुमतं भवतीति न्यायानुसंधानेन ब्राह्मणेन क्षत्त्रियाण्यादिषूत्पादितानां क्षत्त्रियादिपुत्राणामनुकल्पत्वेन पुत्रप्रतिनिधित्वेन प्राप्तिः संभवतीति बोध्यम्। **अत एवेति**। असमानजातीयसपिण्डासपिण्डानामनुकल्पत्वेन प्राप्तेः संभवादेवेत्यर्थः। **यदि स्यादिति**। अत्रान्यजातीयस्य मुख्यत्वेन ग्राह्यता नास्ति, किंत्वनुकल्पत्वेन ग्राह्यतेति यदीत्यनेन सूचितम्। सा चापि न सर्वसंमता किंत्वेकीयमतेनेति क्वचिदित्यनेन सूचितम्। तादृशस्यापि गृहीतस्यासमानजातीयस्य 'अंशभाजं न तं कुर्यात्' इति सर्वं वाक्यं सावधारणमिति न्यायादंशभागित्वमेव निषेधति वृद्धगौतमो न पुत्रत्वम्। पुत्रत्वस्यैकीयमतेन शास्त्रसिद्धत्वादित्यर्थः। **तस्मादिति**। यस्मात्सर्वेषामेव वर्णानां जातिष्वेव, इति नियमेन विजातीयसपिण्डासपिण्डा व्यावर्त्यन्ते तस्माद्ब्राह्मणातिरिक्तः क्षत्त्रियादिरसमानजातीयो न पुत्रीकर्तव्य इति सिध्यति। गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा (म० स्मृ० ९। १४२)। गोत्ररिक्थे अनुगच्छतीति गोत्ररिक्थानुगः। प्रायस्तत्समनियत इति यावत्। पिण्डः श्राद्धादि। इति वचनाद्दण्डचक्रन्यायेन गोत्रभाक्त्वधनहरत्वपिण्डाधिकारित्वानां त्रयाणां समुदितानां पुत्रत्वप्राप्तिहेतुत्वावगमादित्यर्थः। **अत एवेति**। असमानजातीयस्य क्षत्त्रियादेः पुत्रीकरणनिषेधादेवेत्यर्थः। **सदृशमिति**। (म० स्मृ० ९। १६८) 'माता पिता वा दद्यातां यमद्भिः पुत्रमापदि' इति तस्य पूर्वार्धम्। अत्र सदृशमित्यस्य सजातीयमित्यर्थः। 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' (या० स्मृ० २।१३३)

इति योगीश्वरस्मरणात्। यत्तु मनुनैव—

क्रीणीयाद्यस्त्वपत्यार्थे मातापित्रोर्यमन्तिकात्।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा॥

इत्युक्तं, तत्र गुणैरसदृशो वेति व्याख्येयं न जात्येति।

यत्तु सदृशं न जातितः किं तर्हि कुलानुरूपैर्गुणैः। तेन क्षत्रियादिरपि ब्राह्मणस्य पुत्रो युज्यत इति मेधातिथिना व्याख्यातम्, यच्च शूद्रोऽपि किल पुत्रो भवतीत्यभिप्राय इति कल्पतरुव्याख्यानम्, तदुभयमपि—

'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः'

इत्युदाहृतयोगीश्वरवचनविरोधात् 'जातिष्वेव न चान्यतः'
इति शौनकवचनविरोधाच्चोपेक्ष्यम्। यत्तु मनुना—

'स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः'

---

इति स्मृतेः। यत्त्विति। क्रीणीयादिति। (म० स्मृ०। ९ १७४)। अत्र सदृशोऽसदृशो वेत्यस्य क्रेतुर्गुणैस्तुल्यो हीनो वा भवेन्न तत्र जातितः साहश्यवैसादृश्ये इति व्याख्यातम्। तथा सदृशं न जातितः किंतु कुलानुरूपैर्गुणैः। तेन क्षत्रियादिरपि ब्राह्मणस्य पुत्रो युज्यत इति मेधातिथिनोक्तम्। तथैव शूद्रोऽपि किल ब्राह्मणस्य पुत्र इति कल्पतरुरुक्तवान्। तदेतद्द्वयमपि 'सजातीयेष्वयं प्रोक्तस्तनयेषु' इति याज्ञवल्क्यवचनविरोधात्, जातिष्वेवेति शौनकवचोविरोधाच्चासमञ्जसमिति तत्रोदासितव्यम्। मेधातिथेस्त्वयमाशयः—क्षत्रियादेरसमानजातितया पिण्डोदकाद्यनर्हत्वेऽपि नामसंकीर्तनादिप्रयोजनकतया पुत्रत्वमुत्पद्यत एव। शास्त्रीयत्वात्। परंत्वल्पोपकारतया ग्रासाच्छादनभागित्वम्। यदाह शौनकः—यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित्। अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत्॥ इति। याज्ञवल्क्योऽपि—सजातीयस्य पिण्डदातृत्वांशहरत्वे अभिहिते, नतु विजातीयस्य पुत्रत्वं निषिद्धम्। तथा वृद्धयाज्ञवल्क्यः—सजातीयः सुतो ग्राह्यः पिण्डदाता स रिक्थभाक्। तदभावे विजातीयो वंशमात्रकरः स्मृतः॥ ग्रासाच्छादनमात्रं तु स लभेत तदृक्थिनः॥ इति दत्तकचन्द्रिकायां लिखितम्।

ननु यदि विजातीयः क्षत्रियादिर्दत्तको न ग्राह्य इति सिद्धान्तश्चेत्कथं तर्हि मनुना शूद्रापुत्रस्य पुत्रप्रतिनिधिषु 'कानीनश्च' (म० स्मृ० ९। १६०) इति वचने निर्देशः कृत इति शङ्कापनोदार्थं भूमिकामारचयति—यत्तु मनुनेति। शूद्रापु-

इत्यत्र शौद्रस्य पुत्रप्रतिनिधित्वेन परिगणनं कृतं तच्छूद्रेण दास्यामुत्पादितस्यानूढोत्पन्नस्य मुख्यपुत्रत्वाभावात्पुत्रप्रतिनिधित्वमभिप्रेत्येति व्याख्येयम् ।

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ।
मृते भर्तरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम् ॥
अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ।

इति योगिस्मरणात् । तस्मात्सदृशं दातुः प्रतिग्रहीतुश्च सवर्णमित्यपरार्कव्याख्यैवात्र साधीयसी । याज्ञवल्क्योऽपि—

'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः'

इति संनिहितसगोत्रसपिण्डेषु च भ्रातृपुत्रे एव पुत्रीकार्य इति । अभ्युपगतं च तद्विज्ञानेश्वराचार्यैरपि—भ्रातृपुत्र एव पुत्रीकार्य इति । अत्र सोदरभ्रातृपुत्र एव पुत्रीकार्य इत्याह मनुः—

---

त्रस्य पुत्रप्रतिनिधिषु संग्रहमुपपादयन्नाह—तच्छूद्रेण दास्यामिति । तत्रैव याज्ञवल्क्यवचनं प्रमाणत्वेनोदाहरति—जातोऽपि दास्यामिति । ( या० स्मृ० २ । १३३ )। अस्यार्थः-शूद्रेण दास्यामपरिणीतायामुत्पन्नः पुत्रः कामतः पितुरिच्छातोंऽशहरो भवेत् । पिता यावन्तमंशं दातुमिच्छति तस्मै तावांस्तस्य भवतीत्यर्थः। पितुरूर्ध्वं तु यदि परिणीतापुत्राः सन्ति तदा ते भ्रातरस्तं दासीपुत्रमर्धभागिनं कुर्युः । एकस्य यावान्भागो भवति तदर्धं तस्मै दद्युरित्यर्थः । अथ परिणीतापुत्रा न सन्ति तदा कृत्स्नं धनं दासीपुत्रो गृह्णीयाद्यदि परिणीतादुहितरस्तत्पुत्रा वा न सन्ति । तत्सद्भावे त्वर्धभागिक एव दासीपुत्रः । अत्र च शूद्रग्रहणाद्द्विजातिना दास्यामुत्पन्नः पितुरिच्छयाऽप्यंशं न लभते नाप्यर्धं, दूरत एव कृत्स्नम् । किंत्वनुकूलश्चेज्जीवनमात्रं लभत इति । ततश्च स्वयंदत्तश्चशौद्रश्चेति मनुवचने ब्राह्मणेन परिणीतायां शूद्रायामुत्पन्नः पुत्र इत्येवं शौद्रशब्दस्यार्थो न विवक्षितः, किंतु शूद्रेणापरिणीतायां शूद्रायामुत्पन्न इत्येवार्थो विवक्षितः। एवं चान्यत्र तु न कारयेदिति शौनकेन सह मनुर्न विरुणद्धीति भावः । तस्मादिति । यस्मान्मेधातिथिकल्पतर्वोद्विवर्णितस्यार्थस्यायुक्तत्वं शौद्रशब्दस्य दासीपुत्रपरत्वं च व्यवस्थापितं तस्मात् ' सदृशं प्रीतिसंयुक्तम्० ' ( म० स्मृ० ९ । १६८ ) इति मनुवचने सदृशमित्यस्य ' दातुः प्रतिग्रहीतुश्च सवर्णम् ' इत्यपरार्ककृता व्याख्यैव ज्यायसी बोध्या । पूर्वोक्तयाज्ञवल्क्यशौनकवचनानुगृहीतत्वादित्यर्थः ।

समानगोत्रसपिण्डेषु संनिहिततरत्वाद्भ्रातृपुत्र एव दत्तको ग्राह्य इत्यत्रार्थे विज्ञानेश्वराचार्याणामपि संमतिं प्रदर्श्य भ्रातृपुत्र इत्यत्रत्यभ्रातृशब्देन सोदरभ्राता वा

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत्।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥ इति।

अत्र भ्रातॄणां प्रतिगृहीतृत्वप्रतिपादनाद्ग्राह्यत्वाभावोऽवगम्यते। एकजातानामित्यनेनैकेन पित्रा, एकस्यां मातरि जातानामेव ग्रहीतृत्वं न भिन्नोदराणां भि-

---

ग्राह्यो भिन्नोदरो वेत्याशङ्कायामाह—**भ्रातॄणामिति** (म० स्मृ० ९। १८२)। अत्र भ्रातृपुत्रेणापुत्राणां भ्रातॄणां पुत्रित्वप्रतिपादनादभ्रातॄणां प्रतिग्रहीतृत्वस्य प्रतीत्या तेषां ग्राह्यत्वाभावः सूचितः। अन्यथा सपिण्डत्वाविशेषात्तेषामपि ग्राह्यत्वापत्तिः स्यात्। एकजातानामिति तन्त्रोच्चारितं भ्रातॄणां विशेषणम्। तत्रैकेन जातानामित्येकदा तृतीयासमासः। एकदा त्वेकस्यां जातानामिति सप्तमीसमासः। अत्र पक्षे 'एकतद्धिते च' (पा० सू० ६। ३। ६२) इति पूर्वपदस्य ह्रस्वः। तेनैकेन पित्रैकस्यां मातरि जातानामेव ग्रहीतृत्वमवगम्यते। ततश्च तादृश(सोदर) भ्रातुष्पुत्रस्यैव ग्राह्यत्वमित्यर्थः पर्यवस्यति। **न भिन्नोदराणामिति**। एकेन पित्रा द्वयोर्मात्रोरुत्पादितानामर्थात्सापत्नभ्रातॄणां प्रतिग्रहीतृत्वं नास्तीति यावत्। तेन सापत्नभ्रातुष्पुत्रो दत्तको न भवतीत्यभिप्रायः। सापत्नभ्रात्रोरेकेन पित्रा जातत्वेऽप्येकस्यां मातरि जातत्वाभावादिति भावः। **भिन्नपितृकाणामिति**। भिन्नः पिता जनिता येषां तेषामित्यर्थः। अत्रेयमाशङ्का—एकपितृकभिन्नमातृका भ्रातरः संभवन्त्येव। एकस्य बह्व्यो जाया भवन्तीति श्रुतेः। परं चैकमातृकभिन्नपितृका भ्रातरः कथमिव संभवेयुः। नैकस्यै बहवः सह पतय इति श्रुतेः। स्त्रियाः पुनर्विवाहस्य श्रुतिस्मृतिषु निषिद्धत्वात्। तदाह मनुः—कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु (म० स्मृ० ५। १५७)। तथा—नोद्वाहिकेषु मन्त्रेषु नियोगः कथ्यते क्वचित्। न विवाहविधावुक्तं विधवावेदनं पुनः (म० स्मृ० ९। ६५) इति। तादृशनिषेधमुल्लङ्घ्य परपुरुषं समाश्रितायां स्त्रियां भर्तृव्यतिरिक्तपुरुषेणोत्पादितायाः प्रजाया अशास्त्रीयत्वाच्चेति चेदुच्यते। अनन्यपूर्विकां कान्तामुद्वहेदित्युक्तम्। तत्रान्यपूर्विका द्विविधा-पुनर्भूः स्वैरिणी च। तत्र प्रथमा 'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः (या० स्मृ० १। ६७) इतिलक्षणलक्षिता। अस्यार्थः—या कृतविवाहा सती क्षतयोनिरक्षतयोनिर्वा कौमारेण भर्त्रा भर्त्रन्तरेण वा यथाविधि पुनरुह्यते सा पुनर्भूरिति। एवं च पुनर्वैवाहिकविधिसंस्कृता पुनर्भूः। तस्या भर्ता पौनर्भवः। तेन भर्त्रा तस्यां पुनर्भ्वामुत्पादितः सुतः पौनर्भवः। तदुक्तम्—'अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः' (या० स्मृ० २। १३०) इति। अयं पौनर्भवः

न्नपितृकाणां वेति गम्यते । भ्रातॄणामिति पुंस्त्वनिर्देशात्पदद्वयोपादानसामर्थ्याच्च सोदराणां भ्रातृभगिनीनामपि परस्परं पुत्रग्रहीतृत्वाभावोऽवगम्यते । तदाह वृद्ध-गौतमः—

---

पुत्रः शास्त्रीयः । मन्वादिभिः पुत्रप्रतिनिधित्वेनास्याभिधानात् । स्वभर्तृज औरसः पौनर्भवश्चेत्येतौ द्वौ सुतौ भिन्नपितृकावेकमातृकौ भवतः । अत एव—द्वौ सुतौ विवदेतायां द्वाभ्यां जातौ स्त्रिया धने । तयोर्यद्यस्य पित्र्यं स्यात्तत्स गृह्णीत नेतरः ( म० स्मृ० ९ । १९१ ) इत्युक्तं संगच्छते । अस्य कुल्लूककृता व्याख्या त्वित्थम्—इदमौरसपौनर्भवविषयम् । यदोत्पन्नौरसा भर्तुर्मृतत्वाद्बालापत्यतया स्वामिधनं स्वीकृत्य पौनर्भवभर्तुः सकाशात्पुत्रं जनयेत्तस्यापि च पौनर्भवस्य भर्तुर्मृतत्वाद्रिक्थहरान्तराभावाद्धनं गृहीतवती, पश्चात्तौ द्वाभ्यां जातौ यदि विवदेयातां स्त्रीहस्तगतधने तदा तयोर्यस्य यज्जनकस्य धनं तदेव स गृह्णीयान्न त्वन्यपितृजोऽन्यजनकस्येति । तयोरप्येकमातृप्रसूतत्वेन भ्रातृव्यवहारः । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रह इति कलौ पौनर्भवो निषिद्ध इत्यन्यत् । एवं चैतादृशानां भिन्नपितृकैकमातृकाणां भ्रातॄणां प्रतिग्रहीतृत्वं नास्ति । तेनौरसेन पौनर्भवभ्रातुः सुतो दत्तको न ग्राह्यः । पौनर्भवभ्रात्रा वौरसभ्रातुः सुतो न पुत्रीकर्तव्यः । तयोरौरसपौनर्भवयोरेकस्यां मातरि जातत्वेऽप्येकेन पित्रा जातत्वाभावादिति भावः । संस्कारकौस्तुभे तु भिन्नमातृकाणां भ्रातॄणां न सर्वथा परस्परपुत्रग्रहणाभावः प्रतिपादितः, किंत्ववस्थाविशेषे भिन्नोदरसुतस्य ग्राह्यत्वाभाव उक्तः । 'एकजातग्रहणं भिन्नोदराणामेकपितृकाणामपि सपिण्डान्तरलाभदशायां भ्रातृपुत्रनियमो न भवतीति ज्ञापनार्थम्, नतु भिन्नोदरसुतस्याग्राह्यत्वज्ञापनार्थम् । 'ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्' इति वृद्धगौतमस्मृतिवत्तन्निषेधस्मृतेः क्वाप्यनुपलम्भात्' इत्युक्तम् ।

नन्वेकजातानामिति विशेषणाद्भिन्नोदराणां भिन्नपितृकाणां च भ्रातॄणां परस्परपुत्रप्रतिग्रहीतृत्वाभावे सिद्धेऽपि भ्रातृभगिन्योः परस्परपुत्रप्रतिग्रहीतृत्वमनिवारितं तयोः पूर्वोक्तैकजातत्वाविशेषादत आह—**भ्रातॄणामिति** । **पुंस्त्वनिर्देशादिति** । पुंस्त्वविशिष्टार्थप्रतिपादकभ्रातृशब्दोपादानादित्यर्थः । **पदद्वयेति** । भ्रातॄणामेकजातानामिति च पदद्वयेत्यर्थः । अयं भावः—यदि भ्रातृशब्दो लिङ्गाविवक्षया भगिन्या अप्युपलक्षकः स्यात्तदा भ्रातृशब्दो व्यर्थ एव स्यात् । एकजातानामित्येतावतैव तद्ग्रहणसिद्धेः । तदुक्तं संस्कारकौस्तुभे—एकजातानामित्येव सिद्धे भ्रातृपदं सोदरत्वेऽपि भ्रातृभगिनीनां परस्परपुत्रनियमो न भवतीति ज्ञापनार्थमिति । यदि त्वेकजातानामिति नोच्येत

' ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ' इति ।

भागिनेयपदं भ्रातृपुत्रस्याप्युपलक्षणम् । तेन भगिन्या भ्रातृपुत्रो न ग्राह्य इत्यर्थः सिध्यति । भ्रातृणामेव ग्रहीतृत्वप्रतिपादनात् । यद्यपि ' भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ' इत्यनेनैकशेषोऽवगम्यते, ततश्च भ्रातृभगिनीपुत्रयोर्भ्रातृभगिनीभ्यां परस्परं पुत्रीकरणमवगम्यते, तथाऽप्येकजातानामिति भ्रातृविशेषणेनैकं जातं जातिर्येषां त एकजाताः । ' जातिर्जातं तु सामान्यम् ' इति कोशात्, तेषां समानजातीयत्वप्रतिपादनात्, भ्रातॄणां पुंसां भ्रातृपुत्रस्य भगिनीनां च स्त्रीणां भगिनीपुत्रस्य पुत्रीकरणं सिध्यति, न भ्रातृपुत्रस्य भगिन्या भगिनीपुत्रस्य भ्रात्रा वा पुत्रीकरणं संभवति । स्त्रीपुंस्त्वजातिभेदात् ।

---

तदा पुंस्त्वनिर्देशाद्भगिनीनां व्यावृत्तावपि भिन्नमातृकाणां भिन्नपितृकाणां भ्रातॄणां परस्परपुत्रग्रहणं प्राप्नुयादित्येकजातपदम् । ततश्च पदद्वयोपादानसामर्थ्यात्सोदरभ्रातॄणां प्रत्यासत्त्या सोदरभ्रातुष्पुत्रस्य ग्राह्यत्वे सिद्धे विधानादन्यत्र निषेधसिद्धे भ्रात्रा भगिनीपुत्रस्य भगिन्या वा भ्रातृपुत्रस्य दत्तकत्वेन ग्रहणाभावः सिध्यतीति भावः । भ्रात्रा भगिनीपुत्रो न ग्राह्य इत्येतद्विषये प्रमाणं प्रदर्शयति—**ब्राह्मणादित्रय इति** । **उपलक्षणमिति** । एवं च तुल्यन्यायाद्भगिन्याऽपि भ्रातृपुत्रो न ग्राह्य इति भावः ।

ननु भ्रातृणामिति पदे यदि पुंस्त्वविशिष्टार्थप्रतिपादकानामेव भ्रातृशब्दानां सरूपाणामित्येकशेषो विवक्षितः स्यात्तदा पूर्वोक्तं सर्वमुपपद्येत । परंतु तत्रैव प्रमाणं न पश्यामोऽन्यथाऽप्येकशेषोपपत्तेरित्याह—**यद्यपीति** । ' भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ' ( पा० सू० १ । २ । ६८ ) इति सूत्रेण भ्रातृस्वसृशब्दयोरेकशेषोऽभिहितः । ततश्च भ्रातरश्च स्वसारश्च भ्रातर इत्येकशेषेण भ्रातृशब्दावशेषे यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन भ्रातृणामित्यस्य भ्रातृभगिनीनामित्यर्थाद्भ्रात्रा भगिनीपुत्रस्य भगिन्या वा भ्रातृपुत्रस्य ग्रहणमक्षरमर्यादयैव सिद्धं भवति । तथाऽप्येकजातानामिति भ्रातृविशेषणेनैकं जातं जातिर्येषां तेषामित्यर्थात्समानजातीयत्वानियमस्याभिधानाद्भ्रातृणामित्यस्य भ्रातॄणां पुंसां मध्य एकश्चेत्पुमान् भ्राता पुत्रवान् भवेत्, तथा भ्रातृशब्दादुपस्थितानां भगिनीनां मध्य एका चेद्भगिनी पुत्रिणी भवेत्, सर्वे ते सर्वास्ताश्च तेन पुत्रेण पुत्रिणो भवन्तीत्यर्थः पर्यवस्यति । ततश्च भ्रात्रा पुंसा भ्रातुष्पुत्रस्य, भगिन्या वा स्त्रिया भगिनीपुत्रस्य ग्रहणं सिध्यति । ननु भ्रात्रा भगिनीपुत्रस्य भगिन्या वा भ्रातृपुत्रस्य ग्रहणं प्राप्नोति । येन पुत्रो ग्राह्यः, यस्य च ग्राह्यस्तयोर्द्वयोः स्त्रीत्वपुंस्त्वजातेर्भेदेन समानजातीयत्वाभावात् । ननु यद्येवमेक-

ननु सकृदुच्चारितस्यैकजातानामित्येकस्य पदस्य सोदरत्वं समानजातीयत्वं चेत्यर्थद्वयं न संभवति। सकृदुच्चारितः शब्दः सकृदेवार्थं गमयतीति न्यायविरोधादिति चेन्न।

'असंसृष्ट्यपि चाऽऽदद्यात्संसृष्टो नान्यमातृजः'

इत्यत्र संसृष्टपदस्य सोदरपरत्वेन संसृष्टिपरत्वेन च विज्ञानेश्वराचार्यैर्व्याख्यातत्वादिहापि तथैवेति न दोष इत्यलम्।

---

जातानामित्यस्य समानजातीयत्वरूपार्थप्रतिपादकत्वमुच्यते चेदेकपितृकभिन्नमातृकयोर्भ्रात्रोरेकमातृकभिन्नपितृकयोरौरसपौनर्भवयोश्च परस्परपुत्रग्रहणमनिष्टं प्राप्नोति तन्निवारणार्थं यद्येकजातानामित्यस्यैकमातापितृकाणामित्यर्थो व्याख्यायते तदा भ्रातृभगिन्योः परस्परपुत्रग्रहणमनिष्टं प्रसज्यते। युगपदर्थद्वयग्रहणे तु न कोऽपि दोषः, परंतु युगपदर्थद्वयग्रहणं सकृदुच्चारितः शब्दः सकृदेवार्थमवगमयतीतिन्यायविरोधादयुक्तमित्याशयेनाऽऽह—**ननु सकृदुच्चारित इति**। समाधत्ते—**नेति**। असंसृष्ट्यपीति। ( या० स्मृ० २। १३९ )। अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेदिति, अस्य पूर्वार्धं बोध्यम्। सोदरौ द्वौ भ्रातरौ, तयोश्चैकः सापत्नभ्राता। त्रयोऽप्येते विभक्तधना आसन्। पश्चात्सापत्नभ्राता सोदरयोर्द्वयोर्भ्रात्रोर्ज्येष्ठेन भ्रात्रा सह संसृष्टी संजातः। संसृष्टी नाम विभक्तं धनं पुनर्मिश्रीकृतं संसृष्टं तदस्यास्तीति संसृष्टी। एकत्रवासीत्यर्थः। कनिष्ठः सोदरः पुनर्विभक्त एवाऽऽसीत्। संसृष्टिनोर्द्वयोः सापत्नभ्रात्रोर्मध्य एको यस्य सोदरो भ्राताऽस्ति स कालवशात्स्मृतिपथं प्राप्तः। मृत इति यावत्। मृतस्य च तस्य न पुत्रः, नापि पत्नी, न वा दुहिताऽऽसीत्। एवं स्थितौ मृतस्य संसृष्टिनो धनं केन ग्राह्यं किं संसृष्टिना सापत्नभ्रात्राऽथवाऽसंसृष्टिना सोदरभ्रात्रेत्याकाङ्क्षायामाह याज्ञवल्क्यः—असंसृष्ट्यपि चाऽऽदद्यात् संसृष्टो नान्यमातृजः, इति। मृतस्य संसृष्टिनो धनमसंसृष्ट्यपि संसृष्टः सोदरभ्राता गृह्णीयात्। अत्रासंसृष्टस्यापि सोदरस्य धनग्रहणे सोदरत्वं कारणमुक्तम्। तथा च संसृष्टशब्दस्यैकोदरसंसृष्ट इत्यर्थात्सोदर इत्यर्थ इति स्पष्टमेव। तच्च संसृष्टपदमुत्तरत्रापि संबध्यते। तत्र च संसर्गयुक्तः संसृष्टः। संसृष्टीति यावत्। संसर्गश्च विद्यमानं भावि वा धनमावयोः साधारणमित्याकारकोऽभिप्रायः। तथा च संसृष्ट्यप्यन्यमातृजो मृतस्य संसृष्टिनो धनं न गृह्णीयात्। अत्र संसृष्टिनोऽप्यंशहरत्वाभावे भिन्नमातृजत्वं कारणमुक्तम्। तथा चात्र संसृष्टपदस्य संसृष्टीत्यर्थ इति व्यक्तं भवति। ततश्च मिताक्षराकृद्भिर्विज्ञानेश्वरैरसंसृष्ट्यपि चाऽऽदद्यादित्यत्रत्यस्य सकृदुच्चारितस्यापि

बहुवचनमेकद्वित्वयोरप्युपलक्षणम् । बहुषु द्वयोः संभवात् । यदि हि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति द्विपितृकत्वसंभवाच्च । एक एकोऽपि चेदित्यनेन द्वयोर्बहूनां वा पुत्रवत्त्वे सुतरां सुकरं पुत्रग्रहणमन्येषामपुत्राणां

---

संसृष्टपदस्य यथा निरुक्तार्थद्वयपरत्वमङ्गीकृतं तद्वत्सकृदुच्चारितस्याप्येकजातानामिति पदस्यैकमातापितृकत्वसमानजातीयत्वरूपार्थद्वयपरत्वस्वीकारे बाधकाभाव इति भावः । एवं च तन्त्रोच्चारितमेकजातपदम् । उच्चारयितुस्तन्त्रं बोद्धुस्त्वावृत्त्यैव बोध इत्यनुभवसाक्षिकसिद्धान्ताद्यावदर्थमेकजातपदमावर्तनीयम् । तेन न कोऽपि दोष इत्यलमतिपल्लवितेन ।

**बहुवचनमिति** । भ्रातॄणामित्यत्रेत्यर्थः । **उपलक्षणमिति** । समीपस्थस्य स्वसंबन्धिनश्च लक्षणं ज्ञानं यस्मादित्युपलक्षणशब्दव्युत्पत्तेर्बहुत्वस्य द्वित्वव्यापकत्वेन बहुषु द्वयोर्नियमेनान्तर्भावाद्बहुवचनं स्वस्य बहुत्वस्य स्वान्यस्य द्वित्वस्य चाजहल्लक्षणया बोधकमित्यर्थः ।

ननु भ्रातॄणामित्यत्रत्यबहुवचनेनोपलक्षणाविधया द्वित्वस्य ग्रहणे सत्येकजातयोर्भ्रात्रोर्मध्य एकश्चेत्पुत्रवान्भवेत् तेन पुत्रेण तौ द्वावपि भ्रातरौ पुत्रवन्तौ भवत इत्यर्थः स्यात् । तत्र द्वयोर्भ्रात्रोर्मध्ये यः पुत्रवान् स यदि पुत्रद्वयवांस्तदैकः पुत्रोऽपुत्रेण गृहीत एकश्च स्वस्यावशिष्ट इति तौ द्वावपि भ्रातरौ पुत्रवन्ताविन्त्येकेन पुत्रवता भ्रात्रा सर्वेषां पुत्रवत्त्वं मनूक्तं साधु संगच्छते । परंतु यदा स एकपुत्रवांस्तदा तस्यैकस्य पुत्रस्यापुत्रेण भ्रात्रा पुत्रीकरणे पुत्रवानपुत्रो भवेत्पुत्रीकरणाभावे त्वपुत्रोऽपुत्र एवेति पक्षद्वयेऽप्येकोऽपुत्रोऽवशिष्यते । ततश्च किमनेन विधिनाऽधिकं कृतम् । किंचैकस्य पुत्रस्यापुत्रेण भ्रात्रा पुत्रीकरणमेव न संभवति । नैकं पुत्रं दद्यादिति वसिष्ठेन प्रतिषेधाभिधानात् । तथा च तौ द्वावपि भ्रातरौ तेन पुत्रेण पुत्रिणा इति मनूक्तं कथं संगच्छतामित्यभिप्रायवानाह—**यदि हीति** । द्विपितेत्यत्र समासान्तविधेरनित्यत्वात् 'नद्यृतश्च' ( पा० सू० ५ । ४ । १५३ ) इति समासान्तः कप् न कृतः । अत्र द्विपितेत्युक्त्या जनकपितृनिरूपितं पुत्रत्वं न निवर्ततेऽपि तु प्रतिग्रहविधिबलात्पितृव्यनिरूपितं पुत्रत्वं तत्राधिकमुत्पद्यत इति सूचितम् । तथा च द्व्यामुष्यायणवत्पितृद्वयसंबन्धसंभवात् 'स हि संतानाय पूर्वेषाम्' इति वसिष्ठस्मरणादेकपुत्रदाननिषेधहेतुभूतसंततिविच्छेदाभावान्नैकं पुत्रमिति निषेधो भ्रातृसुतविषये द्व्यामुष्यायणविषये वा न प्रवर्तत इति कल्प्यते । तस्य भ्रातृसुतातिरिक्ते द्व्यामुष्यायणेतरस्मिन्वा सावकाशत्वादित्यर्थः । एवं चास्य द्व्यामुष्याणत्वमिति भावः ।

गमयति नैकीयैकपुत्रग्रहणं व्यावर्तयति । एकपदोपादानसामर्थ्यात्तेनेत्येकत्व-निर्देशाच्च । पुत्रः पुत्रौ पुत्रा वा विद्यन्ते यस्येति मतुप् । तेन चैकस्यापि पुत्रस्य दानाभ्यनुज्ञाने न त्वेवैकं पुत्रं दद्यादिति निषेधस्यातरानवकाशः । स हि संतानाय पूर्वेषामिति हेतुवचनप्रतिपादितपित्रादिपूर्वसंतानस्य भ्रातृद्वयसाधारणेनापि पुत्रेण निर्वाहादुक्तनिषेधस्य भ्रातरतिरिक्तविषयतासिद्धेः ।

---

एतेन द्वयोर्भ्रात्रोर्मध्येऽन्यतरस्यैकपुत्रवत्त्वेऽपरेण प्रतिगृहीते भ्रातृसुते जनकनिरूपितपुत्रत्वस्य निवृत्तौ जायमानायां ' सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ' इत्युक्तेस्तत्तुल्यन्यायाद्द्वावपि तौ तेन पुत्रेण पुत्रवन्ताविति वक्तुं न शक्यत इति परास्तम् । पुत्रपदं चात्रौरसपरम् । जन्यपुंस्त्वबोधकपुत्रशब्दस्य तत्रैव मुख्यत्वात् । तेन भ्रातृपुत्रस्यापि दत्तकादेर्भ्रातृमतोऽपि ग्रहणं न भवति । एक इत्यस्यैकोऽपीत्यर्थः । तथा च भ्रातॄणां मध्ये यद्येकोऽपि पुत्रवान् भवेत्तर्ह्यपि पुत्रग्रहणमन्येषामपुत्राणां विधीयते तत्र यदा द्वौ बहवो वा भ्रातरः पुत्रवन्तः स्युस्तदाऽन्येषामपुत्राणां पुत्रग्रहणं विधीयत इति किमु वक्तव्यमवश्यं सुकरं भवतीति कैमुतिकन्यायेन व्याख्येयम् । अन्यथैकस्यैव पुत्रवत्त्वेऽन्येषामपुत्राणां पुत्रस्वीकरणं भवेन्न तु द्वयोर्बहूनां वा पुत्रवत्त्व इत्ययुक्तमापद्येत । ननु कैमुतिकन्यायादेकत्वस्याविवक्षितत्वेन द्वयोर्बहूनां वा पुत्रवत्त्वेऽन्येषामपुत्राणां पुत्रस्वीकरणं भवतु, एकस्य पुत्रवत्त्वे त्वेकस्य तत्पुत्रस्य ग्रहणं मा भवत्विति चेन्न । तथा सत्येकग्रहणं व्यर्थं स्यादित्याशयेनाऽऽह—**नैकीयैकपुत्रेति**। उभयोर्मध्य एकीयस्य भ्रातुरेकस्य पुत्रस्येत्यर्थः । तथा चैकत्वमविवक्षितमित्यस्य द्वयोरेव बहूनामेव च ग्रहणमिति नार्थः, किंत्वेकत्वं गृहीत्वा तदन्यस्य द्वित्वादेरपि ग्रहणमित्यर्थः। तेनैकस्य द्वयोर्बहूनां वा पुत्रवत्त्वे सर्वत्रान्येषामपुत्राणां पुत्रग्रहणं सिध्यति। **तेनेत्येकत्वेति** । यदि तु द्वयोरेव बहूनामेव वा पुत्रवत्त्वे पुत्रग्रहणमन्येषामपुत्राणामभीष्टं स्यात्तर्हि तेनेत्यस्य स्थाने ताभ्यां तैर्वा पुत्रैः सर्वे भ्रातरः पुत्रिण इत्येव वदेदिति भावः । एकश्चेत्पुत्रवानिति पुत्रवत्पदे वृत्तावुपसर्जनपदानामभेदैकत्वसंख्यौत्सर्गिकीति सिद्धान्तात् पुत्रोऽस्ति यस्येत्येकवचनान्तेन विग्रहः । तत्र केवलं शब्दसंस्कारायैकवचनसुप्रत्ययोपादानं नतु तदर्थं एकत्वं विवक्षितम् । अथवा पुत्राः सन्त्यस्येत्येवं बहुवचनान्तेन विग्रहः । तत्र बहुषु नियमेन द्वित्वैकत्वयोरन्तर्भावाद्बहुवचनेनोपलक्षणविधया द्वित्वैकत्वयोरपि ग्रहणमित्याशयेनाऽऽह—**पुत्रः पुत्रौ पुत्रा वेति । मतुबिति** । ' तदस्यास्त्यस्मिन्निति मतुप् ' ( पा० सू० ५ । २ । ९४ ) इति पाणिनिसूत्रेणेति शेषः । तथा च यदि भ्रातुरेक एव पुत्रः स्यात्तर्ह्यपि तस्यैकस्य

किंच दानस्य स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपत्वात् तस्य चानेन निषेधात् प्रकृते चैकस्योभयसाधारणीकरणेन स्वत्वनिवृत्त्यभावात्कन्यादान इव

---

दानमनुज्ञातं भवतीति नात्र ' न त्वेकं पुत्रं दद्यात् ' इति निषेधः प्रवर्तितुमुत्सहते । तस्य भ्रातृसुतातिरिक्तसपिण्डविषये सावकाशत्वात् । एकमपि भ्रातृसुतं दद्यादिति विशेषविहितेन विधिनाऽनेन सामान्यस्य तस्य बाधात् । किंच न त्वेकं पुत्रं दद्यादिति निषेधबीजस्य ' स हि संतानाय पूर्वेषाम् ' इति वचनप्रतिपादितस्य पित्रादिपूर्वसंतानविच्छेदस्य द्विपितृकत्वकल्पनयैवाभावेन कारणाभावात्कार्याभाव इति न्यायेनात्र कारणाभावादेव निषेधस्याप्रवृत्तेः । किंच दानं नाम तदुच्यते यत्स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनम् । तच्च न दद्यादिति निषिध्यते । द्विपितृकस्थले चैकस्योभयनिरूपितपुत्रत्वसत्त्वेन परस्वत्वोत्पत्तावपि न ममेति न वदेदिति निषेधात्कन्यादान इव स्वत्वानिवृत्तेर्दानस्य गौणत्वेन गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायेनोभयांशघटितमुख्यदान एव निषेधप्रवृत्तिपर्यवसानेन व्यामुष्यायणस्थलीय एकांशरहिते गौणे दाने निषेधाप्रवृत्तिरिति विभावनीयम् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीदित्येकेन पुत्रेण सर्वेषां पुत्रित्वस्य कथनाद्बहवोऽप्येकं युगपद्गृह्णीयुः । युगपत्प्रतिग्रहेण च द्रौपद्यां भार्यात्ववदनेकनिरूपितपुत्रत्वमुत्पद्यते । ततश्च तादृशविलक्षणपुत्रत्वान्यथानुपपत्त्या परस्परसहितानामेव सर्वेषां भ्रातॄणां पुत्रप्रतिग्रहविधिरुन्नीयत इति केचिदाहुः । तन्न समीचीनम् । भ्रातुः पुत्रोत्पत्तेः प्रागेव पुत्रप्रतिग्रहादिना भ्रातृसुतपरिग्रहमनिच्छति कस्मिंश्चिदिच्छतोऽप्यपरस्य भ्रातुः पुत्रप्रतिग्रहानापत्तेः । अन्ये तु नैवात्र प्रतिग्रहविधिरनुमीयते, किंत्वकृतस्यैव भ्रातृपुत्रस्यापुत्रपितृव्यपुत्रत्वं विधीयते । तेन पुत्रवच्छ्राद्धाधिकारादिलाभः । तथा च बृहत्पाराशरः—अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् । स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियाः ॥ इति । बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः । एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥ अत्र सापत्नपुत्रस्यागृहीतस्यापि पिण्डदानाधिकारित्वात्पितृपत्न्यः सर्वा मातर इत्यादिशास्त्राल्लोकव्यवहाराच्च पुत्रत्वं निर्विवादम् । तत्सहपाठाच्च भ्रातृपुत्रस्याप्यगृहीतस्यैव पुत्रत्वं विधीयत इत्युचितम् । अस्ति चोक्तमनुवाक्येनापि सहपठितसापत्नपुत्रस्यागृहीतस्यापि पुत्रत्वविधायकं वाक्यान्तरम्—सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥ ( म० स्मृ० ९ । १८३ ) इति । तदपि न । अगृहीतस्यैव भ्रातृपुत्रस्य पुत्रत्वे त्रयोदशपुत्रापत्तेः । तत्र च—पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः । तेषां

दानपदार्थस्य गौणत्वात्। पुत्रपदस्यौरसे मुख्यत्वादौरसत्वमेव पुत्राणां सिध्यति। तेन च भ्रातृकृतपुत्रप्रतिनिधीनां परिग्रहणाभावोऽवगम्यते। भवेदित्यनेन पुत्रवत्तायाः सत्ताप्रतिपादनाद्भूतपुत्रत्वं भविष्यत्पुत्रत्वं च व्यावर्तयति। तेन चातीतेन भ्रातृपुत्रेणान्यस्य भ्रातुर्न, पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखमित्यादिफलसंबन्धः। न चानागतपुत्रप्रतीक्षायां पुत्रान्तरापरिग्रह इति।

---

षड् बन्धुदायादाः षडदायादबान्धवाः ( म० स्मृ० ९ । १५८ ) इत्युक्तद्वादशसंख्याविरोधात्। पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः॥ ( या० स्मृ० २ । १३५ ) इतियाज्ञवल्क्यवचसि भ्रातृपुत्राणां भ्रात्रनन्तरस्थाननिवेशानुपपत्तेः। तेषां पुत्रत्वं इतरपुत्रवत्पत्न्याः पूर्वमेव निवेशौचित्यात्। व्याख्यातं च भ्रातॄणामेकजातानामिति वचनं विज्ञानेश्वरेण—भ्रातृपुत्रस्य पुत्रीकरणसंभवेऽन्येषां पुत्रीकरणनिषेधार्थं, न पुनः पुत्रत्वप्रतिपादनाय तत्सुता इत्यनेन विरोधादिति। का तर्ह्येतस्य वचसो गतिरिति चेन्नापुत्रस्य लोकोऽस्ति जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते यज्ञेन देवेभ्यः प्रजया पितृभ्य इत्यादिशास्त्रबोधितस्याप्रजस्त्वप्रयुक्तदोषस्य निवृत्तिः पुत्रकार्यभूता द्वादशपुत्रभिन्नेनापि भ्रातृसुतेनापुत्रपितृव्यस्य भवतीति ज्ञापनार्थम्। संगच्छते चैकस्यापि सुते जात इति यद्येकः पुत्रवान् भवेत् इति च जननमात्रेण सत्तामात्रेण चेतरेषां पुत्रवत्त्वकीर्तनम्। उचितं चैतत्स्वपुत्रेणेव भ्रातृसुतेनापि समस्तपितॄणां पिण्डोदकक्रियानिर्वाहस्य वंशविच्छेदपरिहारस्य च संभवात्। उक्तज्ञापनस्य फलं केवलं परलोकार्थितया भ्रातृपुत्रवतोऽपुत्रस्य दत्तकादिग्रहणप्रवृत्तिनिरासः। पत्न्यादिभ्यः पूर्वं मदीयपिण्डदानरिक्थाधिकारी कश्चिद्भवेदिति कामनायां भ्रातृपुत्रस्यैव दत्तकविधिना स्वीकारसिद्धिरप्यर्थाज्जायमाना भवतीति संस्कारकौस्तुभे चतुश्चत्वारिंशत्पृष्ठे स्पष्टं निरूपितम्।

**पुत्रपदस्येति**। पुत्रवान् भवेदित्यत्रत्यस्य जन्यपुंस्त्ववाचिनः पुत्रपदस्यौरसे मुख्यत्वादौरसपुत्रवान् भवेदित्यर्थोपपत्तेस्तादृशौरसपुत्रेणैव पुत्रवत्त्वाभिधानादौरसस्यैवान्येषामपुत्राणां भ्रातॄणां पुत्रीकरणं बोध्यते। तेन भ्रातृभिः कृता ये दत्तकादिपुत्रप्रतिनिधयस्तेषां ग्रहणं न भवतीत्यवगम्यत इत्यर्थः। दत्तकादिरूपस्य भ्रातुष्पुत्रस्यान्यैरपुत्रैर्भ्रातृभिः पुत्रीकरणं न विधेयमिति तात्पर्यम्। **सत्ताप्रतिपादनादिति**। पुत्रवान् भवेदिति वाक्येन पुत्रनिष्ठसत्ताया अभिधानाद्भ्रातॄणां मध्य एको विद्यमानपुत्रवान् स्यादित्यर्थान्मृतेन भ्रातृपुत्रेणान्यस्यापुत्रस्य भ्रातुः पिता पुत्रस्य जातस्येति वचनप्रतिपादितफलसंसर्गो न भवति। न चाप्येकस्य भ्रातुः पुत्रो भविष्यतीति संभावनया निश्चितपुत्राभाववतोऽन्यस्य भ्रातुः पुत्रान्तरप्रतिग्रहे प्रतिबन्धो भवतीत्यर्थः।

तच्छब्देनापुत्राणामेव भ्रातॄणां परामर्शाज्जनकस्य स्वपुत्रसंबन्धाभावव्यावर्तनाय सर्व इति। त इत्यत्र स च तौ च ते चेत्येकशेषादेवैकस्य द्वयोर्बहूनां वा पुत्रेच्छया तत्पुत्रीकरणं भवति। तेनेति। येन जनकस्य पुत्रवत्त्वं तेनैव सर्वेषामपीति। पुत्रेणेत्येकत्वनिर्देशादेकस्याप्यनेकपुत्रत्वाभिधानेन 'न त्वेवैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा' इत्येतन्निषेधस्यात्रानवकाश इत्युक्तमेव।

तथा च कालिकापुराणे वेतालभैरवयोः शंकरात्मजयोरेकेन पुत्रेणोभयोः पुत्रवत्त्वलिङ्गं दृश्यते। ऋषय ऊचुः—

अपुत्रस्य गतिर्नास्ति श्रूयते लोकवेदयोः।
वेतालभैरवौ यातौ पुरा वै तपसे गिरिम्॥
पूर्वं त्वकृतदारौ तौ तयोः पुत्रा न च श्रुताः।
तेषां तु सम्यगिच्छामः श्रोतुं संस्थानमुत्तमम्॥

मार्कण्डेय उवाच—

अपुत्रस्य गतिर्नास्ति प्रेत्य चेह च सत्तमाः।
स्वपुत्रैर्भ्रातृपुत्रैश्च पुत्रवन्तो हि स्वर्गताः॥
सम्यक्सिद्धिमवाप्येह यदा वेतालभैरवौ।
हरस्य मन्दिरं यातौ कैलासं प्रति हर्षितौ॥

---

**सर्व इति**। पुत्रवन्तोऽपुत्रवन्तश्चेति द्विविधा अपीत्यर्थः। यदि चात्र सर्वशब्दोपादानं नाकरिष्यत्तर्हि त इति तच्छब्देनापुत्राणामेव भ्रातॄणां परामर्शात्तेन पुत्रेणापुत्रवन्त एव पुत्रिणः स्युरिति जनकस्य स्वपुत्रनिरूपितसंबन्धो निवर्तेत इति भ्रान्तिरुत्पद्येत। सा मा भूत्, किंतु जनकस्य स्वपुत्रसंसर्गो भूत्वैवापुत्राणामपि भ्रातॄणां स्वपुत्रसंसर्गो भवतीति सूचनार्थं सर्वशब्दोपादानमित्यर्थः। **त इति**। स च स च तौ। स च, स च, स च ते। स च तौ च ते चेत्येवं प्रकारेण 'सरूपाणामेकशेष एकविभक्तौ' (पा० सू० १।२।६४) इति सूत्रेणैकशेषकरणादेकेन द्वाभ्यां बहुभिर्वा भ्रातृभिः पुत्रेच्छानुसारेण तत्पुत्रीकरणं कर्तव्यमिति सिध्यति। येन जनकस्य पुत्रवत्त्वं तेन पुत्रेणेत्येवमेकवचनोच्चारणेन येनैकेन पुत्रेण पुत्रवांस्तैनैकेन पुत्रेणेत्यर्थादेकस्याप्यनेकनिरूपितपुत्रत्वप्रतिपादनेन न त्वेकं पुत्रं दद्यात्प्रतिग्रहणीयाद्वेति निषेधो नात्र प्रवर्तत इति पुत्रवानिति पदव्याख्यानावसर उक्तमित्यर्थः। यस्यैक एव पुत्रस्तस्यैकस्यापि दाने प्रतिग्रहे वा प्रतिबन्धो नास्तीत्यर्थ एकस्यैव भैरवपुत्रस्य भैरवभ्रात्रा वेतालेन पुत्रीकरणरूपं पौराणिकं लिङ्गं प्रमाणत्वेन प्रदर्शयितुमाह—**अपुत्रस्य गतिर्नास्तीत्यादि**। अत्राकृतदारयोर्वेतालभैरव-

तदा हरस्य वचनान्नन्दी तौ रहसि द्विजाः ।
प्राहेदं वचनं तथ्यं सान्त्वयन्निव बोधकृत् ॥

नन्द्युवाच-

अपुत्रौ पुत्रजनने भवन्तौ शंकरात्मजौ ।
यतेतां जातपुत्रस्य सर्वत्र सुलभा गतिः ॥

मार्कण्डेय उवाच-

तस्येदं वचनं श्रुत्वा नन्दिनः प्रीतमानसौ ।
एकमेव करिष्यावो नन्दिनं चेत्यभाषताम् ॥
ततः कदाचिदुर्वश्यां भैरवो मैथुनं गतः ।
तस्यां स जनयामास सुवेशं नाम पुत्रकम् ॥
तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम् ।
ततस्तौ तेन पुत्रेण स्वर्ग्यां गतिमवापतुः ॥ इति ।

नन्विदमेकस्यानेकपुत्रत्वं किं युगपदुत्पत्स्यतेऽथवा क्रमेण । नाऽऽद्यः। युगपत्प्रतिगृह्णीयुरिति विध्यभावात् । नापरः । पूर्वसंस्कारावरुद्धे तत्सजातीयसंस्कारा-

---

योर्मध्ये कृतदारो भैरवः स्वभार्यायामुर्वश्यामेकं पुत्रं जनयामास । तस्यैकस्यैव पुत्रस्याकृतदारेण वेतालेन पुत्रीकरणं वर्णितम् । अनेन पौराणिककथानकेनैकस्यापि पुत्रस्य दानं प्रतिग्रहणं वा शास्त्रीयं भवति । किंचाकृतदारेण वेतालेन पुत्रीकरणाल्लिङ्गाद्यस्य विवाह एव नास्ति तस्यापि पुत्रग्रहणाधिकारः सिध्यति । तेन कृतदारस्यापि तद्दारमृतौ प्रत्यक्षदृष्टाकृतदारकर्तृकपुत्रीकरणानुसरणरूपात्सांदृष्टिकन्यायादपुत्रपरिग्रहणं निष्टङ्कं पर्यवसितं भवति । एतेन ' संयोगवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वाद्दारपरिग्रहपूर्विकायामेवापुत्रतायां दत्तकग्रहणं शास्त्रीयं न दारपरिग्रहाभावपूर्विकायामपुत्रतायाम् । ततश्च स्नातकब्रह्मचारिणोर्न दत्तकग्रहणाधिकारः ' इति परास्तम् ।

एकस्यानेकनिरूपितपुत्रत्वविषये शङ्कते—**नन्विति** । **नाऽऽद्य इति** । अनेकनिरूपितं पुत्रत्वं युगपदुत्पद्यत इति पक्षो न संभवतीत्यर्थः । तदसंभवे हेतुमाह—**विध्यभावादिति** । सर्वे मिलित्वैकं युगपत्प्रतिगृह्णीयुरित्येवं विधेरभावादित्यर्थः । **नापर इति** । अनेकनिरूपितं पुत्रत्वमेकेन भ्रात्रा गृहीतस्यैव भ्रातृपुत्रस्य पुनर्द्वितीयेन भ्रात्रा ग्रहणं पुनस्तृतीयेनेत्येवं क्रमेणोत्पद्यत इत्यपरोऽपि पक्षो न संभवतीत्यर्थः । तत्र हेतुमाह—**पूर्वसंस्कारावरुद्ध इति** । प्रथमेन ग्रहीत्रा कृता ये संस्कारास्तैरवरुद्धे व्याप्ते संस्कृत इत्यर्थः । **तत्सजातीयेति** । पूर्वकृतसंस्कारसमानसंस्कारकरणानुपयोगात् । अयं भावः—जातकर्मादिसंस्कारा-

न्तरानुत्पत्तेरिति चेन्न। सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्निति वचनात्सर्व-शब्दयोर्द्वंद्वैकशेषेण प्रतिग्रहीतृभ्रातृसाहित्यस्यात्र विवक्षितत्वात्। तेन दानमपि सहितेभ्य एव सिध्यति। यथा तुलापुरुषे सहितानामेव ऋत्विजां संप्रदानत्वं प्रतिग्रहीतृत्वं चेति। तदाहुः—

'इत्यावाह्य सुरान्दद्यादृत्विग्भ्यो हेमभूषणम्'

इत्यत्र ऋत्विग्भ्य इतिबहुवचनान्मिलितानामेव संप्रदानत्वम्। तेन च सर्वेषा-मुपरि गुरुहस्तं कृत्वा तदधः क्रमेण ऋग्वेद्यादीनामृत्विजां हस्तानाधाय भूषणानि

---

णामेनोनिबर्हणद्वारा देहशुद्धिसंपादनार्थत्वात्प्रथमग्रहीतृकृतसंस्कारैरेव देहशुद्धेर्जातत्वेन तत्राशुद्ध्यादिदोषाणामविद्यमानत्वेन द्वितीयेन ग्रहीत्रा करिष्यमाणानां संस्काराणां फलाभावादकिंचित्करत्वादित्यर्थः। **इति चेन्नेति**। एवंरीत्या पक्षद्वयेऽप्यनेकभ्रातृ-निरूपितमेकस्य पुत्रत्वं दुरुपपादमिति ब्रूषे चेन्न तद्युक्तमित्यर्थः। **सप्तदशावरा इति**। न्यूनेषु न्यूनाः सप्तदशाधिकेष्वधिकाश्चतुर्विंशतिः, मध्ये यथेच्छमिति सप्तद-शादिचतुर्विंशतिपर्यन्तसंख्याका ऋत्विजः सत्रनामकं यागमनुतिष्ठेयुरित्यार्थिकायां 'सप्त-दशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्' इति श्रुतौ सप्तदशावराः सत्रमासीरन्निति प्रत्यक्षश्रुतबहुवचनबलात्सर्वेषां सहितानामेव ( बहूनां समुदायस्यैव ) यथा कर्तृत्वं तथाऽत्र 'सर्वे ते' इति तच्छब्दसर्वशब्दयोर्द्वंद्वविषय एकशेषविधायकेन 'सरू-पाणामेकशेष०' ( पा० सू० १। २। ६४ ) इति सूत्रेण स च स च स च ते। सर्वश्च सर्वश्च सर्वश्च सर्वे, इत्येवमेकशेषे कृते भ्रातॄणां सहितानामेव प्रतिग्रहीतृत्वं सिध्यति। दानमपि सहितेभ्य एव सिध्यति। 'तिष्यपुनर्वस्वोः०' ( पा० सू० १। २। ६३ ) इति पूर्वसूत्राद् 'द्वंद्वे' इत्यनुवर्त्य द्वंद्वविषये सति सरूपाणामित्यनेनैकशेषो विधीयते। द्वंद्वश्चेतरेतरयोग एव। इतरेतरयोगद्वंद्व-विषयश्च सहविवक्षा। सहविवक्षा च विशेष्यविशेषणभावानापन्नानेकस्य युगपदेकपदार्थ-संबन्धबोधनेच्छा। तेन देवानां देवो देवदेव इत्यत्र नैकशेष इत्याशयेनोक्तं—**द्वंद्वैकशेषेणेति।** द्वंद्वविषये सति विहितेन सरूपाणामित्येकशेषेणेत्यर्थः। ततश्च भ्रातॄणां साहित्यं लभ्यत इति सहितेभ्यो दानं सहितैश्च तैर्भ्रातृभिर्भ्रातृपुत्रो ग्राह्य इत्यर्थः सिध्यति। यथा तुलापुरुषे—इत्यावाह्य सुरान् दद्यादृत्विग्भ्यो हेमभूषणमित्यत्र ऋत्विग्भ्य इति बहुवचना-त्सहितानामेवर्त्विजां संप्रदानत्वं प्रतिग्रहीतृत्वं च तद्वदत्रापीति भावः। तत्रापि द्वंद्व-विषयकैकशेषेण बहुवचनसत्त्वात्। अत एव सर्वेषामुपरि गुरोः प्रधानर्त्विजो हस्तं कृत्वा तदधः क्रमेण ऋग्वेद्यादिऋत्विजां हस्तानाधाय भूषणानि प्रदेयानीति वाच-

देयानीति वाचस्पतिमिश्राः। न च युगपदनेकपुत्रत्वानुपपत्तिरपि। युगपत्प्रतिग्रहेण द्रौपदीभार्यात्ववदस्य विलक्षणस्यैवानेकपुत्रत्वस्य प्रसिद्धद्व्यामुष्यायणत्ववत्स्वीकारात्।

पुत्रिण इत्यत्र पुत्रोऽस्तीत्येषामिति भवनार्थकेनेनिना पुत्रभवनप्रतिपादनादभावितस्य च भवनायोगात् प्रतिग्रहीतृव्यापार आक्षिप्यते। तथा चात्रिः—

'अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा' इति।

वसिष्ठोऽपि पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चाऽऽवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसंनिकृष्टमेव प्रतिगृह्णीयादिति। शौनकोऽपि—

'दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत्' इति।

याचयेदिति प्रयोजकणिजन्तेन याचनार्थं वृतब्राह्मणद्वारा याचयेदिति। एतेनाकृतस्यैव भ्रातृपुत्रस्य पितृव्यपुत्रत्वम्।

---

स्पतिमिश्रा आहुः। किंच युगपदनेकनिरूपितपुत्रत्वस्यानुपपत्तिरपि न संभवति। यथा द्रौपद्यामेकसमयावच्छेन स्वीकारेण पतिपञ्चकनिरूपितं भार्यात्वं सर्वसंमतं तद्व- द्युगपत्प्रतिग्रहेणापूर्वमेवानन्यसाधारणमनेकनिरूपितं पुत्रत्वं प्रसिद्धव्यामुष्यायणे पितृद्वयनिरूपितपुत्रत्ववत्स्वी क्रियत इत्यभिप्रायात्

पुत्रिण इत्यत्र पुत्रोऽस्ति येषामिति मत्वर्थे 'अत इनिठनौ' (पा० सू० ५।२।११५) इति सूत्रेणेनुप्रत्ययः। अस्तिसमानाधिकरणाददन्तप्रकृतिकप्रथमान्तादस्येति षष्ठ्यर्थेऽस्मिन्निति सप्तम्यर्थे चेनिठनौ प्रत्ययौ भवत इति तदर्थः। तथा च 'अस् भुवि' इति स्मरणाद्भवनार्थकेनास्धातुना पुत्रनिष्ठभवनार्थाभिधानादभावितस्य शास्त्रोक्तमार्गेणागृहीतस्य च पुत्रीभवनायोगात्प्रतिग्रहीतृव्यापार आक्षेपाद्गृह्यते। आक्षिप्तः प्रतिग्रहीतृव्यापारश्चानुपदमेवाग्रे वक्ष्यते। प्रतिग्रहीतृव्यापाराक्षेपे प्रमाणं दर्शयितुमाह—**तथा चात्रिरिति**। **कर्तव्य इति**। कृधातुना पुत्रत्वसंपादनानुकूलः प्रयत्नाख्यः प्रतिग्रहीतुर्व्यापारो बोधित इत्यर्थः। स च व्यापारः कीदृश इत्यपेक्षायामाह—**पुत्रं प्रतिग्रहीष्यन्निति**। **हुत्वेति**। होमप्रकारः स्वस्वसूत्रानुसारेणोह्यः। **याचयेदिति**। प्रयोजकणिच्प्रत्ययश्रवणान्न प्रतिग्रहीत्रा स्वयं याचना कर्तव्या, किंतु होमाद्यर्थं वृतेन ब्राह्मणेन पुत्रदानयाचना कर्तव्येति प्रतीयते। ततश्च शास्त्रोक्तेन व्याहृतिहोमादिविधिना स्वीकृतस्यैव स्वपुत्रत्वं सिध्यति नेतरथेति विधिनाऽस्वीकृतस्यैव भ्रातृपुत्रस्य पितृव्यपुत्रत्वं (स्वपुत्रत्वं) 'अपुत्रस्य पितृव्यस्य' इति वचन-

अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत्।
स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियाम्।

इति बृहत्पराशरस्मरणादिति चोद्यं निरस्तम्। प्रतिग्रहीतृव्यापारं विना तत्पुत्रत्वानुपपत्तेः। न च गूढोत्पन्नदत्तात्मनोः कर्तृव्यापाराभावः।

गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
दत्तात्मा तु स्वयं दत्तः॥

इति कर्तृव्यापाराश्रवणादिति वाच्यम्। तत्रापि फलस्य क्रियासामानाधिकरण्यान्यथानुपपत्त्या तत्कल्पनात्। तस्माच्छ्रूयमाणं भ्रातॄणामेकजातानामिति, अपुत्रस्य पितृव्यस्येति च न यथाश्रुतमेवार्थवत्। त्रयोदशपुत्रापत्तेः। न चेष्टापत्तिः।

पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः।
तेषां षड् बन्धुदायादाः षडदायादबान्धवाः॥

---

बलादिति वदन्तः पसास्ता इति वेदितव्यम्। भ्रातृपुत्रस्य पितृव्यपुत्रत्वं विना कारणं वक्तुमनुचितमिति तत्र प्रतिग्रहीतृपितृव्यव्यापारस्य कारणीभूतस्याऽऽवश्यकत्वादिति बोध्यम्।

ननु प्रतिग्रहीतृव्यापारो नाऽऽवश्यकः। तस्य सर्वेषु पुत्रप्रतिनिधिष्वदर्शनादिति शङ्कते—**न चेति**। गूढजस्वयंदत्तयोः पुत्रप्रतिनिध्योः स्वरूपस्य प्रतिपादकयोर्याज्ञवल्क्यवचनयोः ( या० स्मृ० अ० २। १२९, १३१ ) कर्तृव्यापारानिर्देशात्प्रतिग्रहीतृव्यापारानावश्यकत्वोद्भावनमसमञ्जसमिति वदंस्तत्रापि प्रतिग्रहीतृव्यापाराक्षेप आवश्यक इत्याह—**तत्रापीति**। अयं भावः—यत्सत्त्वे यत्सत्त्वं यदभावे यदभाव इत्यन्वयव्यतिरेकाभ्यां फलव्यापारयोः सामानाधिकरण्यं नियतसाहचर्यमनुभूयते। तन्निर्वाहार्थं भ्रातॄणामेकजातानामिति वचने सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्, इति पुत्ररूपफलोत्पत्तिप्रतिपादनात्फलस्य च व्यापारं विनाऽसंभवात्तत्राप्याक्षेपादिना प्रतिग्रहीतृव्यापारो ग्राह्य एवेति। तथा च फलव्यापारयोः साहचर्यान्यथानुपपत्त्या तत्र व्यापारकल्पनाऽऽवश्यकीत्यर्थः। एवं च 'भ्रातॄणामेकजातानाम्' ( म० स्मृ० ९। १८२ ) इति वचनं तथा—'अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत्। स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियाः' इति बृहत्पाराशरवचनं च न प्रतिग्रहविधिनाऽस्वीकृतस्यैव भ्रातृपुत्रस्यापुत्रपितृव्यनिरूपितपुत्रत्वविधायकं भवति। तथा सति पुत्राणां त्रयोदशत्वापातप्रसङ्गात्। न च पुत्राणां त्रयोदशत्वमिष्टमेवेति

इति द्वादशसंख्याविरोधात् । नन्वस्त्येव संख्याविरोधः ।

औरसः पुत्रिका बीजक्षेत्रजौ पुत्रिकासुतः ।
पौनर्भवश्च कानीनः सहोढो गूढसंभवः ॥
दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापविद्धकः ।
यत्र क्वचोत्पादितश्च पुत्रास्तु दश पञ्च च ॥

इत्यादिस्मृत्यन्तरस्मरणात् ।

पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः ।
संतानकारणं तेषामौरसः पुत्रिका तथा ॥

इति बृहस्पतिस्मरणात् ।

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति स्मरणात् ।

औरसक्षेत्रजौ पुत्रौ पितू रिक्थस्य भागिनौ ।
दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥

इति मनुस्मरणाच्चेति चेत् । सत्यम् । केषांचित्क्वचिदन्तर्भावात्क्वचिद्बहिर्भा-

---

वाच्यम् । 'पुत्रान्द्वादश०' ( म० स्मृ० ९ । १५८ ) इति मनुप्रतिपादित-द्वादशसंख्याविरुद्धत्वात् ।

ननु स्मृत्यन्तरे पञ्चदश पुत्रा उक्ताः । बृहस्पतिश्च मनुप्रोक्तास्त्रयोदश पुत्रा इत्याह । ( म० स्मृ० ९ । १८० ) इति वचने पुत्रप्रतिनिधिभूता एकादश पुत्रा उक्ताः । ( म० स्मृ० ९ । १६५ ) इत्यत्र द्वादश पुत्रा उक्ताः । तथा च संख्याविरोधो दुष्परिहर एवेत्याह—**अस्त्येवेति**। तथा च संख्याविरोधोऽकिंचित्कर इति भावः । सत्यमित्यनेन संख्याविरोधं शङ्ककोद्भावितं यथाश्रुतमङ्गीकृत्य वस्तुतः स एव नास्तीत्याह—**केषांचिदिति** । मनुनोक्ता या पुत्राणां द्वादशसंख्या तदपेक्षयाऽधिका पुत्रसंख्या यत्र वचने दृश्यते तत्र द्वादशपुत्रान्तर्गतात्कस्माच्चिदेकस्मात्कस्यचिदेकस्य बहिर्भावं गृहीत्वा पुत्रिकाबीजजयोश्चौरसेऽन्तर्भावं कृत्वा त्रयोदशसंख्योक्ता बृहस्पतिना । पुत्रिकाबीजजयोरौरसाद्बहिर्भावं कृत्वा पञ्चदशसंख्योक्ता स्मृत्यन्तरे । मनुनोक्ता द्वादश पुत्रा यथा—औरसक्षेत्रजदत्तककृत्रिमगूढजापविद्ध-कानीनसहोढक्रीतकपौनर्भवस्वयंदत्तपारशवाख्याः । त्रयोदशः पुत्रस्तु 'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवे-

वाच्च तत्तत्संख्योपपत्तेर्न द्वादशसंख्याविरोध इति स्थितम् । किंचापुत्रदायाधिकारे—

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुताः ।

इति पञ्चमस्थानस्थितिविरोधश्च । अयमभिसंधिः । भ्रातृव्यस्याकृतस्यापि पुत्रत्वेऽपुत्रत्वाभावादपुत्रधनाधिकारे पञ्चमस्थाने भ्रातृव्यपरिगणनं विरुद्धम् । एवम्—

पुत्रः पौत्रः प्रपौत्रश्च तद्वद्वा भ्रातृसंततिः ।
सपिण्डसंततिर्वाऽपि क्रियार्हा नृप जायते ।

इत्यादि पिण्डाधिकारे ज्ञेयम् ।

---

दिति ' इति व्यवस्थया परिणीतायां कन्यायां जातः पुत्रिकापुत्रः । पुत्रिकायाः पुत्र इति विग्रहः । एतादृशपुत्रिकापुत्रस्य याज्ञवल्क्येन—' तत्समः पुत्रिकासुतः ' ( या० स्मृ० अ० २ । श्लो० १२८ ) इत्यौरससमत्वोक्त्यौरसेऽन्तर्भावं कृत्वा द्वादशसंख्यौरसात्पृथग्भावं विवक्षित्वा त्रयोदशसंख्योपपादनीया । चतुर्दशः पुत्रस्तु स एव पुत्रिकापुत्रः । अत्र पुत्रिकैव पुत्र इति कर्मधारयः । तथा च पुत्रिकारूपः पुत्र इति फलति । सोऽप्यौरससम एव । पुत्रिकायां पुमवयवानामल्पत्वात्स्त्र्यवयवानामाधिक्यात् । पञ्चदशस्तु पुत्रः ' क्रियाभ्युपगमात्क्षेत्रं बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ' इत्युक्तो बीजजः । अस्यार्थः—अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीकरणेन यत्क्षेत्रं क्षेत्रस्वामिना बीजवापनार्थं बीजिने दीयते तत्र क्षेत्र उत्पन्नस्यापत्यस्य बीजिक्षेत्रिणौ स्वामिनौ दृष्टौ महर्षिभिरिति । अयमप्यौरससम एव । बीजिना परक्षेत्र उत्पादितत्वात् क्षेत्रिणा च परेण बीजिनोत्पादितत्वाच्च । तथा च पुत्रिकाबीजजयोः पुत्रयोरौरसेऽन्तर्भावं मत्वा पूर्वोक्ता त्रयोदशसंख्या, औरसाद्बहिर्भावं विवक्षित्वा पञ्चदशसंख्योपपादनीया । अत्रामुक एव त्रयोदशोऽमुक एव चतुर्दश इत्येवं क्रमे न निर्भरः, किंतु पुत्राणां त्रयोदशसंख्या पञ्चदशसंख्या च स्मृतिषु वर्णितेत्यत्र तात्पर्यम् । एवं च तत्रापि वस्तुतो द्वादशैव पुत्रास्तात्पर्यभूता इत्यर्थः । एवंरीत्या तत्तत्संख्योपपत्तेर्नास्ति द्वादशसंख्याविरोधः । ततश्चाकृतस्यैव भ्रातृपुत्रस्य यद्यपुत्रपितृव्यनिरूपितपुत्रत्वं स्यात्तर्हि त्रयोदशपुत्रापत्तेः सुस्थिरो द्वादशसंख्याविरोध इति भावः । किंचापुत्रदायग्रहणाधिकारे पत्नी दुहितरश्चेत्यत्र पञ्चमस्थाने भ्रातृसुतनिवेशनस्य सुतरामनुपपत्तिर्यद्यकृतस्यैव तस्य पुत्रत्वं स्यादिति प्रदर्शयन्नाह—**अयमभिसंधिरिति** । एवं पिण्डदानाधिकारिपरिगणनक्रमे भ्रातृसंततेः प्रपौत्रानन्तरं पाठस्याप्यसंगतिर्बोध्या ।

औरसादिद्वादशपुत्राणां स्वरूपं मनुस्मृतौ अ० ९ श्लो० १६६ प्रभृतिभिः १७८ पर्यन्तैरुक्तम् । तच्च विष्णुप्रोक्तानन्तर्यक्रमानुसारेण व्याख्यायते । तत्र स्वक्षेत्रे संस्कृतायां स्वयमुत्पादित औरसः पुत्रः प्रथमः । अत्रौरसपुत्रे विशेषणचतुष्टयमुक्तं भवति । तद्यथा—उत्पादीति णिजन्तधातोरुत्पत्त्यनुकूलो व्यापारोऽर्थः । स च व्यापारोऽर्थान्मिथुनकर्मादि । तादृशव्यापारजन्योत्पत्त्याश्रयत्वमित्येकं विशेषणम् । द्वितीयमुत्पत्त्यनुकूलव्यापारस्य कर्तृत्वसंबन्धेन स्वयमिति विशेषणम् । स्वकर्तृकव्यापारेणेत्यर्थः । तृतीयं त्वधिकरणत्वसंबन्धेन स्वक्षेत्रे, इति विशेषणम् । तस्य च संस्कृतायामिति विशेषणम् । चतुर्थम् । अत्र द्वितीयं चतुर्थं च परम्परया पुत्रविशेषणं बोध्यम् । तत्र संस्कृते स्वक्षेत्र उत्पादितः, एतावदेव स्वयम्शब्दं विहायौरसलक्षणे कृते वाग्दत्तायां कन्यायां पितृवेश्मनि तिष्ठन्त्यां यः पुत्रो जायते स तादृशकन्यापरिणेतुः कानीनः पुत्रो, न त्वौरसः । यद्यौरसपुत्रलक्षणे स्वयम्शब्दो न स्यात्तदा पूर्वोक्तकानीनेऽतिव्याप्तिः स्यात् । वाग्दानसंस्कारेण संस्कृतत्वात्परिणेतुः स्वक्षेत्रत्वात्तादृशक्षेत्र उत्पादनाच्च । तत्परिहाराय स्वयमित्युक्तम् । तथा च संस्कृतस्वक्षेत्र उत्पन्नत्वेऽपि स्वयमुत्पादनाभावान्नातिव्याप्तिरित्यर्थः । देहलीदीपन्यायेन मध्यमणिन्यायेन वा स्वयमित्यस्य संस्कृतायामित्यत्रापि संबन्धः । तेन कुण्डगोलकयोर्नातिव्याप्तिः । इतरथा तयोर्मनसा वृतेन गूढपतिना स्वयमुत्पादितत्वात्तयोर्मातुः संस्कृतक्षेत्रत्वाच्चातिप्रसङ्गः स्यात् । स्वयं संस्कृतायामित्युक्तौ तु प्रसिद्धपतिना संस्कृतत्वेऽपि गूढपतिना संस्कृतत्वाभावान्नातिव्याप्तिः । एवमपि 'या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया । उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते' इत्युक्ते पौनर्भवेऽतिप्रसङ्गः स्यात् । तस्य स्वसंस्कृते स्वक्षेत्रे स्वयमुत्पादितत्वात् । एतद्दोषपरिहाराय स्वमात्रसंस्कृतायामिति वक्तव्यम् । ततश्च पौनर्भवमातुः स्वसंस्कृतत्वेऽपि प्राथमिकेनापि भर्त्रा संस्कृतत्वेन स्वमात्रसंस्कृतत्वाभावान्न दोषः । एवं च स्वक्षेत्रे धर्मपत्न्यां स्वमात्रसंस्कृतायां स्वयमुत्पादितः पुत्र औरस इत्यौरसलक्षणं संपद्यते । वाग्दानसंस्कारोत्तरमेव यस्याः पतिर्मृतस्तादृश्यां प्रमीतपतिकायां पण्डस्य—प्रसवविरोधिव्याधियुक्तस्य वा भार्यायां घृताभ्यक्तत्वादिधर्मेण गुरुनियुक्तायां पित्रादिभिर्नियुक्तेनैव देवरेण ज्येष्ठेन कनिष्ठेन तस्यासंभवे सपिण्डेन तस्याप्यसंभवे सगोत्रेण तस्याप्यसंभव इतरेण द्विजेन वोत्पादितः प्रमीतादेः क्षेत्रजः पुत्रो द्वितीयः । स्वमात्रसंस्कृते स्वक्षेत्र उत्पादितेऽपि स्वयमुत्पादनाभावेनास्यौरसापेक्षया द्वितीयत्वम् । कानीनापेक्षयाऽपीदं स्वयम्शब्दस्य प्रयोजनं समीचीनं भवति । एवं गूढजपुत्रोऽपि स्वयम्शब्दस्य प्रयोजनं

भवितुमर्हति । 'औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः । क्षेत्रजः क्षेत्रजातस्तु' इति याज्ञवल्क्यीये ( या० स्मृ० २ । १२८ ) । यत्क्षेत्रजस्य तृतीयस्थाननिवेशनं तद्वाग्दानरहितायां नियुक्तायां जातपुत्राभिप्रायेण बोध्यम् । तत्र स्वयंसंस्काराभावात्स्वयमुत्पादनाभावाच्च कक्षाद्वयेन व्यवधानाद्विप्रकृष्टत्वादौरसापेक्षया तृतीयत्वं युक्तमेव । अत्रायं विशेषः—सोऽयं क्षेत्रजः पुत्रो यदत्रापत्यं भविष्यति तदावयोरिति नियमबन्धेन बीजिक्षेत्रिणोरुभयोरपि पुत्रो भवति । तदुक्तं मनुना—क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च' ( म० स्मृ० ९ । ५३ ) इति । अस्यार्थः--यदत्रापत्यमुत्पत्स्यते तदावयोः समानमेवेति नियमस्य यत्क्षेत्रं क्षेत्रस्वामिना बीजवापनार्थं बीजिने दीयते तत्र क्षेत्र उत्पन्नस्यापत्यस्य लोके बीजिक्षेत्रिणावुभावपि भागिनौ दृष्टाविति । यत्तु–' औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ' इति याज्ञवल्क्यीये पुत्रिकापुत्रस्य यद्द्वितीयस्थाने परिगणनं तत् ' द्वितीयः पुत्रिकैव ' इति वसिष्ठोक्तपुत्रिकारूपपुत्राभिप्रायेण । तस्याः स्वस्मादुत्पन्नत्वेन परोत्पन्नक्षेत्रजापेक्षयोत्कृष्टत्वात् । ' अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ' इत्यभिसंधिना दत्तायां कन्यायां जातः पुत्रिकापुत्रस्तृतीयः । स्वक्षेत्रे जातत्वाभावेन स्वयमुत्पादितत्वाभावेन च विशेषणद्वयराहित्यात्कक्षाद्वयेन व्यवधानादस्यौरसापेक्षया तृतीयत्वम् । पुनर्भ्वां जातः पौनर्भवश्चतुर्थः । प्रथममेकस्य जाया भूत्वाऽपरस्य पुनर्या जाया भवति सा पुनर्भूः । तदुक्तम्—कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा ' इति । अत्र स्वमात्रक्षेत्रत्वस्वमात्रसंस्कृतत्वधर्मपत्नीत्वानां त्रयाणां विशेषणानां राहित्येन कक्षात्रयेण व्यवधानादस्यौरसापेक्षया चतुर्थत्वम् । कन्यायां जातः पुत्रः कानीनः स पञ्चमः । अत्र स्वक्षेत्रत्वधर्मपत्नीत्वादिविशेषणचतुष्टयराहित्यात्कक्षाचतुष्टयेन व्यवधानादस्यौरसापेक्षया पञ्चमत्वं बोध्यम् । अत्रायं विशेषः–सा कन्या केवलवाग्दानसंस्कारसंस्कृता चेत्तादृशकन्यापरिणेतुः स कानीनः पुत्रः । सवर्था संस्काररहिता चेत्स कानीनः पुत्रो मातामहसुतो बोध्य इति । पत्न्यामन्येन प्रच्छन्नोऽनियोगेऽपि चौर्यरताहितगर्भमूलक उत्पन्नः पुत्रो गूढजः स षष्ठः । पूर्वोक्तस्वक्षेत्रत्वादिभिश्चतसृभिः कक्ष्याभिः प्रच्छन्नोत्पन्नत्वरूपया पञ्चम्या च कक्ष्यया व्यवधानादस्यौरसापेक्षया षष्ठत्वम् । सहोढः सप्तमः । सह भार्यया य उत्पद्यते, या गर्भिणी परिणीयते तस्याः स गर्भ इति यावत् । पूर्वोक्तपञ्चकक्ष्याभिर्ज्ञाताज्ञातत्वरूपया च षष्ठ्या व्यवधानादस्यौरसापेक्षया सप्तमत्वम् । दत्तकश्चाष्टमः । तत्रोत्पादकयोर्मातापित्रोः सर्वथा परकीयत्वेन सप्तमापेक्षयाऽपि विदूरत्वादस्याष्टमत्वम् । जनकमातापितृभ्यां धर्मं दत्त्वा

ननु इदमप्रयोजकं यत्पिण्डरिक्थाभावादपुत्रत्वमिति।

अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः।
पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः॥

इति विष्णुना कानीनादीनां पुत्रत्वेऽपि पिण्डरिक्थाभावदर्शनात्। तथा पिण्डरिक्थाभावेऽप्यकृतस्यैव भ्रातृव्यस्यास्तु पुत्रत्वं का क्षतिरिति चेत्। मैवम्। पिण्डदोंऽशहरश्चैषामित्यनेन पिण्डरिक्थभागित्वं हि पुत्रत्वस्य प्रयोजकमुक्तम्। तदभावे क्लीबादेरिव पुत्रत्वस्वरूपसत्तामात्रस्याप्रयोजकत्वात्।

अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा।

---

यः क्रीतः स क्रेतुः क्रीतकः पुत्रः स नवमः। अस्य च दत्तकादपि विप्रकृष्टत्वान्नवमत्वम्। कथमस्य दत्तकाद्विप्रकृष्टत्वमिति चेच्छृणु। मनुस्मृतौ क्रीतकपुत्रलक्षणे 'सदृशोऽसदृशोऽपि वा' इत्युक्तम्। तत्र तव्द्याख्याकर्त्रा कुल्लूकभट्टेन 'क्रेतुर्गुणैस्तुल्यो हीनो न भवेन्न तत्र जातितः सादृश्यवैसादृश्ये' 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' इति याज्ञवल्क्येन सर्वेषामेव पुत्राणां सजातीयत्वाभिधानेन मानवेऽपि क्रीतव्यतिरिक्ताः सर्वे पुत्राः सजातीया बोद्धव्याः' इत्युक्तत्वात्क्रीतकस्य विजातीयस्यापि संभवाद्विजातीयस्य च देवपितृकर्मायोग्यत्वेन दत्तकापेक्षयाऽस्य विदूरत्वं बोध्यम्। स्वयं प्रार्थनं विनैव पुत्रत्वेनाऽऽत्मानं ददाति यो मातापितृविहीनस्ताभ्यां परित्यक्तो वा स प्रतिग्रहीतुः स्वयंदत्तः पुत्रो दशमः। स्वयंदत्ते प्रतिग्रहीतृव्यापाराभावात् 'अपुत्रेणैव कर्तव्यः' इत्युक्तविधिविषयत्वाभावेनास्य क्रीतकापेक्षया विदूरत्वं बोध्यम्। अपविद्धस्त्वेकादशः। मातापितृभ्यां भरणासामर्थ्येन परित्यक्तोऽन्येन पुत्रत्वेन गृहीतः सोऽपविद्धः। त्यक्तस्य स्वयमेव ग्रहणात्स्वयंदत्तापेक्षयाऽप्यस्य विदूरत्वम्। यत्र क्वचनोत्पादितो द्वादशः। सवर्णायामसवर्णायां स्वकीयायां परकीयायामूढायामनूढायां वाऽक्षतायां क्षतायां वा येनोत्पादितः सः। अस्योत्पत्तौ कीदृशस्यापि नियमविशेषस्याभावादपविद्धादपि विदूरत्वम्। मनुस्मृतौ त्वत्र स्थाने पारशव उक्तः। तत्स्वरूपं तत्रैव द्रष्टव्यम्।

ननु यदुच्यते पिण्डरिक्थाभावादपुत्रत्वमिति तदप्रयोजकमन्वयव्यतिरेकानुविधायकं न भवति विष्णुना कानीनादीनां पुत्रत्वेऽपि पिण्डरिक्थाभावस्योक्तत्वेन व्यभिचारादित्याह—**अप्रशस्तास्त्विति**। एवं च भ्रातृपुत्रस्य पिण्डरिक्थाभावेऽप्यकृतस्यैवापुत्रापितृव्यपुत्रत्वमास्त्विति चेन्नैतत्समञ्जसम्। यतो याज्ञवल्क्येन पिण्डदोंऽशहरश्चैषामित्युक्तवता पुत्रत्वप्राप्तौ पिण्डरिक्थभागित्वस्य हेतुत्वेन निर्दिष्टत्वात्। तदभावे पण्डादेरिव पुत्रत्वस्य केवलं स्वरूपसतोऽकिंचित्करत्वात्। किंचापुत्रेणैव

इति विधिप्रत्ययश्रवणेनाकृतस्य पुत्रत्वायोगाच्च । न च भ्रातृव्येतराविषयोऽयं विधिरिति वाच्यम् । संकोचे प्रमाणाभावात् । प्रत्युतैकमेव करिष्याव इत्युपक्रम्य—

तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम् ।

इति वेतालीयभैरवपुत्रपुत्रीकरणलिङ्गविरोधाच्च । किंच यत्र दशानां सोदराणां मध्ये पञ्च प्रत्येकं दश पुत्राः पञ्च चात्यन्तमपुत्रास्तत्र पञ्चानामप्यपुत्राणां प्रत्येकं पञ्चाशत्पुत्रत्वापत्तिः पञ्चाशतश्च पुत्राणां प्रत्येकं दशपितृकतापत्तिरित्याद्यनेकोपप्लवः । न चेष्टापत्तिः । पुत्रप्रतिनिधिः कार्य इत्युपादेयगतैकत्वविवक्षणात् । एकश्चेत्पुत्रवान्भवेत्, सर्वे ते तेन पुत्रिणेत्यत्र पुत्रपुत्रवतोरुभयोरपि प्रत्येकं श्रुतैकत्वविरोधाच्च ।

---

कर्तव्य इति तव्यस्य विधिप्रत्ययस्य श्रवणादपरिगृहीतस्य सर्वथा पुत्रत्वप्राप्तेरत्यन्तासंभवाच्च । कर्तव्य इत्यत्रत्यविधिप्रत्ययविषये शङ्कते—**न च भ्रातृव्येतरेति** । समाधत्ते—**संकोच इति** । वेतालभैरवौ द्वावावामेकमेव पुत्रं करिष्याव इति नन्दिनमुक्तवन्ताविति ' एकमेव करिष्यावः ' इति वचनस्यार्थः । **तमेव तनयं चक्र इति** । अत्र चक्र इत्यनेन प्रतिग्रहीतृव्यापारस्य स्पष्टमभिहितत्वेनापरिगृहीतस्य पुत्रत्वप्रतिपादनं शास्त्रविरुद्धमित्यर्थः । परिग्रहविध्यनुष्ठानमन्तरैव भ्रातृपुत्रस्यापुत्रपितृव्यपुत्रत्वाङ्गीकर्तारमुपहासितुमतिप्रसङ्गं प्रदर्शयन्नाह—**किंच यत्र दशानामिति** । **पञ्चाशत्पुत्रत्वापत्तिरिति** । पञ्चाशत्पुत्रा येषां दशानां पुत्रवदपुत्रवत्सोदराणां तेषां भावस्तत्त्वमिति विग्रहः । दशानां सोदराणां मध्ये पञ्च प्रत्येकं दशसंख्याकपुत्रवन्तः, पञ्च चापरेऽत्यन्तं पुत्राभाववन्तः । एवं स्थिते यद्यकृतस्यैव भ्रातृपुत्रस्यापुत्रपितृव्यनिरूपितपुत्रत्वे गृह्यमाणे ये पुत्रवन्तस्तेषां प्रत्येकं दशसंख्याकपुत्रवत्त्वं समवस्थितमेव । युक्तं च तत् । परंतु येषां सुतरां पुत्रो नास्ति तेषां मध्ये प्रत्येकमनायासतः पञ्चाशत्संख्याकपुत्रवत्त्वं पञ्चाशतश्च पुत्राणां मध्ये प्रत्येकमुपरि दशपितृनियन्त्रणाङ्कुशोऽसह्य आरोपित इतीयमनेकाऽतितरामनुचिताऽऽपत्तिरिति महानद्भुतस्ते शास्त्रीयतत्त्वोन्नयनप्रकार इति तमुपहसतीत्यर्थः ।

न चेयं पञ्चाशत्पुत्रता दशपितृकता चेष्टापत्तिः कर्तुं शक्येत्याह—**एकत्वविवक्षणादिति** । अयं भावः—' कर्तव्यः पुत्रप्रतिनिधिः ' इत्यत्र पिण्डोदकक्रियाः फलम् । पुत्रप्रतिनिधिस्तत्साधनम् । उद्देश्यत्वमनुवाद्यत्वं मुख्यत्वं चेत्येकं त्रिकम् । उपादेयत्वं विधेयत्वं गुणत्वं चेत्यपरं त्रिकम् । उद्देश्यत्वादयस्त्रयः पिण्डोदकक्रियारूपफलनिष्ठा धर्माः । उपादेयत्वादयस्त्रयः साधनभूतपुत्रप्रतिनिधिनिष्ठा धर्माः । पिण्डोदकक्रियारूपं फलमुद्दिश्य पुत्रप्रतिनिधिरुपादीयते । फलमनूद्य पुत्रप्रतिनिधिर्विधीयते । फलं प्रधानं पुत्रप्रतिनिधिरुपसर्जनम्, ततश्च पुत्रप्रतिनिधिना पिण्डोदकक्रिया भाव-

न च—

स्वपुत्रैर्भ्रातृपुत्रैश्च पुत्रवन्तो हि स्वर्गताः ।

इत्यत्र भ्रातृपुत्राणां बहुत्वश्रवणाद्बहवोऽपि भ्रातृपुत्रा अकृता एवैकस्य पुत्रा भवेयुरिति वाच्यम् । तस्य लोकसिद्धबहुत्वानुवादकार्थवादगतत्वेनाविवक्षितत्वात् । अस्मत्पक्षे त्वेकेनैव प्रकृतनित्यविधिसिद्धावनेकोपादानस्य वैयर्थ्याद्-

---

येदित्यर्थपर्यवसानात् पशुना यजेतेत्यत्रोपादेयपशुगतैकत्वपुंस्त्वयोरिवोपादेयपुत्रप्रातिनिधिगतैकत्वस्य विवक्षितत्वेनैकः पुत्रप्रतिनिधिः कर्तव्य इत्यर्थात् । तथा पुत्रवान्, तेन पुत्रेणेत्यत्र पुत्रवच्छब्दोत्तरं श्रुतस्य पुत्रपदोत्तरं श्रुतस्य चैकत्वस्य विवक्षितत्वेन चैकपुत्रतैकपितृकता चैव शास्त्रविहितेति तद्विरुद्धायाः पञ्चाशत्पुत्रताया दशपितृकतायाश्चाशास्त्रीयत्वेन तयोर्नैष्टापत्तित्वं शङ्कितुमपि शक्यमित्यर्थः ।

ननु स्वपुत्रैर्भ्रातृपुत्रैश्चेति स्मृतिवचने भ्रातृपुत्रैः पुत्रवतां स्वर्गतिः प्रतिपादनाद्बहवो भ्रातृपुत्रा अपरिगृहीता एवैकस्य पुत्रतां यान्तीति कल्प्यत इत्याशङ्क्य तादृशकल्पनामूलस्य भ्रातृपुत्रगतबहुत्वस्याविवक्षितत्वेन तादृशकल्पनां परिहरन्नाह—**तस्य लोकसिद्धेति** । अयमाशयः—यथा बहुभिः स्वपुत्रैः स्वयं पुत्रवांस्तथा बहुभिर्भ्रातृपुत्रैरपुत्रपितृव्यः पुत्रवानिति भ्रातृपुत्रैरिति बहुवचनादवगम्यते । न च बहवो भ्रातृपुत्रा एकस्यापुत्रपितृव्यस्य पुत्रा भवितुमर्हन्ति । पुत्रप्रतिनिधिः कार्य इत्यत्रोपादेयपुत्रप्रतिनिधिगतैकत्वस्य विवक्षणात् । ततश्च भ्रातृपुत्रैरिति बहुवचनबलादन्यथानुपपत्त्याऽकृतानामेव बहूनां भ्रातृपुत्राणां पितृव्यस्यैकस्य पुत्रत्वं भवतीति स्वीकार्यमिति शङ्ककाशयः ।

सिद्धान्तिनस्त्वनेनापुत्रेण भ्रातृपुत्रः परिगृहीतः । परेणापि भ्रातृपुत्र एव गृहीत एवमन्येन तदन्येनापि भ्रातृपुत्र एव गृहीत इत्येवं लोके बहुभिरपुत्रैर्भ्रातृपुत्र एव परिगृहीतो दृश्यते तदनुसारेण स्मृतौ भ्रातृपुत्रैरिति बहुवचनं कृतम् । एवमनया रीत्या बहुवचनोपपत्तौ न तद्बलादकृता एव बहवो भ्रातृपुत्राः पितृव्यस्यैकस्य पुत्रतां यान्तीति कल्पयितुं युज्यत इति भावः । तदाह—**तस्य लोकसिद्धेति** । तस्य भ्रातृपुत्रैरिति बहुवचनस्य लोके सिद्धत्वेन दृष्टं यत् प्रतिनिधीकृतभ्रातृपुत्रगतबहुत्वं तदनुवादकत्वेनाविवक्षणादकृतानां बहूनां भ्रातृपुत्राणां पितृव्यपुत्रत्वं भवतीत्यपूर्वार्थबोधकत्वेन विवक्षितत्वाभावादित्याशयः । यदि बहुवचनमनुपपन्नं भवेत्तदैव विलक्षणतादृशार्थोन्नयने समर्थं भवेत् । न च तदनुपपन्नम् । उपपत्तिप्रकारस्तु दर्शित एव । अथैकेन पितृव्येणानेके भ्रातृपुत्राः पुत्रत्वेन परिगृहीता इत्येवं लोके न क्वापि क्वचिदपि दृष्टचरं येन त्वदुक्तार्थानुवादकं बहुवचनमिष्येतेत्याशयेनाऽऽह—**अस्मत्पक्षे त्विति** । सिद्धान्तपक्ष इत्यर्थः । अपुत्रपितृव्येणैकस्मिन् भ्रातृपुत्रे पुत्रप्र-

शास्त्रीयत्वाच्च। तस्मात्संनिहितसगोत्रसपिण्डेषु भ्रातृपुत्र एव पुत्रीकार्य इति स्थितम्। ततश्च कृतत्वेन प्रथमं धनपिण्डभागित्वमकृतत्वेन च स्वस्वस्थान इति। विष्णुवचनं तु पूर्वपूर्वपरिगणितपुत्रसद्भावविषयमिति न क्वापि विरोधः।

नन्वेवं—

सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्।
सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत्॥

इत्यत्राप्यकृतस्य पुत्रत्वं न स्यात्। न चेष्टापत्तिः। आचारविरोधात्।

---

तिनिधित्वेन परिगृहीते तेनैव पुत्रकार्यस्य पिण्डोदकक्रियादेः फलस्य निर्वाहाद्द्विती- यादिभ्रातृपुत्रोपादाने नतरां प्रवृत्तिः संभवति। विफलत्वात्। विधेयपुत्रप्रतिनिधिगतैकत्वस्य विवक्षणेनैकः पुत्रप्रतिनिधिः कर्तव्य इत्यर्थपर्यवसानेनानेकोपादाने प्रवृत्तेरुच्छास्त्रीयत्वाच्च न पञ्चाशत्पुत्रता दशपितृकता चेष्टेत्यर्थः। एवं च भ्रातृणामेकजातानामिति वचनस्य भ्रातृपुत्रस्य पुत्रप्रतिनिधीकरणसंभवे तं परित्यज्यान्ये न प्रथमं पुत्रीकर्तव्या इत्यत्र तात्पर्यं नत्वकृतस्यैव तस्य पुत्रत्वप्रतिपादन इति सिद्धम्। ततश्च भ्रातृपुत्रे विधिना परिगृहीते सति तस्य कृतत्वेन–विधिना परिगृहीतत्वरूपेण प्रथमतो धनपिण्डभागित्वं भवति। अकृते तु–विधिनाऽपरिगृहीते तु न तस्य प्रथमं धनपिण्डहरत्वं, किंतु विधिनाऽपरिगृहीतत्वरूपेण 'पत्नी दुहितरश्चैव' इति स्मृत्युक्तक्रमेण पञ्चमकक्षायां धनपिण्डभागित्वं भवति। अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः। पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः॥ इति विष्णुवचनं तु न कानीनादीनां सर्वथा धनपिण्डभागित्वनिषेधकं, किंत्वौरसक्षेत्रजपुत्रिकापुत्रेत्येवं क्रमेण विष्णुपरिगणितौरसक्षेत्रजादिपूर्वपूर्वपुत्राणां सद्भावे तेषां धनपिण्डहरत्वाभावबोधकम्। पूर्वपूर्वपुत्राभावे तु कानीनादीनामपि धनपिण्डहरत्वमस्त्येव। 'पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः' इति याज्ञवल्क्योक्तेरिति बोध्यमिति न कोऽपि विरोध इति भावः।

ननु यदि भ्रातृणामिति वचनं नाकृतस्य भ्रातृपुत्रस्य पुत्रत्वप्रतिपादकं तर्हि तत्तुल्यन्यायात् 'सर्वासामेकपत्नीनाम्' इतीदमपि नाकृतस्य सपत्नीपुत्रस्य पुत्रत्वं प्रतिपादयेदिति शङ्कते—**नन्वेवं सर्वासामिति**। ननु सपत्नीपुत्रस्याकृतस्य पुत्रत्वं नैवेष्टमिति वदन्तं प्रत्यादिशन्नाह—**आचारेति**। सपत्नीपुत्रस्याकृतस्यैव पुत्रत्वं मन्यन्ते लौकिकाः। किंच 'पितृपत्न्यः सर्वा मातरः' इति वचनेन पितृपत्नीत्वमात्रमुपजीव्य जननीव्यतिरिक्ताया अपि पितृपत्न्या मातृत्वातिदेशस्योक्तत्वान्मातृत्वस्य निरूपितार्थत्वान्निरूपितस्य च निरूपकसापेक्षत्वात्सपत्नीपुत्रं प्रतीति लभ्यते।

पितृपत्न्यः सर्वा मातर इति पितृपत्नीत्वमात्रनिमित्तकमातृत्वव्यपदेशविरोधाच्चेति चेत् । मैवम् । सपत्नीपुत्रस्य साक्षाद्भर्त्रवयवारब्धतयाऽकृतस्यापि पुत्रत्वसंभवात् ।

---

ततश्च सपत्नीपुत्रनिरूपितं मातृत्वं जननीव्यतिरिक्तपितृपत्न्यां यदि भवति तदा तादृशसापत्नमातृनिरूपितं पुत्रत्वं सपत्नीपुत्रे नास्तीति सुतरां वक्तुमशक्यम् । मातृत्वस्य पुत्रत्वनिरूपितत्वेन तद्विना तस्याऽऽत्मलाभस्यैवाभावात् । तथा च सपत्नीपुत्रे सापत्नमातृनिरूपितं पुत्रत्वमयत्नसिद्धं परिग्रहीतव्यं भवति । एवं च सपत्नीपुत्रस्याकृतस्य पुत्रत्वं नास्तीति वदनमाचारविरुद्धं शास्त्रविरुद्धं चेत्यर्थः । बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः । एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥ इति वदन्बृहस्पतिरप्यकृतस्यापि सपत्नीपुत्रस्य पुत्रत्वेऽनुकूल इति बोध्यम् ।

ननु भ्रातॄणामेकजातानाम्० सर्वासामेकपत्नीनाम्० इतिवचनद्वये समाने स्थिते तत्र भ्रातृपुत्रस्य विधिना परिगृहीतस्यैव पुत्रत्वं सपत्नीपुत्रस्य त्वपरिगृहीतस्यापि पुत्रत्वमिति कुतो निश्चीयते तदाह—**सपत्नीपुत्रस्येति** । सपत्नीपुत्रस्याकृतस्यापि पुत्रत्वसंभवादिति योजना । संभवमेव प्रदर्शयन्नाह—**साक्षाद्भर्त्रवयवेति** । ‘ आत्मा वै पुत्रनामाऽसि ’ इति, ‘ एतत् षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतोऽस्थिस्नायुमज्जानस्त्वङ्मांसरुधिराणि ’ इति गर्भोपनिषदि श्रुतेश्च सपत्नीपुत्रशरीरस्य स्वभर्त्रवयवैर्निष्पन्नत्वेन यथा युक्तिसिद्धं स्वस्वभर्तृनिरूपितं पुत्रत्वं तथैव स्वभर्तृपत्न्यन्तरनिरूपितमपि पुत्रत्वं सपत्नीपुत्रे युक्तिसिद्धमित्यर्थः । अत्रोदाहरणम्—यथा कस्यचिदेकस्य पुरुषस्य द्वे भार्ये आस्ताम् । ते च भार्ये परस्परं सपत्न्यौ । तयोरेका सर्वथा संतानरहिता । अपरा तु ससंताना । पुत्रवतीत्यर्थः । अत्र स्वपदेन ससंताना सपत्नी गृह्यते । तथा च स्वभर्त्रवयवारब्धत्वेन हेतुना यथा स्वपुत्रे स्वनिरूपितं पुत्रत्वं भवति तथा तेनैव हेतुना स्वपुत्रे सपत्न्यन्तरनिरूपितमपि पुत्रत्वं युक्तिसिद्धं भवतीत्याशयः ।

ननु स्वपुत्रे यत्स्वनिरूपितं पुत्रत्वमस्ति न तत्केवलं स्वभर्त्रवयवसंबन्धादपि तु स्वावयवसंबन्धादेव । ‘ त्रीणि मातृतः ’ इति पूर्वोक्तश्रुतेः । ततश्च स्वपुत्रस्य स्वभर्त्रवयवारब्धत्वेऽपि सपत्न्यन्तरावयवारब्धत्वाभावेन कथं सपत्न्यन्तरनिरूपितं स्वपुत्रे पुत्रत्वं वक्तुमर्हमिति चेदुच्यते । पुत्रत्वं हि मातापित्रवयवसंबन्धाद्विधिबलाच्च जायते । तत्प्रयोजकोऽवयवसंबन्धश्च द्वेधा । मुख्यो जघन्यश्च । यो हि मातापित्रेतदुभयीयावयवानां साक्षात्संबन्धः स मुख्यः । स चैकविध एव । तद्भिन्नो जघन्यः । अयमेव विकलावयवसंबन्ध इत्युच्यते । स चायमवयववैकल्यस्य त्रिविध-

त्वात्त्रिविधः । उभयोः साक्षात्संबन्धेऽपि पितुरल्पावयवसंबन्धः । उभयोर्मध्य एकतरस्यैवावयवसंबन्धः । उभयोरपि परम्परयाऽवयवसंबन्धश्चेति । संबन्धे मुख्यत्वं च मात्रवयवापेक्षया पित्रवयवाधिक्यलक्षणम् । जघन्यत्वं चावयववैकल्यस्वरूपम् । तत्र सर्वाद्योदाहरणम्—औरसः पुत्रः । ‘ एतत्षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतोऽस्थिस्नायुमज्जानस्त्वङ्मांसरुधिराणि ’ इति गर्भोपनिषदि श्रुतेरौरसपुत्रे मातापित्रवयवानां साक्षात्तस्य पुरुषत्वेन पितुश्चाधिक्येन संबन्धः । त्रिविधद्वितीयाद्योदाहरणम्—पुत्रिकापुत्रः । स च ‘ द्वितीयः पुत्रिकैव ’ इति वसिष्ठोक्तः पुत्रिकारूपः पुत्रः । औरस एकः, द्वितीयः पुत्रः पुत्रिकैवेति तदर्थात् । तथा चात्र पुत्रिकैव पुत्र इति विग्रहो न तु पुत्रिकायाः पुत्र इति । पुत्रिकायां मातापित्रवयवानां साक्षात्संबन्धेऽपि तस्याः स्त्रीत्वेन पितुः पुंसोऽवयवानामल्पत्वेन पितुरल्पावयवसंबन्धः । द्वितीयद्वितीयोदाहरणम्—सपत्नीपुत्रः । स च सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥ इति सपत्न्यन्तरपुत्रत्वेन मनुनोक्तः । अत्र सपत्नीपुत्रे सपत्न्यन्तरस्य मातुः शरीरावयवसंबन्धः कथमपि नास्ति, किंतु तद्भर्तृशरीरावयवानामेव संबन्ध इत्येकतरस्यैव संबन्धः । एवं क्षेत्रजकानीनसहोढगूढजेषु पुत्रेषु मातुरेवावयवानां संबन्धो न तु पितुरवयवानामिति तेऽपि द्वितीयद्वितीयोदाहरणं भवन्ति । सर्वान्त्योदाहरणं यथा—दुहितुः पुत्रः । स च ‘ अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ’ इत्यभिसंधिना दत्तायां दुहितरि परिणेतुः सकाशाज्जात एव विवक्षितः । अत्र मातामहीमातामहयोः शरीरावयवानां साक्षात्संबन्धो दुहितरि । तस्याश्च स्वपुत्र इति कृत्वा पूर्वोक्तदुहितृपुत्रे दुहितृद्वारेण परम्परया मातामहीमातामहयोः शरीरावयवानां संबन्ध इति । तत्र यत्र मुख्योऽवयवसंबन्धस्तत्र मुख्यं पुत्रत्वम् । यत्र च विकलावयवसंबन्धापरपर्यायो जघन्यः संबन्धस्तत्र न मुख्यं पुत्रत्वं, किंतु प्रतिनिधिपुत्रत्वम् । तत्रापि वैकल्येऽप्यवयवसंबन्धसत्त्वान्मुख्यं प्रतिनिधित्वम् । अयमेव मुख्यप्रतिनिधिभूतः पुत्रः। यत्र तु मातापित्रवयवानां न कथमपि संबन्धस्तत्र प्रतिनिधित्वमपि न मुख्यं किंत्वारोपितत्वाद्गौणम् । यथा—विधिना परिगृहीतो भ्रातृपुत्रः । अत्र परिगृहीतृपितृव्यतत्पत्न्योरुभयोरपि शरीरावयवानामीषदपि संबन्धाभावेन वचनबलादारोपितं प्रतिनिधिपुत्रत्वम् । अयमेव च गौणप्रतिनिधिभूतः पुत्र इत्युच्यते । एवं च सपत्नीपुत्रे परिग्रहमन्तरेणैव यः पुत्रत्वसंभव उक्तः स न मुख्यपुत्रत्वाभिप्रायेण, किंतु मुख्यप्रतिनिधिपुत्रत्वाभिप्रायेणेति बोध्यम् ।

ननु यदि सपत्नीपुत्रस्याकृतस्यापि पुत्रत्वमुच्यते तर्हि ‘ सर्वासामेकपत्नी-

वचनं तु नियमार्थमित्युक्तमेव । भ्रातृव्ये तु दंपत्योरन्यतरस्याप्यवयवसंबन्धाभावान्नाकृतस्य पुत्रत्वमिति । यत्तु बृहस्पतिना—

यद्येकजाता बहवो भ्रातरस्तु सहोदराः ।
एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः ॥
बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।
एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥

इति भ्रातृव्यधर्मातिदेशः सापत्नेऽभिहितः सोऽपि प्रतिनिधित्वाभिप्रायेण न पुत्रीकरणा-

---

नाम्० ' इति वचनं किमर्थमिति चेन्नियमार्थमिति ब्रूमः । नियमश्चेत्थम् । सपत्नीपुत्रसत्त्वे तेनैव पुत्रेणान्या सपत्नी पुत्रवतीत्यतस्तयाऽन्यः पुत्रो न परिग्रहीतव्य इति । भ्रातुष्पुत्रे तु दंपत्योः पितृव्यतत्पत्न्योरेकतरस्यापि पितृव्यस्य तत्पत्न्याश्च वाऽवयवान्वयाभावेन नाकृतस्य पुत्रत्वं किंतु परिगृहीतस्यैव पुत्रत्वं भवतीति बोध्यम् ।

ननु सपत्नीपुत्रस्यापरिगृहीतस्यापि यत्पुत्रत्वमुक्तं तदयुक्तमिति भाति । यतो बृहस्पतिना—' यद्येकजाता बहवो भ्रातरः स्युः सहोदराः । एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः ' इत्युक्त्वा ' बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः । एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ' इत्युक्तम् । अस्यायं भावः—सहोदरभ्रातॄणां मध्ये यद्येकोऽपि पुत्रवान्भवेत्तदा तेनैव पुत्रेण ते सर्वे सहोदरभ्रातरः पुत्रिणो भवेयुः । एवं सपत्नीनां मध्ये यद्येकाऽपि पुत्रिणी भवेत्तर्हि तत्र ' एष एव विधिः स्मृतः ' पुत्रवदपुत्रवद्भ्रातृविषये यो विधिरुक्तः स एव विधिः पुत्रवदपुत्रवत्सपत्नीविषये द्रष्टव्य इति सपत्नीपुत्रे भ्रातृपुत्रधर्मातिदेश उक्तः । तथा च यथा भ्रातृपुत्रस्य परिग्रहमन्तरेण स्वपुत्रत्वं नास्ति तद्वत्सपत्नीपुत्रस्यापि परिग्रहमन्तरेण सपत्न्यन्तरपुत्रत्वं नास्तीति चेद्ब्रूषे तदप्ययुक्तं तदभिप्रायानवबोधादित्याह—**सोऽपि प्रतिनिधित्वेति** । सोऽपि सपत्नीपुत्रे भ्रातृव्यधर्मातिदेशोऽपि । **प्रतिनिधित्वाभिप्रायेणेति** । यथा भ्रातृपुत्रः पितृव्यस्य न मुख्यः पुत्रः किंतु प्रतिनिधिपुत्रस्तथैव सपत्नीपुत्रोऽपि सपत्न्यन्तरस्य न मुख्यः पुत्रः, किंतु प्रतिनिधिपुत्र इति भ्रातृपुत्रसपत्नीपुत्रयोर्द्वयोरपि प्रतिनिधित्वाविशेषप्रतिपादनाभिप्रायेणेत्यर्थः । सपत्नीपुत्र एकतरावयवसंबन्धसत्त्वाद्युक्तिसिद्धं प्रतिनिधिपुत्रत्वमिति मुख्यं प्रतिनिधित्वं, भ्रातृपुत्रे तु सर्वथाऽवयवसंबन्धाभावेनाऽऽरोपितं प्रतिनिधित्वमित्यन्यत् । **न पुत्रीकरणेति** । यथा भ्रातृपुत्रः पितृव्यतत्पत्न्योः सर्वथा शरीरावयवसंबन्धाभावेन विधिना पुत्रीकर्तव्यो भवति तथा सपत्नीपुत्रोऽपि विधिना पुत्रीकरणीय इत्यभिप्रायेण सप-

भिप्रायेण। भर्त्रवयवारब्धत्वेन पुत्रत्वस्य सिद्धत्वात्। विकलावयवारब्धत्वेन प्रतिनिधित्वेऽपि सिद्धे वचनं नियमार्थमित्युक्तमेव। तदेतत्स्पष्टीकृतं देवस्वामिना-'उभयत्रापि नान्यः प्रतिनिधिः कार्यः' इत्यनेन ग्रन्थेन। विवृतं चैतच्चन्द्रिकायाम्—'उभयत्रापि यद्येकजाता इत्येवं वचनद्वयेऽपि भ्रातृसुते सपत्नीसुते च पुत्रप्रतिनिधितया कथंचित्संभवत्यन्यो न प्रतिनिधिः कार्य इति। विज्ञानेश्वरोऽपि मानवं वचो व्याचष्टे—

---

त्नीपुत्रे भ्रातृव्यधर्मातिदेशो नोक्तः। सपत्नीपुत्रे सपत्न्यतरनिरूपितपुत्रत्वस्य युक्तिसिद्धत्वादित्यर्थः। किंतु यथा भ्रातृपुत्रः पितृव्यस्य प्रतिनिधिपुत्रस्तथा सपत्नीपुत्रोऽपि सपत्न्यन्तरस्य प्रतिनिधिपुत्र एतावतैवाऽऽशयेनोक्त इत्यर्थः।

ननु सपत्नीपुत्रे सपत्न्यन्तरनिरूपितपुत्रत्वं तद्भर्त्रवयवारब्धत्वादेव युक्तिसिद्धं, प्रतिनिधित्वमपि विकलावयवारब्धत्वात्सिद्धम्। ततश्च सर्वासामेकपत्नीनामिति वचनं किमर्थमिति चेत्पृच्छसि तर्हि नियमार्थमेतद्वचनमिति दत्तोत्तरमेतत्। नियमाकारश्चाप्युक्तः। **तदेतदिति**। 'यद्येकजाता०' इति 'बह्वीनामेकपत्नीनाम्०' इति चेत्येवं वचनद्वयं न भ्रातृपुत्रस्य सपत्नीपुत्रस्य च पुत्रत्वप्रतिपादकं, किंतु नियमार्थम्। तदेतद्देवस्वामिना 'उभयत्रापि नान्यः प्रतिनिधिः कार्यः' इति ग्रन्थेन स्पष्टमुक्तमित्यर्थः। देवस्वामिप्रोक्तेऽर्थेऽन्यग्रन्थकारसंमतिं प्रदर्शयन्नाह—**विवृतं चैतदिति**। अत्रैतावान्विशेषः। सपत्नीपुत्रे पुत्रत्वस्य प्रतिनिधित्वस्य च युक्तिसिद्धत्वात्सर्वासामेकपत्नीनामिति वचनं नियमार्थं विशेषार्थाभिधानार्थं, नतु सिद्धार्थानुवादकमित्यर्थः। विशेषार्थाभिधानं चैवम्—सपत्नीपुत्रसत्त्वे सपत्न्यन्तरेणान्यः पुत्रो न परिग्रहीतव्यः। अकृतेनैव तेन पुत्रेण सपत्न्यन्तरस्य श्राद्धपिण्डोदकादिक्रियाया अलोकतापरिहारस्य च निर्वोढुं शक्यत्वादिति। न च भ्रातृपुत्रे भ्रात्रन्तरनिरूपितं पुत्रत्वं प्रतिनिधित्वं वा न किमपि युक्तिसिद्धम्। ततश्च भ्रातृणामेकजातानामिति वचनं भ्रातृपुत्रस्याकृतस्यैव पुत्रत्वप्रतिपादकं भवितुं युक्तमिति वाच्यम्। तथा सति त्रयोदशपुत्रापत्त्या 'पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः' इति मनुनोक्तपुत्रनिष्ठद्वादशसंख्याविरोधापत्तेः। पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः॥ इति याज्ञवल्क्यवचने द्वादशविधपुत्राभावेऽपुत्रधनाधिकारिक्रमनिरूपके भ्रातृपुत्राणां भ्रात्रनन्तरं निवेशानुपपत्तेश्च तेषां पुत्रत्व इतरपुत्रवत्पत्न्याः पूर्वमेव तन्निवेशस्योचितत्वात्। तस्माद्भ्रातृणामिदमपि वचनं नाकृतस्य पुत्रत्वप्रतिपादकं, किंतु सर्वासामेकपत्नीनामितिवन्नियमार्थं विशेषार्थाभिधायकमेव। तदुक्तं याज्ञवल्क्यस्मृतेर्मिताक्षराटीकायाः कर्त्रा विज्ञानेश्वरेण—भ्रातृणामिति वचनं भ्रातृपु-

भ्रातृपुत्रस्य पुत्रीकरणसंभवेऽन्येषां पुत्रीकरणनिषेधार्थं न पुनः पुत्रत्वप्रतिपादनाय। तत्सुता इत्यनेन विरोधादिति ( या० स्मृ० २।१३२ मिताक्षरा )।

भ्रातृव्याभावेऽन्योऽप्युक्तरीत्या प्रत्यासन्नः। तथा च शौनकः—

क्षत्रियाणां स्वजातौ वै गुरुगोत्रसमेऽपि वा।
वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु ॥
सर्वेषां चैव वर्णानां जातिष्वेव न चान्यतः।
दौहित्रो[१६] भागिनेयश्च शूद्रैस्तु क्रियते सुतः॥
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्॥ इति।

स्वजातौ क्षत्रियजातौ। जातिसामान्योपादानेऽपि प्रत्यासत्तिः पूर्ववदत्रापि नियामिका। अदूरबान्धवमित्यादिवसिष्ठस्मरणात्। सपिण्डाभावे गुरुगोत्रसमेऽ-

---

त्रस्य पुत्रीकरणसंभवेऽन्येषां पुत्रीकरणनिषेधार्थं, न पुनरकृतस्य तस्य पुत्रत्वप्रतिपादनार्थं तत्सुता इत्यनेन विरोधादिति।

योऽयमन्येषां पुत्रीकरणनिषेधः स न निरपेक्षः, किंतु सापेक्षः। ततश्च तादृशापेक्षाया अभावे निषेधस्याप्यभाव इति दर्शयति—**भ्रातृव्याभाव इत्यादि। उक्तरीत्येति**। ब्राह्मणानां सपिण्डेषु, अदूरबान्धवम्० इत्यादिवचनोक्तसापिण्ड्यानन्तर्येणेत्यर्थः। अस्मिन्नेवार्थे दार्ढ्यार्थं पुनरपि शौनकं प्रमाणयति—**तथा च शौनक इति। क्षत्रियाणां स्वजाताविति**। क्षत्रियैः स्वजातौ क्षत्रियजातौ पुत्रसंग्रहः कर्तव्य इत्यर्थः। अत्र स्वजाताविति सामान्यतो जातिनिर्देशात्क्षत्रियजात्युद्भवो यः कोऽपि सपिण्डासपिण्डत्वादिकमविचार्यैव दत्तकः कर्तव्य इति नार्थः। किंतु ब्राह्मणानां सपिण्डेष्वित्यादिवत्सपिण्डत्वाद्यानन्तर्यानुसारेण सपिण्डेष्वपि प्रत्यासत्त्यतिशयानुसारेण च दत्तकः कर्तव्य इत्यर्थः। प्रत्यासत्त्यतिशयपरित्यागस्याशास्त्रीयत्वेन तादृशप्रत्यासत्तिपरित्यागेन गृहीतस्य दत्तकस्याप्यशास्त्रीयत्वापत्तेः। सामान्यतः स्वस्वजातौ पुत्रीकरणताया उक्तत्वेऽपि सापिण्ड्यप्रत्यासत्त्यनुसारेणैव पुत्रसंग्रहकर्तव्यतायां वसिष्ठवचनं प्रमाणत्वेन पुरस्करोति—**अदूरबान्धवमिति**। अस्यार्थः ( पृ० ४८ पं० २८ ) इत्यत्र द्रष्टव्यः। **गोत्रसम इति**। सपिण्डालाभे सोदकालाभे च सगोत्रो ग्राह्य इत्यर्थः। गोत्रेण सम इति व्युत्पत्तेः सगोत्र इत्यर्थः। सगोत्र इत्यस्य समानं गोत्रं यस्येत्यर्थः। तत्र केन समानमित्यपेक्षायां प्रतिग्रहीतृगोत्रेणेति बोध्यम्। एवमपि क्षत्रियस्य समानगोत्रस्य ब्राह्मणजात्युद्भवस्यापि पुत्रस्य ग्राह्यत्वं प्रसज्येतेति सगोत्र इत्यस्य समानं गोत्रं वंशो यस्येत्यर्थः स्वीकार्यः। गोत्रं स्यान्नामवंशयोरिति त्रिकाण्डीस्मरणात्। प्रतिग्रहीता यत्र वंशे

पि वा। क्षत्त्रियाणां प्रातिस्विकगोत्राभावाद्गुरुनिर्देशः। अत एव व्यवधानात्स-पिण्डाभावे सगोत्रविधानम्। तत्रापि स्वजातावित्येव।

सर्वेषामपि वर्णानां जातिष्वेव न चान्यतः।

इति वाक्यशेषात्। तेन च भिन्नजातीयसपिण्डसगोत्रव्यावृत्तिः। वैश्यजा-

---

उत्पन्नस्तत्रोत्पन्न इति यावत्। एवमपि कूटस्थाद् द्वाविंशादेरपि पुत्रस्य सपिण्डसोदकानन्तरं ग्राह्यत्वापत्तिः। अतः प्रत्यासत्तिवशात्सपिण्डसोदकादनन्तरः कूटस्थात्पञ्चदशमारभ्यैकविंशावधिपुरुषपरम्परान्तर्गतः प्रथमं ग्राह्यो भवति। एवं च पारिभाषिकः सगोत्रशब्दोऽत्र गृहीत इति तात्पर्यम्। गोत्रसम इत्यस्यापि तादृश एवार्थः फलति।

ननु क्षत्त्रियाणां ब्राह्मणवद्गोत्रं न श्रूयतेऽतः कथमुच्यते गोत्रसमः प्रतिग्राह्य इत्यत आह--**गुर्विति**। गोत्रविशेषणं गुरुः। तथा च कस्य गोत्रेण सम इति गोत्रप्रतियोग्याकाङ्क्षायां स्वघटितवृत्तिघटको गुरुरेवोपस्थितो भवति न वृत्तिबहिर्भूतः क्षत्त्रिय इत्यर्थः।

ननु माऽस्तु गुरुशब्दः। कस्य गोत्रेणेति गोत्रप्रतियोग्याकाङ्क्षायां प्रतिग्रहीता क्षत्त्रिय एव संबध्यतामित्याशङ्कयाऽऽह--**क्षत्त्रियाणां प्रातिस्विकेति**। अयं भावः--सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमिति लक्षणे यदपत्यस्य गोत्रत्वमुक्तं तेषामृषीणां ब्राह्मणत्वेन ब्राह्मणवंशीयानामेव तत्संभवति। क्षत्त्रियाणां तु ब्राह्मणवंशीयत्वाभावात्प्रातिस्विकगोत्रं नास्ति। प्रातिस्विकत्वं चात्र गोत्रप्रवर्तकऋष्यपत्यत्वप्रयुक्तत्वं बोध्यम्। किं तु 'पौरोहित्यान्राजन्यविशां प्रवृणीते' इत्याश्वलायनोक्तेः पुरोहितगोत्रप्रवरावेव क्षत्त्रियगोत्रप्रवराविति साधूक्तं गुरुगोत्रसम इति। **व्यवधानादिति**। प्रतिग्रहीतृप्रतिग्राह्यसगोत्रयोर्मध्ये सपिण्डादिना व्यवधानादेव सपिण्डाद्यभावे सगोत्रप्रतिग्रहणविधानं संगच्छत इति शेषः। **तत्रापीति**। सपिण्डसगोत्रयोरित्यर्थः। अत्र सपिण्डपदेन सपिण्डसपिण्डः सोदकोऽपि गृह्यते। बन्धुसंनिकृष्टमिति वसिष्ठवचनात्। बन्धूनां सपिण्डानां संनिकृष्टः सोदक इति तदर्थात्। **तेन चेति**। सपिण्डे सगोत्रे च जातावित्यस्य संबन्धे सति सपिण्डः सगोत्रश्च सजातीय एव ग्राह्यो भवतीत्यर्थस्य जातत्वेनेत्यर्थः। **भिन्नजातीयेति**। ननु भिन्नजातीयसपिण्डसगोत्रयोः कथं प्राप्तिसंभवः, येन तयोर्व्यावृत्तये जातावित्यस्य तत्र संबन्ध उपयुक्तः स्यादिति चेदुच्यते। तिस्रो वर्णानुपूर्व्येण० (या० स्मृ० १। ५७) इति वचनेन ब्राह्मणक्षत्त्रियविशां क्रमेण सवर्णव्यतिरिक्तास्तिस्रो द्वे एका च भार्या विहिताः। तत्र क्षत्त्रियाद्वैश्यस्त्रियां

तेषु—वैश्यजातिष्वित्यर्थः। जातिर्जातं तु सामान्यमिति त्रिकाण्डीस्मरणात्। अत्रापि सामान्योपादानेऽपि प्रत्यासत्तिः पूर्ववन्नियामिका। गुरुगोत्रसमेऽपि वेत्यत्रापि प्रवर्तते। पौरोहित्यान्राजन्यविशामिति स्मरणात्। स्वगोत्रे संस्कृता ये स्युरित्यस्य त्रैवर्णिकसाधारण्याच्च। सपिण्डाभावे गुरुगोत्रसम इत्यत्रापि तुल्यं प्रत्या-

---

शूद्रस्त्रियां चोत्पन्नः पुत्रः क्रमेण माहिष्य उग्रश्चेति स्मृतः ( या० स्मृ० १। ९२ )। तादृशमाहिष्योग्रपुत्रेषु क्षत्रियस्य स्वावयवान्वयप्रयुक्तसपिण्डसगोत्रव्यवहारसत्त्वेन भिन्नजातीययोः सपिण्डसगोत्रयोः प्राप्तिः संभवतीत्यतस्तद्व्यावृत्तये सपिण्डसगोत्रयोर्जातावित्यस्य संबन्धः सुतरामावश्यक इत्याशयः। **वैश्यजातेष्विति**। अत्र जातशब्दो जातिपर्यायः। अत्रार्थे कोशं प्रमाणयति—**जातिर्जातं त्विति**। **अत्रापीति**। वैश्यजातेष्वित्यत्रापि। वैश्यजातेष्वित्येवं वैश्यजातिवाचकसामान्यशब्दोपादानेऽपि भ्रातृपुत्रादेः पूर्वं पूर्वं ग्राह्यत्वे सपिण्डत्वादिः प्रत्यासत्तिरानन्तर्ये नियामकमस्तीत्यर्थः। **अत्रापीति**। वैश्यजातेष्वित्यत्रापि। **गुरुगोत्रसम** इति। संबध्यत इति शेषः। तत्संबन्धे प्रमाणं प्रदर्शयन्नाह—**पौरोहित्यानिति**। क्षत्रियवद्वैश्यस्यापि गोत्रप्रवर्तकागस्त्याष्टमसप्तर्ष्यपत्यत्वप्रयुक्तं प्रातिस्विकगोत्रं नास्तीत्यत आश्वलायनेन पुरोहितगोत्रप्रवरावेव वैश्यस्य गोत्रप्रवरौ ज्ञेयावित्युक्तम्। ततश्च गुरुगोत्रसम इत्यस्य क्षत्रियस्य वैश्यस्य च सगोत्र इत्यर्थः फलति।

ननु क्षत्रियवैश्ययोः सपिण्डसोदकयोरलाभे गुरुगोत्रसमः सगोत्रो ग्राह्यत्वेनोच्यते। गुरुगोत्रसमश्च द्विविधः। सजातीयो विजातीयश्च। सजातीयोऽपि द्विविधः। स्ववंशीयः परवंशीय इति। त्रिविधेषु तेषु गुरुगोत्रसमः स्ववंशीय एव कुतो गृह्यत इति चेच्छृणु। गुरुगोत्रसमे सजातावित्यस्य संबन्धे कृते गुरुगोत्रसमः सजातीयो ग्राह्य इत्यर्थाद्विजातीयो व्यावर्तितः। परं तु भिन्नवंशीयः सजातीयसगोत्रोऽवशिष्टः। स इष्यत एव, परंतु नाऽऽदौ। अपि तु स्ववंशीय एवाऽऽदाविष्यते। तत्कुत इति चेत्। स्ववंशीये सजातीयत्वं स्वल्पपुरुषान्तरत्वं चेति प्रत्यासत्तिद्वयवत्त्वादन्तरङ्गः स्ववंशीय इति प्रथमोपस्थितत्वात्स एवाऽऽदौ गृह्यते। अस्ववंशीये तु सजातीयत्वमित्येवंरूपैकैव प्रत्यासत्तिरिति स बहिरङ्ग इति स्ववंशीयालाभे भिन्नवंशीयोऽपि सजातीयः पुत्रो ग्राह्यो भवति। स्ववंशीयः सगोत्रश्च मूलपुरुषात्पञ्चदशमारभ्यैकविंशावसानः स्वकुलीयत्वज्ञानपर्यन्तो वेति ज्ञेयम्।

सगोत्रश्च कूटस्थात्पञ्चदशमारभ्यैकविंशपुरुषावसानः। सगोत्रत्वज्ञानपर्यन्तो वा। तथा च क्षत्रियवदेव वैश्यस्यापि सपिण्डाद्यलाभेन सगोत्रस्य पुत्रस्य पुत्रीकरणे प्रसक्ते प्रथमतः पञ्चदशस्तदसंभवे षोडशस्तदभावे सप्तदश इत्येवं पूर्व-

सत्तेर्नियामकत्वात् । शूद्रजातिष्विति । अत्रापि प्रत्यासत्तिः पूर्ववदेव । गुरुगोत्राश्रवणाच्च गुरुगोत्रसमेऽपि वेत्यस्यात्राप्रवृत्तिः । तेन शूद्रजातिमात्र इति सिध्यति । तदाह ब्रह्मपुराणम्—

शूद्राणां दासवृत्तीनां परपिण्डोपजीविनाम् ।
परायत्तशरीराणां न क्वचित्पुत्र इत्यपि ॥
तस्माद्दासस्य दास्याश्च जायते दास एव हि ॥ इति ।

त्रैवर्णिकानां त्रैवर्णिकानुलोमजानां चोत्कृष्टत्वात्प्रतिलोमजानां चापकृष्टत्वान्न क्वचित्पुत्रः कर्तुं शक्य इति शूद्र एव पुत्रीकार्यो दासदास्युत्पन्नत्वादिति ।

---

पूर्वस्य प्रथमं ग्राह्यत्वे प्रत्यासत्तिरत्रापि व्यवस्थापिका भावतीत्यर्थः । **शूद्रजातिष्विति** । अत्र शूद्रजातिवाचकसामान्यशब्दोपादानेन शूद्रजातौ यः कश्चन पुत्रः सोदकाद्बहिर्भूतोऽपि प्रथमं ग्राह्य इत्यर्थो न मन्तव्यः । किंतु प्रत्यासत्तिवशात्तद्बाधियाच्च भ्रातृपुत्रादेः प्रथमतो ग्राह्यत्वमिति पूर्ववदेवात्रापि क्रमेण ग्राह्यत्वमुन्नेयम् । क्षत्रियवैश्यवच्छूद्रस्य गुरुगोत्रस्याविधानादत्र गुरुगोत्रसमेऽपि वेत्यस्य संबन्धो न भवति । तथा च शूद्रस्य सुतरां गोत्राभाव उक्तः । **तेनेति** । शूद्रजातौ गुरुगोत्रसमेऽपि वेत्यस्याप्रवर्तनेन । **शूद्रजातिमात्र इति** । शूद्रजातावेवेत्यर्थः । अवधारणे मात्रशब्दः । तेन भिन्नजातौ शूद्रस्य दत्तकग्रहणं न भवतीति तात्पर्यम् । अत्रैवार्थे ब्रह्मपुराणं प्रमाणत्वेन प्रदर्शयन्नाह—**शूद्राणां दासवृत्तीनामिति** । ब्राह्मणादित्रैवर्णिकसेवयोपजीविनामत एव पराधनिशरीराणां शूद्राणां क्वचित्—सजातिभिन्ने पुत्रो नास्ति । किंतु दासाद्दास्यामुत्पन्नो दास एवेति तादृशः शूद्र एव पुत्रीकार्य इति संक्षेपेण तदर्थः ।

ननु शूद्रस्य सजातावेव पुत्रो न क्वचिदपि सजातिभिन्न इत्यत्र किं प्रमाणमित्यत आह—**त्रैवर्णिकानामिति** । अयमाशयः—क्षत्रियावैश्याशूद्रास्तिस्रो भार्या ब्राह्मणस्यानुकल्पत्वेन विहिताः । क्षत्रियस्य द्वे वैश्याशूद्रे भार्ये अनुकल्पत्वेनोक्ते । वैश्यस्यैका शूद्रा भार्याऽनुकल्पत्वेनोक्ता । शूद्रस्य तु स्वजातीया शूद्रैव भार्या भवतीति सजातीयापदेन संकरजातीया व्यावर्त्यते । तेनैव वा सवर्ण इत्यनेन वा ब्राह्मण्यादिर्भार्या व्यावर्तिता । एवं च शूद्रस्यानुकल्पभार्या नास्ति । तत्र क्षत्रियादितिसृषु भार्यासु ब्राह्मणेनोत्पादिताः पुत्राः क्रमेण मूर्धावसिक्त–आम्बष्ठ–पारशवा उच्यन्ते । वैश्यायां शूद्रायां च क्षत्रियादुत्पन्नः पुत्रः क्रमेण माहिष्य उग्र इत्येवमुच्यते । शूद्रायां वैश्येनोत्पादितः पुत्रः करण इत्युच्यते ।

ननु क्षत्रियादिवाक्यत्रयं नाऽऽरम्भणीयम्। न्यायसाम्येन पूर्ववाक्यादेव तदर्थ-सिद्धेः। आरम्भेऽपि वा सर्वेषामेव वर्णानामित्यनेन पौनरुक्त्याच्चेति चेत्। मैवम्। क्षत्रियादिपदैः क्षत्रियादिसमानधर्मकमूर्धावसिक्तादीनामपि प्राप्त्यर्थत्वात्। ब्राह्मणेन

---

एते षडनुलोमजा इत्युच्यन्ते। प्रातिलोम्येन क्षत्रियवैश्यशूद्रैर्ब्राह्मण्यामुत्पादिताः पुत्राः क्रमेण सूतवैदेहकचाण्डाला उच्यन्ते। तथा वैश्यशूद्राभ्यां क्षत्रियायामुत्पादितौ पुत्रौ क्रमेण मागधः क्षत्ता चोच्येते। एवं शूद्राद्वैश्यायामुत्पन्नः पुत्र आयोगवः स्मृतः। एते षट् प्रातिलोम्येन जातत्वात् प्रतिलोमजा इत्युच्यन्ते। एवं स्थिते शूद्रस्य त्रैवर्णिकभार्या न प्राप्नोति। सवर्णत्वाभावात्। त्रैवर्णिकानुलोमजाऽपि न संभवति। सवर्णत्वाभावादेव। प्रतिलोमजाऽपि शूद्रस्य भार्या न संभवति। प्रतिलोमजानां सजातित्वाभावात्। तथा च शूद्रस्य शूद्रैव भार्या संभवतीति शूद्राच्छूद्रायां जातः शूद्र एवेति शूद्रस्य मुख्यः पुत्रः शूद्र एव भवति। एवं तुल्यन्यायाच्छूद्रस्य प्रतिनिधिपुत्रेणापि शूद्रेणैव भवितुं युक्तमित्याशयेनाऽऽह—त्रैवर्णिकानां ब्राह्मणक्षत्रियवैश्यानां मूर्धावसिक्तादिषडनुलोमजानां च स्वा( शूद्रा )पेक्षयोत्कृष्टत्वादुच्चवर्णीयत्वात्तादृशवर्णीयः पुत्रः शूद्रप्रतिनिधिः कर्तुं नोचितः। प्रतिलोमजा अपि स्वापेक्षया हीनजातित्वादपकृष्टा हीना इति तादृशहीनजात्युद्भवः पुत्रोऽपि शूद्रप्रतिनिधिः कर्तुं सुतरां नोचितः। तस्मादुचितत्वाच्छूद्रस्य शूद्रजातीय एव पुत्रः पुत्रीभवितुं युक्त इति सिध्यतीति।

शङ्कते—**नन्विति**। 'क्षत्रियाणां सजातौ' इत्येकं 'वैश्यानां वैश्यजातेषु' इति द्वितीयं 'शूद्राणां शूद्रजातिषु' इति च तृतीयं वाक्यं न वक्तव्यम्। 'ब्राह्मणानां सपिण्डेषु' इत्यादिपूर्वोक्तशौनकवचनादेव सपिण्डत्वाद्यानन्तर्यादियुक्तितौल्यात्क्षत्रियादीनां स्वस्वजातौ पुत्रीकरणमित्येवंरूपस्य निरुक्तवचनत्रयप्रतिपादितस्यार्थस्यानायासतः सिद्धत्वात्। शौनकवचने ब्राह्मणानामित्येवंश्रूयमाणत्वाद्ब्राह्मणविषयकत्वमेव तस्येति क्षत्रियादिभिः स्वस्वजातौ पुत्रीकरणं विधेयमित्यर्थावगमार्थे वचनत्रय आरब्धे तु 'सर्वेषां चैव वर्णानां जातिष्वेव न चान्यतः' इत्युक्तेर्वचनत्रयस्य पुनरुक्तताप्रसङ्गाच्चेत्याशङ्क्य मैवमित्याह—**क्षत्रियादिपदैरिति**। अयं भावः—क्षत्रियादिभिः स्वस्वजातौ पुत्रीकरणस्य 'सर्वेषां चैव वर्णानाम्' इत्यनेनैव सिद्धत्वात्क्षत्रियाणां सजातौ वेत्याद्यारभ्यमाणं वचनत्रयं व्यर्थं सज्ज्ञापकं भवति। किं ज्ञापयतीति चेत्–क्षत्रियवैश्यशूद्रशब्दैर्न केवलं क्षत्रियत्वादितत्तज्जातिविशिष्टा एव गृह्यन्तेऽपि तु क्षत्रियादिभिः समानधर्माणो मूर्धावसिक्ताम्बष्ठपारशवमाहिष्योग्रकरणाख्याः षडनुलोमजा अपि गृह्यन्ते। तत्र क्षत्रियशब्देन मूर्धावसिक्तादयस्त्रयोऽपि वैश्यश-

क्षत्त्रियायामुत्पादितः क्षत्रिय एव भवति। क्षत्रियेण वैश्यायां वैश्य एव वैश्येन शूद्रायां शूद्र एवेति शङ्खस्मरणात्। स्वजाताविति क्षत्रियादिसमानधर्मत्वेऽपि मूर्धावसिक्तादीनां क्षत्रियादिपुत्रत्वाभावबोधनाय। तिस्रो वर्णानुपूर्वेणेत्यानुपूर्व्य-लिङ्गात्। न च सर्वेषामित्यनेन पौनरुक्त्यम्। तस्य वर्णानामनुलोमानां च स्वजा-

---

ब्देन द्वौ माहिष्योग्रावपि शूद्रशब्देन चैकः करणोऽपि गृह्यते। तथा चैवं वाक्यार्थः संपद्यते—क्षत्रियैर्मूर्धावसिक्तादिभिस्त्रिभिश्च स्वजातौ पुत्रो ग्राह्य इति। एवं 'वैश्यानां वैश्यजातेषु' 'शूद्राणां शूद्रजातिषु' इत्युभयत्रापि वाक्यार्थ ऊहनीयः। तत्र ब्राह्मणानां सपिण्डेष्विति वचनेन तुल्यन्यायात्तत्सजातियक्षत्रियादिवर्णानां भवतु प्रत्यासत्तिवशात्क्रमेण ब्राह्मणवत्सपिण्डेषु पुत्रग्रहणं तथाऽपि मूर्धावसिक्तादीनां संकरजातीयत्वेन वर्णत्वाभावात्सपिण्डेषु पुत्रग्रहणं न प्राप्नोतीति तत्प्राप्त्यर्थं क्षत्रि-याणां स्वजातौ वेत्यादिवचनत्रयं कर्तव्यं भवति। अन्यथा मूर्धावसिक्तादीनां व्यवस्थया पुत्रग्रहणं न स्यादित्याशयः। मूर्धावसिक्तादीनां क्षत्रियत्वादिजात्यनाक्रा-न्तत्वेऽपि क्षत्रियादिसमानधर्मकत्वे शङ्खवचनं प्रमाणमुदाहरति—**ब्राह्मणेन क्षत्रिया-यामित्यादि**। अत्र स्वजातावित्युक्तत्वात्क्षत्रियादिभिर्मूर्धावसिक्तादिभिश्च स्वस्वजातौ पुत्र-प्रतिनिधिः कर्तव्य इत्यर्थः सिध्यति। तेन क्षत्रियादिभिर्न मूर्धावसिक्तादिषु पुत्र-ग्रहः कर्तव्यो नापि मूर्धावसिक्तादिभिः क्षत्रियादिषु पुत्रो ग्राह्यः। अन्यथा शङ्ख-वचनबलात्क्षत्रियादिपदैर्मूर्धावसिक्तादीनां ग्रहणात्तेषां मध्ये परस्परं पुत्रग्रहो दुर्नि-वारः स्यात्। **आनुपूर्व्यलिङ्गादिति**। तिस्रो वर्णानुपूर्व्येणेति याज्ञवल्क्यवचने पुत्रो-त्पादनसाधनीभूतदारपरिग्रहोऽभिहितः। स एवम्—ब्राह्मणस्य ब्राह्मणक्षत्रियवैश्यास्तिस्रो भार्या भवन्ति। क्षत्रियस्य क्षत्रियवैश्ये द्वे। वैश्यस्यैका वैश्यैव। शूद्रस्य स्वा सजातीयैव। अत्र सजातीया मुख्यः कल्पः। असजातीया इत्यनुकल्पः। ततश्च यथा वर्णानुक्रमेण भार्यापरिग्रहोऽभिहितस्तथा पुत्रपरिग्रहोऽपि वर्णानुक्रमेणैव भाव्यः। पुत्रोत्पादनभार्यापरिग्रहविध्योः कार्यकारणभावेन कारणातिरेकेण कार्यो-त्पत्तेरदृष्टत्वात्कारणानतिरेकेणैव च कार्योत्पत्तेर्दृष्टत्वादिति भावः। एवं च वर्णानां ब्राह्मणक्षत्रियविट्शूद्राणां, जातीनां मूर्धावसिक्तादीनां चान्योन्यं प्रति पुत्रपरिग्रहव्यवस्था नावकल्पतेऽपि तु दारपरिग्रहवद्वर्णानुक्रमेणैव तुल्यन्यायादित्यर्थः।

ननु क्षत्रियाणां स्वजातौ वा, इत्यादिवचनत्रयं यद्यारभ्यते तदा तस्य पुनरु-क्ततापत्तिः। सर्वेषां चैव वर्णानामित्युक्तेरित्याशङ्क्य तत्सार्थक्यं प्रदर्शयितुमाह—**तस्येति**। क्षत्रियाणां स्वजातौ वा, इत्यादिवचनत्रयस्येत्यर्थः। अस्य तदभावबोधनार्थ-त्वादित्यनेन संबन्धः। तथा च वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणामनुलोमानां

तिनियमानुवादेन प्रतिलोमानां तदभावबोधनार्थत्वात् । तदेवाऽऽह-सर्वेषामिति । वर्णपदोपादानसामर्थ्याद्वर्णानामेव स्वजातिनियमः स्यान्नानुलोमजानामिति तत्प्राप्त्यर्थं सर्वपदोपादानम् । प्राप्तिश्च वर्णसमानधर्मत्वात् । न च वर्णविशेषणं तत्, चकारानुपपत्तेः । ततश्च वर्णानामनुलोमजानां च जातिष्वेवेति नियमो नान्यतो नान्येषु प्रतिलोमेष्वित्यर्थः ।

---

मूर्धावसिक्ताम्बष्ठपारशवमाहिष्योग्रकरणानां च 'स्वस्वजातावेव पुत्रपरिग्रहः कर्तव्यः' इत्येवंरूपो यो नियम उक्तस्तमनूद्य 'स्वस्वजातावेव पुत्रप्रतिग्रहः कार्यः' इत्ययं नियमः प्रतिलोमजानां सूतवैदेहकचाण्डालमागधक्षत्त्रायोगवानां नास्तीति क्षत्रियाणां स्वजातौ वेत्यादिवचनत्रयेण बोध्यत इत्यर्थः । वर्णैर्ब्राह्मणादिभिरनुलोमजैर्मूर्धावसिक्तादिभिश्च स्वस्वजातावेव पुत्रप्रतिनिधिः कार्यो न स्वजात्यतिक्रमेणेत्येवं नियमः 'सर्वेषां चैव' इति वचनेन क्रियते सोऽग्रे प्रतिपादयिष्यते । तादृशनियमस्य क्षत्रियाणां स्वजातौ वेत्यादिवचनत्रयेणानुवादः कृतः । नियमानुवादस्य प्रयोजनं तु 'प्रतिलोमजानां स नियमो नास्ति' इति बोधनमेवेति बोध्यमिति तात्पर्यम् ।

ननु सर्वेषां चैव वर्णानामिति वचने वर्णपदश्रवणाद्ब्राह्मणक्षत्रियवैश्यशूद्राणामेव सजातिनियमः सिध्येत् । तेषामेव वर्णत्वात् । अनुलोमजानां तु सजातिनियमो न घटते । तेषां संकरजातीयत्वेन वर्णत्वाभावात् । तदुक्तं म० स्मृ० १० । ४ श्लोके मन्वर्थमुक्तावल्याम्—'संकीर्णजातीनां त्वश्वतरवन्मातापितृजातिव्यतिरिक्तजात्यन्तरत्वान्न वर्णत्वम्' इति । अतोऽनुलोमजानां सजातिनियमप्रतिपादनार्थं क्षत्रियाणां स्वजातौ वेत्यादिवचनत्रयमित्युक्तम् । तथा च वचनत्रयस्य नियमानुवादकत्वमनुपपन्नमित्याशङ्कापनोदार्थं सर्वेषां चैवेति वचनस्य वर्णानां सजातिनियमप्रतिपादकत्ववदनुलोमजानां सजातिनियमप्रतिपादकत्वमप्यस्तीति प्रदर्शयितुमाह-**तदाह सर्वेषामितीति**। अत्र वर्णपदोपादानाद्ब्राह्मणक्षत्रियवैश्यशूद्रैः स्वस्वजातावेव पुत्रसंग्रहः कार्य इत्येवं वर्णानामेव सजातिनियमो भवेन्नानुलोमजानामित्यनुलोमजानामपि सजातिनियमप्राप्त्यर्थं सर्वेषामिति पदमुपात्तमिति भावः । ननूपात्तेऽपि सर्वेषामिति पदे कथं तस्मादनुलोमजानां प्रतीतिरिति चेदुच्यते । न च सर्वेषां चतुर्णां वर्णानां न त्वेकस्य द्वयोस्त्रयाणां वा वर्णानामित्यर्थं बोधयितुं वर्णविशेषणार्थं सर्वेषामिति पदमिति वाच्यम् । वर्णपदोत्तरं बहुवचनश्रवणादविशेषाच्च चतुर्णामपि वर्णानां ग्रहणं भवेदेव न तदर्थं सर्वपदोपादानापेक्षा । किंच यदि वर्णविशेषणार्थं सर्वेषामिति पदं स्यात्तर्हि सर्वेषां चैवेति समुच्चयार्थकचशब्दोपादानमसंगतं स्यादित्यवश्यं समुच्चये कर्तव्ये सति वर्णैः सह के समुच्चेतव्या इत्याकाङ्क्षायां सदृशयोः

नन्विदं पूर्ववाक्यप्राप्तप्रत्यासत्त्यपवादत्वैव कुतो नेष्यते । अदूरबान्धवमिति वसिष्ठवाक्यविरोधादिति चेन्न। तस्य ब्राह्मणवाक्यैकवाक्यतयोपसंहारादिति चेत्। मैवम् । अपवादे लौकिकवैदिकप्रत्यासत्तिनियामकवृद्धव्यवहाररूपन्यायविरोधात्।

---

सहोच्चारणनियमाद्वर्णसदृशा एव समुच्चेतुमुचिताः । वर्णसदृशाश्च वर्णसमानधर्मकाः । वर्णसमानधर्मकाश्चानुलोमजा एव । तथा च वर्णानामनुलोमजानां च मिलित्वा सर्वेषां जातिष्वेवेति सजातिनियमो भवति, न चान्यतः । अन्येषु प्रतिलोमजेषु । न च जातिष्वेवेति सजातिनियमो नैवेत्यर्थपर्यवसानात्सर्वेषामिति पदादनुलोमजानां प्रतीतिः समुच्चयार्थकचशब्दोपादानं च संगच्छत इत्याशयः ।

क्षत्रियाणां स्वजातौ वा, इत्यादिवचनविषये शङ्कते–**नन्विति**। ब्राह्मणानां सपिण्डेष्विति पूर्ववचने पुत्रीकरणे या सपिण्डत्वादिप्रत्यासत्तिरुक्ता तस्या बाधकं ‘ क्षत्रियाणाम्० ’ इत्यादिवाक्यत्रयमिति कुतो नेष्यते । सपिण्डत्वादिप्रत्यासत्तिं परित्यज्य क्षत्रियादिभिः स्वस्वजातौ यः कोऽप्यर्थाद्भिन्नवंशीय एव पुत्रो ग्राह्य इत्येवं पूर्ववाक्यप्राप्तप्रत्यासत्तिबाधकं क्षत्रियाणामित्यादिवाक्यमिति कुतो नावगम्यत इत्यर्थः । यत्र सपिण्डत्वादिः काचिदपि प्रत्यासत्तिर्नास्ति तादृशोऽर्थाद्भिन्नवंशीयो भिन्नगोत्रश्च यः सजातीयः स एव क्षत्रियादिभिः पुत्रीकर्तव्यो न सपिण्डत्वादिप्रत्यासत्तिमानिति शङ्ककाशय इति तात्पर्यम् । तथा सति सापिण्ड्यादिप्रत्यासत्त्यनुसारेणैव पुत्रीकरणव्यवस्थापकं यददूरबान्धवमित्यादिवसिष्ठवाक्यं तेन साकं क्षत्रियाणामितीदं वाक्यं विरुद्धं स्यात् । वसिष्ठवाक्यप्रोक्तार्थविरुद्धार्थप्रतिपादकं भवेदिति यावत् । इति चेन्मन्यसे तन्न युक्तम् । **तस्य**। अदूरबान्धवमित्यादिवसिष्ठवाक्यस्य ‘ ब्राह्मणानां सपिण्डेषु ’ इत्यनेनैकवाक्यताकरणेन ब्राह्मणविषय एव तत्संबन्धात् । ‘ सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ’ इति न्यायाद्ब्राह्मणमात्रकर्तृकपुत्रीकरणस्थल एव वसिष्ठवाक्यप्रोक्तसपिण्डत्वादिप्रत्यासत्तिरादरणीया । न क्षत्रियाणां स्वजातौ वा, इत्यादिवचनत्रयप्रोक्तक्षत्रियादिकर्तृकपुत्रीकरणस्थल इति क्षत्रियादीनां स्वस्वजातिमात्रे सपिण्डत्वादिसंबन्धशून्यस्वजातौ पुत्रग्रहणं स्यादित्याशङ्क्य वृद्धव्यवहारविरोधात्तन्न युक्तमित्याह––**मैवमिति** । स्वभ्रातृतत्पुत्रादिषु स्वपितृशरीरावयवसंबन्धाद्या प्रत्यासत्तिर्निकटसंबन्धः सा लौकिकी प्रत्यासत्तिः । लोके प्रत्यक्षदृष्टत्वात् । स्वं देवदत्तः । स्वभ्राता सोदरो यज्ञदत्तः । तत्पुत्रादिश्चैत्रादिः ।

स्वं देवदत्तः । स्वपिता विष्णुमित्रः । तत्र स्वस्मिन्देवदत्ते स्वपितुर्विष्णुमित्रस्य शरीरावयवानामस्थिरस्नाय्वादीनां संबन्धो यथा लोके प्रत्यक्षतो दृष्टस्तथा स्वभ्रातरि यज्ञदत्ते तत्पुत्रादिषु चैत्रादिषु पितरमारभ्य सप्तमान्तेषु चापि दृश्यते । अयं लोके दृश्यमानः पितृशरीरावयवसंबन्ध एव लौकिकी प्रत्यासत्तिरित्युच्यते । तेन यज्ञदत्तादयः सप्तपर्यन्ताः स्वस्य प्रत्यरुन्ना भवन्ति । तत्र स्ववत्स्वभ्रातरि यज्ञदत्ते स्वपितृशरीरावयवसंबन्धस्य साक्षात्सत्त्वेन स्वभ्राता यज्ञदत्तः स्वस्य प्रत्यासन्नतमः । तत्पुत्रे चैत्रे तु स्वपितृशरीरावयवसंबन्धस्तत्पितृद्वारा परम्परयेति कृत्वा स्वभ्रातृपुत्रश्चैत्रः स्वस्य प्रत्यासन्नतरः । एवमग्रेऽपि पञ्चमापेक्षया चतुर्थः प्रत्यासन्नतर इत्येवं सप्तमपर्यन्तं पूर्वपूर्वस्य प्रत्यासन्नतरत्वं बोध्यम् । यत्र च स्वपितृशरीरावयवसंबन्धो न लोके दृश्यतेऽपि तु शास्त्रबलात्कल्प्यते तत्र शास्त्रीया प्रत्यासत्तिः । यथा स्वभार्यायां स्वपितृशरीरावयवसंबन्धः कथमपि लोके न दृश्यते । किंतु ‘ अस्थिभिरस्थीनि मांसैर्मांसानि ’ इति मन्त्रलिङ्गाद्दारभ्यारम्भकभावेन ह्येकशशरीरावयवान्वयो विवक्षितः । तथा च भ्रात्रोरारम्भकैकपितृशरीरावयवान्वयः । पतिपत्न्योरपि ताभ्यामारभ्यं यदेकपुत्रशरीरं तदवयवद्वारा तत्पितामहशरीरावयवान्वयः । अस्यायं भावः—देवदत्तपुत्रे देवदत्तपितृशरीरावयवान्वयः परम्परया देवदत्तद्वारा लोकसिद्ध एवास्ति । तादृशदेवदत्तपुत्रस्य च देवदत्ततद्भार्याभ्यामारम्भकत्वेन संबन्धोऽस्ति । ततश्च पितृद्वारकपरम्परया देवदत्तपुत्रगता ये देवदत्तपितृशरीरावयवास्तेषां देवदत्तभार्यया संबन्धो जात एवेति देवदत्ततद्भार्ययोरारम्भकैकशरीरावयवप्रवेशो घटते । तत्र देवदत्तपितृशरीरावयवानां देवदत्तभार्यया सह य एकत्वसंबन्धः स न लोकसिद्धोऽपि तु ‘अस्थिभिरस्थीनि’ इति वेदबलात्कल्पत इति सेयं वैदिकी प्रत्यासत्तिरुच्यते । अपवादे । सपिण्डत्वादिप्रयुक्तानन्तर्यरूपा या प्रत्यासत्तिस्तदपवादत्वेन त्वदभिमतायां जातिप्रत्यासत्तौ । जातिप्रत्यासत्तौ गृहीतायां सत्यां तन्मध्येऽपि सापिण्ड्याद्यानन्तर्यरूपप्रत्यासत्तिराद्रियत एवेत्येतद्विषये निश्चायको यो वृद्धव्यवहाररूपो न्यायस्तद्विरोधान्मैवं वादीरिति योजना । अपवादलौकिकेति समस्तपाठेऽप्ययमेवार्थः । वृद्धैर्मान्यतमैरादरणीयैः शिष्टैः स्वस्वजाताविव सापिण्ड्यादिप्रत्यासत्तितारतम्यमनुसृत्यैव पुत्रीकरणं विधीयत इति सापिण्ड्यादिप्रत्यासत्तिजातिप्रत्यासत्त्योः परस्परं नापवाद्यापवादकभावः किंतु परस्परोपकारकत्वमेवेति स्पष्टमेवावगम्यते । सत्येवं यदि सापिण्ड्यादिप्रत्यासत्तिं सर्वथा परित्यज्य जातिमात्रप्रत्यासत्त्याश्रयणेन स्वस्वजातौ सपिण्डं सोदकादिं च पुत्रं त्यक्त्वा भिन्नवंशीयो भिन्नगोत्रश्च यः कोऽपि दूरस्थः पुत्रो दत्तकत्वेनोपादीयेत तर्हि वृद्धव्यवहारविरोधः स्यादिति तादृशशिष्टव्यवहारविरोधेन क्षत्रियादिवाक्यानां बाधकत्वकल्पनं सापिण्ड्यादिसामान्यप्रत्यासत्तेर्बाध्यत्वकल्पनं चात्यन्तानुचितमेवेति भावः ।

प्रयोजनाभावादतिप्रसङ्गादनेनैव प्रत्यासत्तिसामान्यापवादे दौहित्रो भागिनेयश्चेति

किंच प्रयोजनाभावादपि वृद्धव्यवहारवैपरीत्येन बाध्यबाधकभावकल्पनमनुचित-मित्याह-**प्रयोजनाभावादिति** । पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय चेति श्राद्धोदकाञ्जल्यौर्ध्वदेहिकाविच्छिन्नवंशप्रवृत्तय इत्येवं पुत्रप्रतिनिधीकरणस्य फलमुक्तम् । तत्र प्रत्यासन्ने सपिण्डे दत्तकीकृतेऽथवा भिन्नवंशीये भिन्नगोत्रीये च सजातीये दत्तकीकृते तत्सिध्यत्येव न तत्र कियानपि फलभेदो दृश्यते यदि तर्हि संनिहितं परित्यज्य दूरस्थस्य ग्रहणं कुर्वता त्वया किं साधितं स्यात् । हस्तस्थं विहाय पलायतोऽनुधावनमिव न किमपि साधितं किंत्वनुधावनश्रमो वृथैवाङ्गीकृत इत्यर्थः । न केवलं वृथा श्रमाङ्गीकरणमेवापि त्वतिव्याप्तिरप्यायातीत्याह-**अतिप्रेति** । अलक्ष्ये लक्षणगमनरूपातिव्याप्तिप्रसङ्गादित्यर्थः । अयं भावः-'ब्राह्मणानां सपिण्डेषु' इत्यनेन प्रथमं सपिण्डः पुत्रीकर्तव्यं इत्युक्तम् । तत्तुल्यन्यायाददूरबान्धवमिति वसिष्ठवाक्याच्च 'क्षत्रियाणां स्वजातौ वा' इत्यादिवाक्येष्वपि क्षत्रियादीनामपि प्रथमतः सपिण्डग्रहणं प्राप्नोति । तथा च प्रथमतः सपिण्डग्रहणं क्षत्रियाणां स्वजातौ वेत्यादेर्लक्ष्यं भवति । तादृशसपिण्डरूपलक्ष्ये सति तत्परित्यज्य सजातिमात्रप्रत्यासत्त्या पुत्रीकरणं ब्रुवता त्वया सपिण्डसगोत्रभिन्नस्य सजातीयस्य यस्य कस्यचिदलक्ष्यस्य पुत्रीकरणेऽङ्गीकृतेऽलक्ष्ये लक्षणगमनेनातिव्याप्तिः प्रसज्येतेति भावः ।

ननु क्षत्रियाणां स्वजातौ वा, इत्यादिवाक्यस्य 'ब्राह्मणानां सपिण्डेषु' इति पूर्ववाक्यप्राप्तसापिण्ड्यप्रत्यासत्तेर्बाधकत्वाङ्गीकारे वसिष्ठवाक्यं विरोधि। तेनादूरबान्धवमित्यनेन सामान्यतः प्रथमं सपिण्डग्राह्यताया अभिधानात् । अतः क्षत्रियादीनामपि प्रथमतः सपिण्डग्रहणं प्राप्नोति । परंत्वदूरबान्धवमिति वसिष्ठवाक्यं ब्राह्मणानां सपिण्डेष्वित्यनेन सह वाक्यैकवाक्यतया ब्राह्मणमात्र उपसंह्रियत इत्युक्तमेव । ततश्च बाधके दूरीकृते सजातिमात्रप्रत्यासत्तेः सापिण्ड्यप्रत्यासत्तिबाधकत्वं निराबाधमेवावशिष्यत इति वृद्धव्यवहारवैपरीत्येन बाध्यबाधकभावकल्पनं न्याय्यत्वान्नानुचितमिति चेन्नैतद्भद्रम् । कथमिति चेदुच्यते—यद्यदूरबान्धवमिति वसिष्ठवाक्यं ब्राह्मणमात्र उपसंह्रियते तर्ह्युभयोः समानार्थप्रतिपादकत्वेन 'संभेदेनान्यतरवैयर्थ्यात्' इति न्यायादन्यतरस्य वैयर्थ्यमापद्येत । न्यायस्वरूपं त्वित्थम्—संभेदः संगमः । 'संभेदः सिन्धुसंगमः' इत्यमरात् । तथा च गङ्गायमुनयोर्नद्योः संगमेन संमेलनेन यथाऽन्यतरस्या वैयर्थ्यं विलोपो भवति तद्वत्सामान्यस्य विशेष उपसंहारद्वारा द्वयोः समानार्थकत्वरूपे संगमे सत्यन्यतरस्य वैफल्यं स्यादित्यर्थः । तत्र सामान्यवाक्यस्य वैयर्थ्यमुच्यते विशेषवाक्यस्य वा । यदि विशेषवाक्यस्य वैयर्थ्यं गृहीत्वा तन्मा भूदि-

प्रत्यासत्तिविशेषापवादासंगतेश्च । तस्माद्यथोक्तव्याख्यैव प्रयोजनवतीति ।

---

त्युच्यते तर्हि सामान्यवाक्यं विशेषार्थकमिति न कथमपि ज्ञायेत । अतः सामान्यवाक्यस्य विशेषार्थपरत्वे तात्पर्यग्राहकत्वेन विशेषवाक्यं चरितार्थम् । ततश्च सामान्यवाक्यस्यैव वैयर्थ्यं स्यादिति वसिष्ठवाक्यस्य सर्वथाऽनर्थक्यं प्रसज्येत । ब्राह्मणानां सपिण्डेष्वित्यनेनैव गतार्थत्वात् । तस्मान्नोपसंहारमर्हति किंतु ब्राह्मणक्षत्रियादिषु सर्वेष्वेव प्रथमतः संनिहितसपिण्डग्रहणं स्वातन्त्र्येण बोधयतीति स्पष्टमेवावगम्यते । अत एव ‘ स्पष्टस्य तु विधेर्नान्यैरुपसंहार इष्यते ’ इति तन्त्रवार्तिक उक्तम् । अत एव ‘ पुरोडाशं चतुर्धा करोति ’ इत्यस्य ‘ आग्नेयं चतुर्धा करोति ’ इत्यनेनोपसंहारे कृते प्रयोजनाभावात्सामान्यतः पुरोडाशचतुर्धीकरणोक्तिरपार्थिका स्यादित्याक्षिपन्ति केचित् । सामान्यस्य विशेष उपसंहारे कृते यदि सामान्यवाक्यप्रणयनस्य किंचित्प्रयोजनं वक्तुं शक्येत तर्ह्येवोपसंहारो युज्यते । यथा ‘ सप्तदश सामिधेनीरनुब्रूयात् ’ इत्यनारभ्य पठितम् । मित्रविन्दाध्वरकल्पादिषु विकृतिषु तथैव पठितम् । तत्रानारभ्य पठितं सामिधेनीसाप्तदश्यं प्रकृतिषु न प्रवेष्टुं समर्थम् । प्रकृतिषु सामिधेनीनां पाञ्चदश्यावरुद्धत्वात् । अतो विकृतिष्वेव निविशते । तत्रानारभ्याधीतस्य सामिधेनीसाप्तदश्यस्य मित्रविन्दादिविकृतिपठितसामिधेनीसाप्तदश्येनोपसंहारे कृत उभयोः समानार्थकत्वेनानारभ्याधीतसाप्तदश्यवाक्यस्य वैयर्थ्यपरिहाराय विकृतिष्वेव चोदकप्राप्तपाञ्चदश्यबाधकत्वं प्रयोजनमुक्तम् । मित्रविन्दादिविकृतिपठितवाक्यस्य च चोदकप्राप्तसामिधेनीरनूद्य तासु साप्तदश्यविधायकत्वमुक्तमित्युभयोः सप्रयोजनत्वादुपसंहारो युज्यते । नैवं प्रकृते वक्तुं शक्यमिति नोपसंहारो युज्यत इति भावः । वृद्धव्यवहारवैपरीत्येन बाध्यबाधकभावकल्पने दोषान्तरं प्रदर्शयन्नाह— **अनेनैवेति** । क्षत्रियाणां स्वजातौ वेत्यनेनैव वचनेन सापिण्ड्यादिप्रत्यासत्तिसामान्यस्यापवादे बाधे सति ‘ दौहित्रो भागिनेयश्च ’ इत्यस्य प्रत्यासत्तिविशेषापवादत्वासंगतेरिति योजना । सापिण्ड्यादिप्रत्यासत्तेरपवादभूतो यो जातिमात्रप्रत्यासत्तिरूपो विशेषस्तन्निरूपितापवादकत्वासंगतेश्चापि वैपरीत्येनापवादापवादकत्वकल्पनमनुचितमित्यर्थः । अत्रेदं बोध्यम्—सापिण्ड्यादिप्रयुक्तानन्तर्यरूपा प्रत्यासत्तिः सामान्यप्रत्यासत्तिः प्रत्यासत्तिसामान्यं वेत्युच्यते । ब्राह्मणादिभिः सपिण्डेषु तदलाभेऽसपिण्डेषु पुत्रीकरणं विधेयमित्येवं सामान्यत उक्तौ ब्राह्मणस्य सपिण्डा ब्राह्मणजातौ तद्भिन्नक्षत्रियादिजातावपि च संभवन्ति । अतः सापिण्ड्यादिप्रत्यासत्तिः प्रत्यासत्तिसामान्यमित्युच्यते । तादृशप्रत्यासत्तिसामान्य आश्रीयमाणे ब्राह्मणस्य स्वजातौ क्षत्रियादिभिन्नजातौ च पुत्रसंग्रहः प्राप्नोति । तत्र

भिन्नजातौ पुत्रीकरणमनिष्टम् । अतः ‘ सर्वेषां चैव वर्णानां जातिष्वेव न चान्यतः ’ इति वाक्यशेषेणोक्ता जातिप्रत्यासत्तिरप्याश्रीयते । तेन ब्राह्मणेन स्वजातावेव सपिण्डादिः पुत्रीकर्तव्य इत्यर्थपर्यवसानाद्भिन्नजातौ पुत्रीकरणं व्यावर्त्यते । एवं क्षत्रियादिविषयेऽपि बोध्यम् । तथा च ‘ ब्राह्मणानां सपिण्डेषु, अदूरबान्धवम् ’ इत्यादिवचनाभ्यां पुत्रीकरणसाधनत्वेनोक्तायाः सापिण्ड्यादिप्रत्यासत्तेः परिच्छेदकत्वेन जातिप्रत्यासत्तिरादृता । परिच्छेदकत्वादेव चेयं विशेषप्रत्यासत्तिरित्युच्यते नापवादत्वात् । एवं चेयमनिष्टपुत्रीकरणव्यावर्तकत्वेनोच्यते, न साधकत्वेन । यदि चानिष्टपुत्रसंग्रहव्यवच्छित्त्यै केवलजातिप्रत्यासत्तिराश्रीयेत तदा स्वजातावेव भिन्नगोत्रीयस्य भिन्नशाखिनो भिन्नावान्तरजातीयस्यापि पुत्रत्वेन ग्रहणं प्रसज्यते । यथा कौंकणस्थेन कौशिकगोत्रीयेण बह्वृचेन देशस्थस्यात्रिगोत्रोद्भवस्य वाजसनेयिनोऽपि पुत्रत्वेन ग्रहणं क्रियेत । अतो जातिप्रत्यासत्तावपि सापिण्ड्यादिप्रत्यासत्तिरादरणीयैव । ततश्च निरुक्ते उभे अपि प्रत्यासत्ती परस्परसहकारेण पुत्रप्रतिनिधिं निर्वर्तयतो नापवाद्यापवादकभावेनेति स्पष्टमेवावगम्यते । सेयमन्योन्यसहकृता प्रत्यासत्तिश्चतुर्ष्वपि वर्णेषु समानैव । ततश्च सापिण्ड्यादिप्रत्यासत्तिसामान्यात्प्राप्तं दौहित्रभागिनेययोः पुत्रीकरणं दौहित्रो भागिनेयश्चेत्यनेन नियमवचनेन त्रैवर्णिकस्यापोद्यत इति दौहित्रो भागिनेयश्चेत्ययमपवाद इति संगच्छत इति सैद्धान्तिकः सरलः पन्थाः । एवं स्थिते पूर्वपक्षिणा ‘ क्षत्रियाणां स्वजातौ वा ’ इत्यादिवचनेन क्षत्रियादिविषये सापिण्ड्यादिप्रत्यासत्तिं बाधित्वा जातिमात्रप्रत्यासत्तिराद्रियते । सापिण्ड्यादिप्रत्यासत्तिजातिप्रत्यासत्त्योरपवाद्यापवादकभावोऽङ्गी क्रियत इति यावत् । ततश्च क्षत्रियादिना सपिण्डादिलाभसंभवेऽपि तं त्यक्त्वा सपिण्डादिभिन्न एव सजातीयः पुत्रीकर्तव्य इति क्षत्रियाणां स्वजातौ वा, इत्यादेः पर्यवसानेन क्षत्रियादेर्दौहित्रभागिनेययोः पुत्रीकरणस्य प्रसक्तिरेव नास्तीति तदपवादार्थं दौहित्रो भागिनेय इति वचनं न कर्तव्यं भवति । एवं च क्षत्रियाणां स्वजातौ वा, इत्यनेनैव वचनेन सापिण्ड्यादिप्रत्यासत्तिसामान्यस्य बाधे सति क्षत्रियादेर्दौहित्रादेः पुत्रस्य प्राप्तिरेव नास्तीति क्षत्रियाणामित्यादिवचनप्रोक्तो यः सापिण्ड्यादिप्रत्यासत्तिसामान्यस्यापवादभूतो जातिमात्रप्रत्यासत्तिरूपो विशेषस्तदपवादकत्वं दौहित्र इति वचनस्य न घटत इत्याशयः । ननु क्षत्रियादिविषये सापिण्ड्यादिप्रत्यासत्तेः सर्वथाऽनङ्गीकारेऽपि ब्राह्मणविषये साऽस्त्येव । ‘ ब्राह्मणानां सपिण्डेषु ’ इति विशेषवचनात् । तथा च ब्राह्मणस्य प्रत्यासत्त्यनुसारेण प्रसक्तं यद्दौहित्रभागिनेययोः पुत्रीकरणं तदपवादार्थं दौहित्र इतिवचनमपेक्षितमेवेति कथमुच्यते दौहित्र इति वचनस्यापवादोक्तिरसंगतेति चेत्—एकसत्त्वेऽपि द्वयं नास्तीति न्यायेनापवादासं-

प्रत्यासत्तिसामान्यात्प्राप्तयोर्दौहित्रभागिनेययोस्त्रैवर्णिकेष्वपवादमाह——दौहित्र इति। तुशब्दस्यावधारणार्थतया शूद्रैरेवेति नियमात्त्रैवर्णिकव्यावृत्तिः। तत्र हेतुमाह—ब्राह्मणादित्रय इति। क्वचिदपि शास्त्रे भागिनेयस्य त्रैवर्णिकसुतत्वादर्शनाच्छूद्राविषय-

---

गतेरित्युक्तिसंगतेरिति भावः । किंच दौहित्र इति वचनं दौहित्रभागिनेयौ न पुत्रीकर्तव्यावित्येवं न नञ्शब्देन निषेधकं किंतु नियमद्वारा । नियमश्च 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायाद्वचनप्रतिपादितार्थान्यथासिद्धावेव भवति नान्यथा । वचनार्थस्तु दौहित्रभागिनेयौ शूद्रेण पुत्रीकर्तव्याविति । पूर्वपक्ष्युक्तप्रकारेण 'शूद्राणां शूद्रजातिषु' इति वचनेन सापिण्ड्यादिप्रत्यासत्तेः सर्वथा बाधितत्वेन सपिण्डादिभिन्नः शूद्रजातीयः शूद्रेण पुत्रीकर्तव्य इत्यर्थस्य तात्पर्यविषयाऽभिधानाच्छूद्रस्य दौहित्रभागिनेययोः पुत्रीकरणं नैव प्रसज्जत इति दौहित्र इतिवचनं शूद्रेण दौहित्रभागिनेययोः पुत्रीकरणे विधायकमेव स्यात् । तथा च कथमिव ब्राह्मणविषयेऽपि दौहित्रभागिनेययोः पुत्रीकरणमपवदेत् । ततश्च ब्राह्मणस्य सापिण्ड्यप्रत्यासत्तिसामान्यात्प्राप्तं यद्दौहित्रभागिनेययोः पुत्रीकरणं तदवशिष्येतैवेति दौहित्र इति वचनमपवाद इति सुतरामसंगतमिति साधूक्तमपवादासंगतेरिति । एवं पूर्वपक्षवादिमतं संखण्ड्य सिद्धान्तं संस्थापयति-**तस्माद्यथोक्तेति** । ब्राह्मणादिवर्णैः स्वजातावेव पुत्रसंग्रहः कर्तव्य इत्येवं सजातिनियमवदनुलोमजैर्मूर्धावसिक्तादिभिरपि स्वजातावेव पुत्रसंग्रहः कार्य इत्येवमनुलोमजानामपि सजातिनियमप्राप्त्यर्थं क्षत्रियाणां स्वजातौ वा, इत्यादिवचनत्रयमित्याद्युक्तव्याख्यैव साधीयसीत्यर्थः ।

**प्रत्यासत्तीति** । सापिण्ड्यादिप्रत्यासत्तिरित्यर्थः । आदिशब्देन सोदकत्वादेर्ग्रहणम् । सैव च सापिण्ड्यादिप्रत्यासत्तिः समानगोत्रत्वस्वल्पपुरुषान्तरत्वतारतम्यविशिष्टा विशिष्टप्रत्यासत्तिर्भवतीत्यत उक्तं **प्रत्यासत्तिसामान्यादिति** । एवं च सापिण्ड्यप्रत्यासत्तिसामान्यात्पुत्रीकरणत्वेन प्राप्तयोर्दौहित्रभागिनेययोः **शूद्रैस्त्वि**त्यवधारणार्थकतुशब्देन शूद्रैरेव दौहित्रभागिनेयौ पुत्रीकर्तव्याविति नियमनात्त्रैवर्णिकानां निषेधः सिध्यति । त्रैवर्णिकस्य दौहित्रभागिनेययोः पुत्रीकरणनिषेधे कारणं प्रदर्शयन्नाह—**ब्राह्मणादित्रय इति** । **क्वचिदिति** । क्वचिदपीत्यर्थः । लघुमञ्जूषायां न क्वचिदस्तीत्यादौ न क्वाप्यस्तीत्यर्थवर्णनाद्वक्तृतात्पर्यानुरोधेन पूर्वनञ्समभिव्याहृतक्वचिदादिपदान्तर्गतचिदित्यस्याप्यर्थकत्वस्य सूचनादिति भावः । तथा च क्वचिदपि शास्त्रे ब्राह्मणादित्रये भागिनेयः सुतो नास्ति पुत्रीकरणत्वेन नोक्तः किंतु शूद्रस्यैव स विहित इत्यर्थः ।

ननु भागिनेयमात्रघटितमिदं वाक्यं शूद्रेणैव भागिनेयः पुत्रीकर्तव्य इत्यर्थ

**त्वमेवेति समुदायार्थः। भागिनेय इत्यविवक्षितम्। हेतौ व्यर्थविशेषणतापत्तेः। विवक्षायां भागासिद्धेश्च। दौहित्रभागिनेयौ शूद्रविषयौ शास्त्रान्तरे त्रैवर्णिक-**

---

एव हेतुः स्यान्न दौहित्रविषये । तत्र दौहित्रपदादर्शनादत आह—**अविवक्षितमिति** । भागिनेय इत्येकमेवाविवक्षितमुभयं तु विवक्षितमेवेत्यर्थः । तथा च भागिनेय इति दौहित्रस्याप्युपलक्षणमित्याशयः । तदेतत्स्पष्टमुक्तं निर्णयसिन्धुटीकाकारैः कृष्णंभट्टैः—' कौस्तुभे शौनकः—दौहित्रो भागिनेयश्च शूद्राणां विहितः सुतः । ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ' ( इति निर्णयसिन्धुः ) । एतदुपरि कृष्णंभट्टाः—' पूर्वार्धे भागिनेयस्य दौहित्रसाहचर्यादुत्तरार्धे भागिनेयपदं दौहित्रोपलक्षणम् ' इति ।

ननु यदि भगिनेय इत्युपलक्षणं तदा ' ब्राह्मणादित्रये न स्तः क्वचिच्छास्त्रे हि तौ सुतौ ' इत्येवं स्पष्टतया वक्तुमर्हम् । सत्येवं यद्भागिनेयस्यैकस्यैव वचनं तत्स्मृतिकारस्य विवक्षितमेवेत्याशङ्कयाऽऽह—**हेतौ व्यर्थेति** । दौहित्रो भागिनेयश्चेति पूर्वार्धेन दौहित्रभागिनेययोः शूद्रकर्तृकपुत्रीकरणाविषयत्वं बोध्यते । तत्र हेतुः ' ब्राह्मणादित्रय ' इत्युत्तरार्धेन निर्दिश्यते । तथा च दौहित्रभागिनेयौ शूद्रेण पुत्रीकर्तव्यौ, शास्त्रान्तरे भागिनेयस्य त्रैवर्णिकसुतत्वानभिधानादित्यर्थः सिध्यति । तत्र भागिनेयस्य त्रैवर्णिकसुतत्वानभिधानादिति हेतुवाक्ये भागिनेयेति विशेषणस्य व्यावर्तकत्वाभावेन विफलत्वापातात् । व्यावर्तकत्वस्यैव हि विशेषणस्वरूपत्वात् । नहि दौहित्रभागिनेयौ शूद्रेण पुत्रीकर्तव्यौ, शास्त्रान्तरे त्रैवर्णिकसुतत्वानभिधानादित्येतावत्युक्ते कश्चिदतिप्रसङ्गो भवति यो हि भागिनेयेति विशेषणेन निवार्येत । त्रैवर्णिकसुतत्वानभिधानं कयोरित्याकाङ्क्षायां पूर्वार्धे शूद्रस्य पुत्रीकर्तव्यत्वेनोक्तयोरित्यर्थाल्लभ्यत एवेति विशेषणमन्तरेणैव विवक्षितार्थलाभादिति भावः ।

किंच भागिनेयेत्येतन्मात्रस्य विवक्षितत्वे हेत्वाभासत्वप्रयोजकस्वरूपासिद्ध्यपरपर्यायभागासिद्धिरूपदोषापत्तिरित्याह—**भागासिद्धेश्चेति** । भागासिद्धिर्नाम पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावः । यथा पृथिवीं पक्षीकृत्य गन्धवत्त्वं साध्यते घटत्वाद्धेतोरित्यनुमाने पृथिवी पक्षः, गन्धवत्त्वं साध्यम्, घटत्वं हेतुः । अत्र पक्षता पृथिव्याम् । पक्षताया अवच्छेदकं पृथिवीत्वम् । तच्च घटपटादौ सर्वत्र पृथिव्यां वर्तते । घटत्वरूपो हेतुस्तु घटे वर्तते, पटादौ नास्ति । तथा च यत्र यत्र पक्षतावच्छेदकं पृथिवीत्वं वर्तते तत्र तत्र सर्वत्र घटत्वमित्येवं पृथिवीत्वसामानाधिकरण्येन घटत्वहेतोरभावः । पटादौ पृथिवीत्वेऽपि घटत्वादर्शनात् । भागे पक्षैकदेशे हेतोरसिद्धिरवृत्तितेत्यर्थः । इयमेव स्वरूपासिद्धिरित्युच्यते । पक्षे पक्षैकदेशे वा हेतोः स्वरूपतोऽसिद्धिरवृत्तित्वमिति तदर्थः । एवं च

विषयत्वाभावात् । यथा सुरापानादाविति प्रयोगात् । तेनोभयोस्त्रैवर्णिकविषयत्वासिद्धिः ।

**अथेदं वाक्यद्वयं शब्दविधयैव स्वस्वविषये प्रमाणं नानुमानविधया । तेन**

---

भागासिद्धिरूपदोषग्रस्तत्वेन घटत्वहेतोर्हेत्वाभासत्वं भवति । हेत्वाभासश्च न यथार्थानुमितिसाधको भवति । यथा शब्दो गुणश्चाक्षुषत्वादिति प्रयोगे चाक्षुषत्वस्य हेतोः पक्षे शब्दे स्वरूपतोऽसत्त्वेन शब्दपक्षकानुमाने चाक्षुषत्वहेतुः स्वरूपासिद्ध इत्युच्यते । शब्दस्य श्रावणत्वादित्यर्थः । तद्वत् प्रकृते दौहित्रभागिनेयौ पक्षीकृत्य शूद्रकर्तृकपुत्रप्रतिनिधित्वं साध्यते । भागिनेयस्य त्रैवर्णिकसुतत्वानभिधानादित्यनुमाने पक्षो दौहित्रभागिनेयौ मिलितौ द्वौ, पक्षता मिलितयोर्द्वयोः पक्षतावच्छेदकं दौहित्रत्वभागिनेयत्वरूपं द्वयम् । एवं स्थिते पक्षतावच्छेदकाश्रये पक्षैकदेशे भागिनेयस्य त्रैवर्णिकसुतत्वानभिधानरूपहेतोः सत्त्वेऽपि पक्षैकदेशे दौहित्रे निरुक्तहेतोरसत्त्वेन भागिनेयघटितहेतोर्भागासिद्धिरूपदोषदुष्टत्वेन हेत्वाभासत्वाद्दौहित्रस्य शूद्रकर्तृकपुत्रप्रतिनिधित्वविषयकानुमितिज्ञानं नैव जायेतेत्यर्थः । **यथा सुरेति** । इदं दृष्टान्तार्थम् । सुरापाननिषेधस्य त्रैवर्णिकविषयत्वस्मरणात्सुरापानं पक्षीकृत्य शूद्रकर्तृकत्वं साध्यते शास्त्रान्तरे त्रैवर्णिककर्तृकत्वादर्शनादित्यनुमाने यथा सुरापानस्य शूद्रकर्तृकत्वं निष्टङ्कं सिध्यति तद्वत्पूर्वोक्तानुमाने दौहित्रस्य शूद्रकर्तृकपुत्रप्रतिनिधित्वं न सिध्येदित्यर्थः । **तेनेति** । भागिनेय इत्यस्य दौहित्रस्याप्युपलक्षणत्वाङ्गीकारेणेत्यर्थः । ततः किं सिद्धं तदाह--**उभयोरिति** । दौहित्रभागिनेययोस्त्रैवर्णिकपुत्रप्रतिनिधित्वाभावः सिद्ध इत्यर्थः ।

पूर्वोक्तं नियमं द्रढयितुं साधकबाधकविचारं प्रवर्तयति-**अथेदमिति** । **वाक्यद्वयं** ' दौहित्रो० ' इति ' ब्राह्मणादित्रये ' इति च पूर्वोत्तरार्धरूपं वाक्यद्वयमित्यर्थः । **शब्दविधयेति** । आकाङ्क्षायोग्यतादिसहकृतया शक्तिरूपशब्दमर्यादयेत्यर्थः । **स्वस्वेति** । ' दौहित्रभागिनेयौ शूद्रेण पुत्रीकर्तव्यौ ' इति ' त्रैवर्णिकेन भागिनेयो न पुत्रीकार्यः ' इति चार्थं क्रमेण प्रमाणत्वेन प्रतिपादयत्वित्यर्थः । **नानुमानेति** । दौहित्रभागिनेयौ शूद्रेण पुत्रीकर्तव्यौ, शास्त्रान्तरे तयोस्त्रैवर्णिकसुतत्वानभिधानात्सुरापानवत्, इत्येवं हेतुहेतुमद्भावैनैकवाक्यतयाऽर्थप्रतिपादकमिति न मन्तव्यमित्यर्थः । ततश्च शूद्रेण दौहित्रभागिनेयौ पुत्रीकर्तव्याविव्येवं शूद्रस्य दौहित्रभागिनेययोः पुत्रीकरणविधिरथ च त्रैवर्णिकेन भागिनेयो न पुत्रीकार्य इत्येवं त्रैवर्णिकस्य भागिनेयमात्रपुत्रीकरणस्य निषेध इत्यर्थः सिध्यति । पूर्वार्धे दौहित्रादिद्वयस्योपादानादुत्तरार्धे चैकस्यैव भागिनेयस्योपादानादित्यर्थः । एवं चेदं वाक्यद्वयं न त्वेकवाक्यमित्याशयः । **तेनेति** ।

भागिनेयमात्रस्यैव त्रैवर्णिकविषयत्वाभावो न दौहित्रस्येति वाच्यम्। तदपि न। वाक्यभेदापत्तेः। दौहित्रस्य त्रैवर्णिकेषु विकल्पापत्तेश्च। अदूरबान्धवत्वेन प्राप्तत्वाच्छूद्राणामेवेति नियमेन निषिद्धत्वात्।

यद्वा शूद्राणामेवेति नियमेन दौहित्रस्य त्रैवर्णिकेषु निषेधः सिध्यति। त्रैवर्णिकानां भागिनेय एव न भवतीति नियमेन दौहित्रस्य प्राप्तिश्च सिध्यतीति विकल्पः। किंच शब्दविधया प्रामाण्ये पूर्ववाक्ये किं नियमः परिसंख्या वा स्यात्।

---

वाक्यद्वयाङ्गीकारेण भागिनेयस्यैव त्रैवर्णिकपुत्रप्रतिनिधित्वाभावो न दौहित्रस्येति चेत्तदप्ययुक्तमित्याह–**वाक्यभेदेति**। न च वाक्यभेद इष्यते सत्यां गतौ। तदुक्तं युक्तियुक्ताभिधायिभिः–'संभवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्' इति। तथा च पूर्वोक्तानुमानप्रकारेणैकार्थप्रतिपादकत्वरूपैकवाक्यत्वसंभवाच्छब्दमर्यादया भिन्नार्थप्रतिपादकत्वरूपवाक्यभेदकरणमयुक्तं गौरवादिति शेषः। ननूत्तरार्धे भागिनेयमात्रस्योपादानात्स्मृतिकारस्य वाक्यद्वयमेवेष्टमित्याशङ्क्य दौहित्रस्य त्रैवर्णिकपुत्रप्रतिनिधित्वे विकल्पापत्त्या परिहरति–**दौहित्रस्येत्यादिना**। विकल्पमेवोपपादयति–**अदूरबान्धवेति**। अदूरबान्धवमितिवसिष्ठवचनेन सापिण्ड्यप्रत्यासत्त्या त्रैवर्णिकेषु दौहित्रस्य प्राप्तिर्भवत्यथ च शूद्रेणैव दौहित्रः पुत्रीकर्तव्य इति नियमवचनेन तन्निषेधः प्राप्नोति। तत्र वचनयोस्तुल्यबलत्वेन तुल्यबलविरोधे च विकल्प इति रीत्या त्रैवर्णिकेषु दौहित्रस्य विकल्प आपद्येत। स चाष्टदोषग्रस्त इति महद्गौरवं वाक्यभेदाङ्गीकारे गले पतति। नन्वेवं तुल्ययुक्त्या भागिनेयस्यापि त्रैवर्णिकेषु विकल्पः स्यादिति चेद्भ्रान्तोऽसि। अदूरबान्धवमिति वसिष्ठवचनेन त्रैवर्णिकेषु या भागिनेयस्य प्राप्तिस्तस्याः 'ब्राह्मणादित्रये' इत्युत्तरार्धेन निषेधात्।

ननु दौहित्रभागिनेयौ शूद्रैरेव पुत्रीकर्तव्याविति नियमेन त्रैवर्णिकस्योभयोर्निषेधे प्राप्ते सति भागिनेयस्यैव त्रैवर्णिकेषु नास्तित्वप्रतिपादनार्थं 'ब्राह्मणादित्रये' इति वाक्यस्याऽऽवश्यकत्वेन वाक्यभेदेऽपि कुतो विकल्पप्रसङ्ग इति मनसि निधायाऽऽह–**यद्वेति**। शूद्रैरेव दौहित्रभागिनेयौ पुत्रीकार्याविति नियमेन त्रैवर्णिकेषु दौहित्रपुत्रीकरणस्य निषेधः सिध्यति। अथ च त्रैवर्णिकेषु भागिनेयस्यैव पुत्रीकरणं नास्तीति नियमेन त्रैवर्णिकेषु दौहित्रस्य पुत्रीकरणं सिध्यतीति दौहित्रस्य त्रैवर्णिकेषु विकल्पः स्यादित्याशयः। अथ शब्दमर्यादयाऽर्थप्रतिपादकत्वेन वाक्यद्वयाभ्युपगमं दूषयितुं पूर्ववाक्येऽर्थविशेषविचारं प्रवर्तयति–**किंचेति**। **पूर्ववाक्य इति**। दौहित्रो भागिनेयश्चेत्यादिपूर्वार्धे किं नियमः समाश्रीयते परिसंख्या वा। कया विधया नियमः कया च विधया परिसंख्येति चेदुच्यते। शूद्रस्य परिग्रहीतुः पुत्रपरिग्रहे

कथं नियमः। कथं च परिसंख्या। दौहित्रभागिनेयावेव शूद्राणामिति नियमः। पक्षे दौहित्रादेः पक्षे च भ्रातृव्यादेः प्राप्तत्वात्। शूद्राणामेव दौहित्रभागिनेयाविति च परिसंख्या। दौहित्रादेश्चतुर्ष्वपि वर्णेषु युगपत्प्राप्तत्वात्। तत्राऽऽद्ये भ्रातृव्यादिविधायकसामान्यशास्त्रस्य बाधः। 'सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः'

---

प्रसक्तं तत्र परिग्राह्यत्वेन सपिण्डासपिण्डाः सर्वे समुपस्थिताः। तत्र यदाऽसौ दौहित्रं भागिनेयं वा जिघृक्षति तदेदं वचनमुदास्ते। स्वेन प्रतिपाद्यो योऽर्थस्तमनुशासनमन्तरा स्वेच्छयैवायमनुतिष्ठतीति। यदा चायं येन केनापि कारणेन दौहित्रभागिनेयव्यतिरिक्तं जिघृक्षति तदेदं वचनं तमनुशासितुं प्रवर्तते— भोः शूद्रेण त्वया दौहित्रो भागिनेयो वा पुत्रीकार्य इति। पक्षेऽप्राप्तांशपूरणफलकत्वान्नियमस्य। तदुक्तं मीमांसकैः –' नियमः पाक्षिके सति ' इति। वचनप्रतिपादितेऽर्थे पक्षे प्राप्ते सति यदा सोऽर्थो न प्राप्नोति तत्र पक्षे तस्यार्थस्य विधानेन नियमो भवतीति तदर्थः। तथा च दौहित्रभागिनेयावेव शूद्रैः पुत्रीकर्तव्यौ नान्य इत्येवं निष्कृष्टो नियमाकारः फलति। यदा तु चतुर्ष्वपि वर्णेषु दौहित्रभागिनेययोः प्रतिग्राह्यत्वेन युगपत्प्राप्तौ सत्यां तत्र शूद्रैरेव दौहित्रभागिनेयौ पुत्रीकार्यौ नान्यैस्त्रैवर्णिकैरित्यर्थो वर्ण्यते तदा त्रैवर्णिकेषु दौहित्रभागिनेययोः पुत्रीकरणस्य परिवर्जनात्परिसंख्या भवति। अनेकत्र युगपत्प्राप्तस्यैकस्यार्थस्य क्वचिदंशेऽवस्थापनेन क्वचिदंशे परिवर्जनस्य परिसंख्यात्वात्। तदुक्तमभियुक्तैः—' तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ' इति। तत्र शूद्रे, अन्यत्र त्रैवर्णिके च प्राप्तौ दौहित्रभागिनेयविषयकपुत्रीकरणरूपस्यैकस्यार्थस्य युगपत्प्राप्तौ सत्यामेकत्रांशे शूद्रे दौहित्रभागिनेयपुत्रीकरणार्थस्यावस्थापनेनान्यत्रांशे त्रैवर्णिके निरुक्तार्थस्य परिवर्जनं क्रियते चेत्सा परिसंख्या भण्यत इति हि लक्षणसमन्वयपूर्वकस्तदर्थः। एवं च शूद्रैरेव दौहित्रभागिनेयौ पुत्रीकार्यौ नान्यैस्त्रैवर्णिकैरित्येवं परिसंख्या सिध्यतीत्यर्थः। एवं पूर्ववाक्ये नियमपरिसंख्ये उपपाद्य क्रमेण ते दूषयति—**तत्राऽऽद्य इति**। दौहित्रभागिनेयावेव शूद्रैः पुत्रीकार्यौ नान्य इति नियमपक्षेऽदूरबान्धवमित्यादिवसिष्ठवचनसहकारेण भ्रातृव्यादिसपिण्डासपिण्डानां ग्राह्यताबोधकं यच्छूद्राणां शूद्रजातिष्विति सामान्यशास्त्रं तस्य बाधः कर्तव्यः स्यात्। यतस्तेन वचनेन शूद्रस्य स्वजातौ सपिण्डासपिण्डानां सर्वेषां पुत्रीकरणाभिधानादिति भावः। तथा 'सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः' इति जातिसामान्यपरतयोपात्तस्य जातिपदस्य शूद्रविषये दौहित्रभागिनेययोरुपसंहारः कर्तव्यः स्यात्।

ननु दौहित्रो भागिनेयश्चेति वचनेन सर्वेषां चैव वर्णानां जातिष्विति वचनस्य बाध एव न्याय्यस्तयोः सामान्यविशेषभावात्। सामान्यं च विशेषेण बाध्यत

इत्यत्र जातिपदस्य दौहित्रादिपरतया संकोचः । दौहित्रभागिनेययोरभावे पुत्रीकरणाभावप्रसङ्गश्चेति । परिसंख्यापक्षे तु शूद्राणामेवेत्यनेनैव त्रैवर्णिकेषु तन्निषेधसिद्धौ ब्राह्मणादित्रये नास्तीति पुनस्तन्निषेधकवाक्यवैयर्थ्यापत्तिरिति । तस्मादनुमानविधयैव वाक्यद्वयव्याख्या साधीयसीति ।

किंच न्यायमूलिकाया अनुमानविधायाः श्रुतिमूलिकायाः शब्दविधाया गुरु-

---

इति हि प्रसिद्धमित्यत आह—**दौहित्रभागिनेययोरभाव इति** । यस्य कस्यचिच्छूद्रस्य दैवदुर्विलासान्नास्ति भगिनी नास्त्यपि च दुहिता तस्य पुत्रीकरणार्थं दौहित्रभागिनेययोर्लाभात्यन्तासंभवेन सर्वथा पुत्रीकरणाभावः प्रसज्येत । दौहित्रभागिनेयाभ्यां विहीनस्य शूद्रस्य पित्र्यर्णपङ्कादुद्धरणमार्गस्य द्वारं दृढदत्तार्गलं स्यादिति यावत् । एवं च दूषणत्रयग्रस्तत्वादाद्यः पक्षो न न्याय्यो भवितुमर्हति । अन्त्ये परिसंख्यापक्षेऽपि शूद्रेणैव दौहित्रभागिनेयौ पुत्रीकर्तव्यावित्येतावतैव त्रैवर्णिकेषु तदभावसिद्ध्या ' ब्राह्मणादित्रये नास्ति ' इत्यादिना पुनस्तन्नास्तित्वकथनस्य सुतरां नैरर्थ्यापत्तिः स्यात् । तथा च परिसंख्यापक्षोऽपि दुष्ट एवेत्यर्थः । अतः पूर्वोक्तेन ' दौहित्रभागिनेयौ शूद्रेण पुत्रीकर्तव्यौ, शास्त्रान्तरे तयोस्त्रैवर्णिकसुतत्वानभिधानात्सुरापानादिवत् ' इत्येवमनुमानप्रकारेणैकवाक्यतयैव वाक्यद्वयस्य व्याख्या श्रेयस्करी भवितुमर्हति । शब्दशक्तिमर्यादयाऽर्थप्रतिपादकतया वाक्यद्वयाङ्गीकारे दूषणान्तरं प्रदर्शयन्नाह—**किंचेति** । प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवं वाक्यं न्यायः । युक्तिरिति यावत् । तन्मूलिका याऽर्थबोधसाधनीभूताऽनुमानविधाऽनुमानरीतिस्तदपेक्षयेत्यर्थः । श्रूयत इति श्रुतिः । श्रूयत एव केवलं नतु केनापि क्रियते तादृशं वाक्यं श्रुतिः । वेद इति यावत् । तन्मूलिकाया अर्थबोधसाधनीभूतायाः शब्दशक्तिमर्यादाया गुरुत्वादित्यर्थः । अयं भावः—' स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ' ( या० स्मृ० २ । २१ ) ' व्यवहारतो व्यवहारे विषये स्मृत्योर्धर्मशास्त्रयोः परस्परं विरोधे तु न्यायस्तत्तद्विषयव्यवस्थापकस्तर्को बलवान् निर्णायकः । न्यायेन यस्मिन्नर्थे या स्मृतिर्व्यवस्थाप्यते तस्मिन्नर्थे सा स्मृतिः प्रमाणमिति यावत् ' इत्यर्थकायाज्ञवल्क्यवचनान्न्यायानुसारेणार्थवर्णनापेक्षया शब्दशक्त्यनुसारेणार्थवर्णने गौरवं भवति । अतो लाघवान्न्यायेनार्थप्रतिपादनं बलवदिति लभ्यते । दौहित्रो भागिनेयश्चेति स्मृतेर्यदि न्यायमूलकेनानुमानप्रकारेणार्थोऽभिधीयते तदोत्तरार्धार्थः पूर्वार्धार्थं प्रति हेतुः पूर्वार्धार्थस्तु हेतुमानिति हेतुहेतुमद्भावेनैकं वाक्यं तदर्थश्चाप्येक एव दौहित्रभागिनेयौ शूद्रैः प्रतिग्राह्याविति । यदि तु शब्दशक्त्याऽर्थोऽभिधीयते तदा दौहि-

त्वाच्च । श्रुतिकल्पने श्रुतिद्वयकल्पनाच्च न्यायमूलकत्वे च नास्तीति वर्तमानोपदेशो लिङ्गम् । यदा तु

दौहित्रो भागिनेयो वा शूद्राणां विहितः सुतः ।

---

त्रभागिनेयौ शूद्रैर्ग्राह्याविति पूर्वार्धेन प्रतिपाद्यते, उत्तरार्धेन च त्रैवर्णिकेन भागिनेयो न ग्राह्य इति निषेधः प्रतिपाद्यत इति भिन्नभिन्नार्थाभिधानाद्वाक्यमपि भिन्नं भिन्नं भवति । तत्र शब्दशक्त्याऽर्थाभिधाने सति श्रुतिव्यतिरिक्तस्य सर्वस्यापि शब्दस्य कृतकत्वेन स्वतःप्रामाण्यासंभवेन सापेक्षं प्रामाण्यं, निरपेक्षं तु प्रामाण्यं श्रुतेरेव । ततश्च स्मृतिप्रामाण्यस्य निरूपितार्थत्वान्निरूपितस्य च निरूपकाकाङ्क्षायां श्रुतिरेव तच्छान्तिकरत्वेनोपतिष्ठत इति श्रुत्यनुसारिण्या एव स्मृतेः प्रामाण्यमिति जैमिनीये स्मृतिप्रामाण्याधिकरणे सिद्धान्तितम् । तत्र तादृशस्मृत्यर्थजीवातुभूता श्रुतिर्यद्यत्नेनोपलब्धश्रुतिकदम्बके न दृश्यते तर्ह्यनुमातव्या । तदप्युक्तम्—'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्' ( जै० न्या० १ । ३ । ३ ) इति । ततश्च प्रकृते शब्दशक्त्याऽभिहितस्य वाक्यार्थद्वयस्य प्रामाण्यसिद्ध्यर्थं तादृशार्थकं श्रुतिद्वयं प्रकल्प्यं भवति । न्यायेनार्थाभिधाने तु युक्तियुक्तार्थाभिधानाद्युक्तेश्च युक्तित्वादेव स्वतःप्रामाण्यसत्त्वान्न प्रमाणान्तरापेक्षाऽनवस्थाप्रसङ्गादिति तादृशार्थाभिधाने युक्तेः प्रमाणान्तरानपेक्षित्वेन न्यायमूलकेनानुमानप्रकारेणार्थाभिधाने लाघवं भवति । श्रुतिव्यतिरिक्तस्य तु शब्दस्य स्वतःप्रामाण्यासंभवेन तादृशार्थाभिधाने प्रमाणान्तरापेक्षित्वेन शब्दशक्तिमर्यादयाऽर्थाभिधाने गौरवं भवतीत्यर्थाभिधानसाधनीभूतानुमानविधापेक्षया शब्दविधा गुरुभूतेत्याशयः । तदेव शब्दविधागौरवं प्रदर्शयति—**श्रुतिकल्पन इति** । प्रकृतस्थले चाधिकमेव गौरवमित्याह—**श्रुतिद्वयकल्पनादिति** । न्यायमूलिकयाऽनुमानविधयाऽर्थाभिधाने तादृशं गौरवं नास्तीत्यत्र हेतुं प्रदर्शयन्नाह—**वर्तमानोपदेश इति** । वर्तमानार्थकप्रयोगेणार्थकथनं लिङ्गं हेतुः । प्रामाण्यसंपादकश्रुतिकल्पनारूपं श्रुतिद्वयकल्पनारूपं वा गौरवं नास्तीत्यर्थ इति शेषः । दौहित्रो भागिनेयश्चेति स्मृत्या पूर्वार्धरूपयाऽभिहितो योऽर्थः 'दौहित्रभागिनेयौ शूद्रेण ग्राह्यौ' इत्येवंरूपस्तद्विषये प्रमाणं किमित्याकाङ्क्षायां 'ब्राह्मणादित्रये नास्ति' इत्युत्तरार्धप्रतिपादितोऽर्थो हेतुरिति तदेव प्रमाणमिति यावत् । एवं च पूर्वार्धरूपायाः स्मृतेः स्वप्रामाण्यसंपत्त्यर्थं श्रुतिकल्पनाया अपेक्षा नास्ति । तत्प्रामाण्यस्योत्तरार्धार्थेनैव संपादितत्वात् । उत्तरार्धेन प्रतिपादितो योऽर्थः 'त्रैवर्णिकस्य भागिनेयः पुत्रो न भवति', इत्येवंरूपस्तत्र किं प्रमाणमित्याकाङ्क्षायां नास्तीत्यत्र वर्तमानार्थकप्रत्ययकरणेन लोके प्रमाणत्वेन सिद्धस्यैवार्थस्य वर्तमाननिर्देशार्हत्वेन तादृशार्थे लोक एव प्रमाणमित्युक्त-

इति पाठस्तदाऽपि शूद्राणामेव शूद्राणामपीति वेत्यन्वयसंशयव्युदासाय नि-यमपरतामेव स्पष्टीकर्तुं ब्राह्मणादित्रय इत्यस्य प्रवृत्तेरेकवाक्यतैव । नियमपरता चेत्थम्—दौहित्रभागिनेयकर्मकपुत्रीकरणभावनायामनियमेन चतुर्णामपि वर्णानां कर्तृत्वेन प्राप्तौ शूद्रनियमेन शूद्राणामेवेत्यन्वयः सिध्यति । तथा च भागिनेय-

---

रार्धस्यापि स्वप्रामाण्यार्थं श्रुतिकल्पनाया अपेक्षा नास्ति । तत्प्रामाण्यस्य लोकेनैव संपादितत्वात् । ततश्च हेतुहेतुमद्भावेनार्थाभिधाने हेतुवाक्यस्य हेतुमद्वाक्यस्य च द्वयो-र्मध्ये कस्यापि स्वप्रामाण्यसंपत्त्यर्थं श्रुतिकल्पनाया अपेक्षा सुतरां न भवति । तयोः प्रामाण्यस्यान्यथैव सिद्धत्वादिति भावः ।

नन्वेवं ' शूद्रैस्तु क्रियते सुतः ' इत्यवधारणार्थकतुशब्दघटितत्वेन नियम-परताऽत्रैवार्थे चोत्तरार्धस्य हेतुत्वेनोपन्यासादेकवाक्यता चास्य वचनस्य भवतु । किंतु यदा ' दौहित्रो भागिनेयो वा शूद्राणां विहितः सुतः ' इति तुशब्दरहितः पाठस्तदा कथं नियमपरता कथमेकवाक्यता चेत्याशङ्क्याऽऽह—**संशयव्युदासायेति** । अयं भावः—यदा शूद्राणां विहितः सुत इति तुशब्दरहितः पाठस्तदा शूद्राणामेव दौहित्रभागिनेयावथवा शूद्राणामपीति संशयो जायेत । कथमयं संशयो जायत इति चेत्—' भागिनेयो वा ' इति वाशब्दश्रवणाद्वाशब्दस्य च ' वा स्याद्वि-कल्पोपमयोरेवार्थेऽपि समुच्चये ' इत्यमरप्रामाण्यादवधारणसमुच्चयार्थकत्वस्य वक्तुं शक्य-त्वाद्यदाऽवधारणमर्थो वाशब्दस्य स्वीक्रियते तदा शूद्राणामेवेत्यर्थः । यदा तु समुच्चयार्थोऽङ्गीक्रियेत तदा शूद्राणामपीत्यर्थ इत्युपपद्यते संशयः । तादृशसंशय-निरसनेन शूद्राणामेवेत्येवं नियमपरतामेव स्पष्टं बोधयितुं ' ब्राह्मणादित्रये नास्ति ' इति वाक्यं प्रवृत्तम् । शूद्राणामपीत्यपिशब्दसमुच्चयत्रैवर्णिकेषु दौहित्रभागिनेययोर्नि-षेधे कृते सत्यर्थाच्छूद्रेष्वेव तावुक्तौ । एवं च समुच्चयार्थकं वाशब्दमनादृत्या-वधारणार्थको वाशब्दो ग्रहीतव्य इति ब्राह्मणादित्रये नास्तीत्यनेन स्पष्टं बोधनादस्यै-कवाक्यता नियमपरता च सिध्यति । तामेव नियमपरतामुपपादयति—**दौहित्रेत्यादिना** । ब्राह्मणानां सपिण्डेषु, क्षत्रियाणां सजातौ वै, वैश्यानां वैश्यजातेषु, शूद्राणां शूद्र-जातिषु, इत्यादिवचनेषु प्रोक्ता ' दौहित्रं भागिनेयं वा पुत्रीकुर्यात् ' इत्येवं दौहित्रभागिनेयकर्मिका या पुत्रीकरणभावना तस्यां कर्तृत्वेनानियमाच्चतुर्णामपि ब्राह्म-णादिवर्णानां प्राप्तौ सत्यां तत्र ' दौहित्रो भागिनेयो वा शूद्राणां विहितः सुतः ' इति वचनेन शूद्रस्य नियमनाच्छूद्राणामेवेत्यन्वयात्सिध्यतीत्यर्थः । यदि च शूद्रा-णामेवेत्यर्थो न स्वी क्रियेत तर्हि सामान्यवचनैः शूद्राणामपि दौहित्रभागिनेययोः प्राप्तिसत्त्वेनेदं वचनं व्यर्थमेव स्यादिति भावः । एवं च ब्राह्मणादित्रये नास्तीत्यत्र

पदं दौहित्रस्याप्युपलक्षणमेव । अन्यथा दौहित्रभागिनेययोः शूद्रविषयत्वनियमासिद्धेः । सिद्धौ वा दौहित्रस्य त्रैवर्णिकविषये विकल्पापत्तिरित्युक्तमेव । यद्येवं तर्हि भागिनेयस्य त्रैवर्णिकविषयत्वाभाव एव दौहित्रभागिनेययोः शूद्रविषयत्वेन साध्यतामिति चेन्न । शूद्रविषयत्वादित्यनेनैव सिद्धौ दौहित्रभागिनेयपदोपादानवैयर्थ्यात् । अविवक्षायामुभयाविवक्षातो भागिनेयमात्राविवक्षाया लघुत्वात् । तस्माद्यथोक्तमेव साधीय इति ।

---

भागिनेयपदं दौहित्रस्याप्युपलक्षणमिति फलति । **अन्यथेति** । शब्दशक्तिमर्यादयाऽर्थाभिधाने वाक्यद्वयाङ्गीकारेणोपलक्षणत्वास्वीकारे दौहित्रभागिनेययोरुभयोः शूद्रविषयत्वमेवेति नियमो न सिध्येदित्यर्थः । ननु वाक्यद्वयाङ्गीकारेऽपि दौहित्रभागिनेयौ शूद्राणामेवेति नियमः स्यात । सामान्यवचनैः शूद्रविषयेऽपि तयोः प्राप्तिसत्त्वात् । अथ च त्रैवर्णिकेषु भागिनेयस्यैव निषेधार्थं ब्राह्मणादित्रये नास्ति, इति नियमार्थं स्यादिति कथं नियमो न सिध्येदित्युच्यत इत्यत आह–**सिद्धौ वेति** । वाक्यद्वयाङ्गीकारेऽपि नियमस्य सिद्धावित्यर्थः । तथाऽपि त्रैवर्णिकेषु दौहित्रस्य विकल्पः प्रसज्येतेति ' यद्वा शूद्राणामेवेत्यादि दौहित्रस्य प्राप्तिश्च ' इत्यन्तग्रन्थेन मूल एवोक्तमित्यभिप्रायेणाऽऽह––**उक्तमेवेति** । उक्तदोषपरिहारार्थमेकवाक्यतया व्याख्यानस्याऽऽवश्यकत्वेऽप्युक्तवैपरीत्येनैकवाक्यता व्याख्यायतामित्याह––**यद्येवमिति** । पूर्वं ' दौहित्रभागिनेयौ शूद्रेण पुत्रीकर्तव्यौ, क्वचिदपि शास्त्रान्तरे तयोस्त्रैवर्णिकसुतत्वानभिधानात ' इत्येवमुत्तरार्धपूर्वार्धार्थयोर्हेतुहेतुमद्भावेनैकवाक्यतोक्ता । इदानीं तु ' भागिनेयं पक्षीकृत्य त्रैवर्णिकसुतत्वाभावः साध्यते, दौहित्रभागिनेययोः शूद्रकर्तृकपुत्रीकरणविषयत्वाद्धेतोः ' इत्येवं पूर्वोक्तवैपरीत्येन पूर्वार्धोत्तरार्धार्थयोर्हेतुहेतुमद्भावेनैकवाक्यताऽस्त्विति चेन्मैवं वादीरित्याह–**इति चेन्नेति** । तथा सति भागिनेयस्त्रैवर्णिकसुतत्वाभाववान् , शूद्रकर्तृकपुत्रीकरणविषयत्वादित्येतावतैव विवक्षितार्थलाभे सति हेतुत्वबोधकवाक्ये दौहित्रभागिनेयपदोपादानस्य वैफल्यापत्तेर्विपर्ययेणैकवाक्यताऽयुक्तेत्यर्थः ।

ननु यथा भवदुक्तेऽनुमाने भागिनेयस्य त्रैवर्णिकसुतत्वानभिधानादिति हेतुवाक्ये भागिनेयस्य व्यर्थविशेषणतापत्त्याऽविवक्षा क्रियते तद्वन्मदुक्तेऽनुमाने दौहित्रभागिनेयावविवक्षितावास्तामित्याशङ्कयाऽऽह––**अविवक्षायामिति** । त्वन्मदुक्तानुमानद्वयघटकहेतुवाक्ययोः कस्यचिदंशस्य वैयर्थ्येनाविवक्षाया आवश्यकत्वे सति त्वदुक्तहेतुवाक्ये दौहित्रभागिनेययोर्द्वयोरविवक्षा कर्तव्या मदुक्तहेतुवाक्ये त्वेकस्यैव भागिनेयस्येति लाघवान्मदुक्तानुमानविषयैव व्याख्यानं युक्तमिति प्रवृत्तं वादमुपसंहरति––

तदेतत्स्पष्टमाचष्ट शाकलः—

सपिण्डापत्यकं चैव सगोत्रजमथापि वा ।
अपुत्रको द्विजो यस्मात्पुत्रत्वे परिकल्पयेत् ॥
समानगोत्रजाभावे पालयेदन्यगोत्रजम् ।
दौहित्रं भागिनेयं च मातृष्वसृसुतं विना ॥ इति ।

एतेन भागिनेयपदं दौहित्रमातृष्वस्रेययोरुपलक्षणमिति स्पष्टमेव सिद्धम् । युक्तं चैतत् । विरुद्धसंबन्धस्य त्रिष्वपि समानत्वादित्यलं बहुना ।

---

**तस्मादिति** । स्वोक्तव्याख्यान ऋष्यन्तरसंमतिं प्रदर्शयन्नाह—**तदेतदिति** । **सपिण्डापत्यकमिति** । **पालयेदिति** । अत्र कर्तृवाचकमपुत्रको द्विज इति विशिष्टं पदं संबध्यते । तथा च समानगोत्रजलाभासंभवे भिन्नगोत्रीयमपि सुतं पालयेत्पुत्रत्वेन गृह्णीयादित्यर्थः । किमविशेषणान्यगोत्रजं पालयेदित्युच्यते, नेत्याह—**विनेति** । अन्यगोत्रजानां मध्ये दुहितुः पुत्रं भगिनीपुत्रं मातृष्वसुः पुत्रं च वर्जयित्वाऽन्यमन्यगोत्रजं पालयेदित्यर्थः । अत्र द्विज इति दौहित्रं भागिनेयमिति च पदमुपाददानः शाकलर्षिः स्पष्टमेव दौहित्रभागिनेययोस्त्रैवर्णिकसुतत्वाभावमाचष्टे । तथा च शूद्रैरेव दौहित्रभागिनेयौ पुत्रीकार्यावित्येव नियमाकारः संपद्यत इति भावः । **एतेनेति** । उक्तनियमाकारस्यैव न्याय्यत्वेन । ब्राह्मणादित्रये नास्तीत्यत्र भागिनेयपदं न केवलं दौहित्रस्योपलक्षणं किंतु मातृष्वसेयस्याप्युपलक्षणमिति स्पष्टमेव सिध्यति । **युक्तं चैतदिति** । दौहित्रादीनामपुत्रीकरणं युक्तियुक्तमित्यर्थः । तामेव युक्तिं प्रदर्शयितुमाह—**विरुद्धसंबन्धस्येति** । विरुद्धसंबन्धं स्वयमेवाग्रे मूल एव वर्णयिष्यति । अस्यायं भावः—यत्र ग्राहकस्य ग्राह्यमातुश्च मिथो नियोगादिशास्त्रीयमार्गेण दांपत्यसंबन्धः संभवत्सोऽयं संबन्धो ग्राह्यपुत्रोत्पत्त्यनुकूलत्वादविरुद्धसंबन्धः । नियोगादीत्यादिपदेन ' बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यताम् ' इति वचनाद्धनादेर्वेतनरूपेण दानं ग्राह्यम् । तादृशाविरुद्धसंबन्धपूर्वको यः सपिण्डादिस्तस्य पुत्रीकरणमुचितम् । पितापुत्रत्वसंबन्धस्य दांपत्यसंबन्धपूर्वकत्वनियमात् । यथा भ्रातृपुत्रः । भ्रातृपुत्रस्य साक्षाज्जनन्यां मातरि ग्राहकस्य पितृव्यस्य नियोगादिना शास्त्रीयेण मार्गेण रतिः ( दांपत्यसंबन्धः ) संभवतीति सोऽयं ग्राहकग्राह्यमात्रोः ( संभाविदांपत्य )संबन्धः शास्त्रीयपुत्रोत्पत्त्यनुकूल इति ग्रहीष्यमाणपुत्रे स्वयमुत्पादनयोग्यत्वरूपाविरुद्धसंबन्धसत्त्वात्तादृश एव पुत्रत्वेन ग्राह्यो भवति । एवं चैतादृग्रतिसंभावनमेव जिघृक्षितपुत्रे स्वयमुत्पादनयोग्यत्वमिति तात्पर्यम् । यत्र च ग्राहकस्य ग्राह्यमातुश्च परस्परं नियोगादिना रतिः ( दांपत्यसंबन्धः ) न

संभवति विरुद्धसंबन्धाक्रान्तत्वात्सोऽयं विरुद्धसंबन्धः शास्त्रीयपुत्रोत्पत्तिप्रतिकूलत्वाद्विरुद्धसंबन्ध इत्युच्यते । ततश्च पितापुत्रत्वसंबन्धस्य दांपत्यसंबन्धपूर्वकत्वाद्दांपत्यसंबन्धश्च यत्र वक्तुमसंभवी तत्र विरुद्धसंबन्धावश्यंभावाद्विरुद्धसंबन्धस्य च ग्राह्यशास्त्रीयपुत्रोत्पत्तिप्रतिकूलत्वाद्ग्रहीष्यमाणपुत्रे स्वयमुत्पादनायोग्यत्वरूपविरुद्धसंबन्धो वर्तत इति कृत्वा तादृशविरुद्धसंबन्धाक्रान्तः पुत्रो न ग्राह्यो भवति । निरुक्तरत्यसंभावनमेव च जिघृक्षितपुत्रे स्वयमुत्पादनायोग्यत्वमिति भावः । यथा दौहित्रः । अत्र ग्राहकस्य मातामहस्य जिघृक्षितदौहित्रसाक्षान्मातुश्च मिथो नियोगादिशास्त्रीयमार्गेण रतिर्न संभवति, ग्राहकस्य ग्राह्यमातृनिरूपितपितृत्वाद्ग्राह्यमातुश्च ग्राहकनिरूपितपुत्रीत्वादित्येवमुभयोः पितापुत्रीत्वरूपविरुद्धसंबन्धाक्रान्तत्वात्सोऽयं ग्राहकग्राह्यमात्रोर्दांपत्यसंबन्धासंभावकः पितापुत्रीत्वसंबन्धः पुत्रोत्पत्तिप्रतिकूल इति ग्रहीष्यमाणे पुत्रे दौहित्रे स्वयमुत्पादनायोग्यत्वरूपविरुद्धसंबन्धसत्त्वात्तादृशविरुद्धसंबन्धाक्रान्तो दौहित्रः पुत्रत्वेन ग्रहणानर्ह इति भावः । एवं ग्राहकस्य जिघृक्षितभागिनेयमातृष्वस्रीयमात्रोश्च परस्परं नियोगादिशास्त्रीयमार्गेण रतिः ( दांपत्यसंबन्धः ) न संभवति, ग्राहकस्य क्रमेण ग्राह्यमातृनिरूपितभ्रातृत्वभागिनेयत्वाद्ग्राह्यमात्रोश्च ग्राहकनिरूपितभगिनीत्वमातृष्वसृत्वादित्येवं द्वयोर्विरुद्धसंबन्धाक्रान्तत्वात् । सोऽयं विरुद्धसंबन्धः पुत्रोत्पत्तिं प्रति प्रतिकूल इति ग्रहीष्यमाणयोर्भागिनेयमातृष्वस्रीययोः स्वयमुत्पादनायोग्यत्वरूपविरुद्धसंबन्धसत्त्वात्तादृशविरुद्धसंबन्धाक्रान्तयोस्तयोरपि पुत्रत्वेन ग्रहणं न युज्यत इति । तथा च दौहित्रभागिनेयमातृष्वस्रीयेषु त्रिषु नियोगादिना स्वयमुत्पादनायोग्यत्वरूपस्य विरुद्धसंबन्धस्याविशेषेणावस्थितत्वाद्दौहित्रादीनां पुत्रीकरणमयुक्तमिति युक्तमिति शेषः एवं न केवलं त्रयाणामेव पुत्रीकरणानर्हत्वमिति मन्तव्यमपि तु यत्र यत्रैवं विरुद्धसंबन्धो भवति तस्य सर्वस्यापि पुत्रीकरणानर्हत्वं बोध्यम् । एतदभिप्रायेणैव निर्णयसिन्धुटीकायां भागिनेयपदस्य पुत्रत्वबुद्ध्यनर्हभ्रातृपितृव्यमातुलाद्युपलक्षणतोक्ता संगच्छते । **अलमिति** । बहूनोक्तेनालमित्यर्थः । बहूक्तेः प्रयोजनं नास्तीति यावत् ।

एवं च दत्तकमीमांसाकारो नन्दपण्डितः शूद्रस्यैव दौहित्रभागिनेयौ द्वौ नेतरस्य त्रैवर्णिकस्येति नियमं प्रतिपन्नवान् । तदेतद्वृद्धा न मन्यन्ते । ब्राह्मणाय गां दद्यादित्यादाविव ब्राह्मणादेर्भूतभाव्युपयोगाभावाद्गुणत्वेन विधेयत्वान्नियमविधिविषयता युज्यते । न तु ' दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते ' इत्यत्र शूद्रस्य सा युज्यते । भाव्युपयोगित्वाद्गुणत्वेनाविधेयत्वादविधेये च नियमविध्यसंभवात् ।

नान्यजातीयः पुत्रीकार्य इत्युक्तं तदतिक्रमे कथमित्यत आह शौनकः—

---

ननु स्वतः सिद्धत्वेन कथं शूद्रो भाव्युपयोगीति चेत् । उच्यते—'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' इति श्रुतौ ब्राह्मणग्रहणमुपलक्षणमित्युक्तं 'ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्' ( जै० न्या० ६ । २ । ३१ ) इत्यधिकरणे । एवं च व्रीहीनवहन्तीत्यत्र व्रीहीणां स्वरूपेणाभाव्यत्वेऽपि संस्कारवत्तयोऽवहननभाव्यत्ववच्छूद्रस्य स्वरूपेणाभाव्यत्वेऽपि पितृऋणापाकरणविशिष्टत्वेन भाव्यत्वं 'शूद्रस्यापि च दीयते' इति चतुर्थ्यर्थषष्ठ्या भवति । यथा 'दण्डी प्रैषानन्वाह' इति दण्डित्वेन प्रैषानुवचने मैत्रावरुणस्य विनियोगात्प्रैषानुवचनकर्तृत्वेन भाव्युपयोगिनो मैत्रावरुणस्यैव 'मैत्रावरुणाय दण्डं प्रयच्छति' इति दण्डितया भाव्यत्वं चतुर्थ्या । ततश्च यथा तत्र दण्डस्य यजमानसंस्कारेण कृतकरस्यापि भाव्यत्वं त्यक्त्वा 'यजमानः स्वदण्डदानेन मैत्रावरुणं भावयेत्' इति वाक्यार्थे दण्डस्य विधेयत्वम्, एवमिह 'पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम्' ( म० स्मृ० ९ । १३७ ) इति संभवत्यपि पुत्रस्य भाविविनियोगत्वेन भाव्यत्वे तत्त्यक्त्वा दौहित्रभागिनेयदानेन शूद्रं भावयेदिति वाक्यार्थे दौहित्रभागिनेययोर्विधेयत्वेन तयोरेव नियमविधिविषयत्वं युक्तम् । शूद्रस्य तु शेषितया तन्नियमे परिसंख्याऽऽपद्येत । यथा 'इमामगृभ्णन्रशनामृतस्य' इत्यश्वाभिधानीमादत्त इति । सा च त्रिदोषा । न चैकत्र वाक्ये नियमपरिसंख्ययोः संभवः । तस्माद्दौहित्रभागिनेयावेव शूद्रस्येत्येव नियमः । न चैवं दौहित्रभागिनेयनियमाच्छूद्रस्य तद्व्यतिरिक्तो दत्तको न स्यादेवेति वाच्यम । शौनकेनैव शूद्राणां शूद्रजातिष्विति नियमनात् 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' ( या० स्मृ० २ । १३३ ) इति याज्ञवल्क्येनापि सजातीयत्वनियमनाद्दौहित्रत्वशूद्रत्वयोश्च परस्परव्यभिचारात्सामान्यविशेषभावेनोपसंहारस्याप्ययोगाद्वैयर्थ्यपरिहारार्थं दौहित्रभागिनेयातिरिक्तशूद्रविधानार्थत्वे शूद्रवाक्यस्य निर्णीते दौहित्रभागिनेययोः पूर्वत्र स्वावयवानामुत्तरत्र स्वपित्रवयवानामनुवृत्तेरन्तरङ्गत्वात्तावेव मुख्यौ । तदसंभवे त्वन्योऽपि सजातीयः पुत्रो भवत्येव । न चैवं शिष्टाचारविरोधोऽपि । न चेदं जातिपदं दौहित्रभागिनेययोरुपसंहियतामिति वाच्यम् । तथा सत्येकस्यां स्मृतौ सामान्यवाक्यवैयर्थ्यापत्तेः । एवं च ब्राह्मणादिभिरपि दौहित्रभागिनेयौ ग्राह्यौ बाधकाभावादिति धर्मद्वैतनिर्णये भट्टनारायणात्मजशंकरभट्टा निर्णयसिन्धुटीकायां कृष्णंभट्टाश्च निरचैषुः ।

'सर्वेषां चैव वर्णानां जातिष्वेव न चान्यतः' इति शौनकेन नान्यजातीयः

यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् ।
अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत् ॥ इति ।

अन्या ग्रहीत्रपेक्षयोत्कृष्टाऽपकृष्टा वा जातिर्यस्येत्यसौ गृहीतो विधि-

---

पुत्रत्वेन प्रतिग्राह्य इत्युच्यते तदुल्लङ्घ्य यद्यन्यजातीयः पुत्रो गृहीतो भवेत्तदा किं कर्तव्यमित्यत आह—**यदि स्यादिति** । **अन्यजातीय इति** । अन्या जातिर्यस्येत्यर्थे बहुव्रीहिः । तेन जात्यन्तशब्दस्य जात्याश्रयद्रव्यवाचकत्वं संपद्यत इति 'जात्यन्ताच्छ बन्धुनि' ( पा० सू० ५ । ४ । ९ ) इति स्वार्थिकश्छप्रत्ययः सिध्यति । बन्धुनि वर्तमानाज्जातिशब्दान्तात्प्रातिपदिकात्स्वार्थे छप्रत्ययो भवतीति तदर्थः । बन्धुशब्दश्च बध्यते व्यज्यते ब्राह्मणत्वादिजातिर्यस्मिन्निति व्युत्पत्तेर्द्रव्यवाची । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ( उणा० सू० १ । १० ) इत्युणादिसूत्रेणाधिकरण उप्रत्ययः । तदेतदुक्तं कौमुद्यामेव भट्टोजीदीक्षितैः— 'जातेर्व्यञ्जकं द्रव्यं बन्धु' इति । तदेतदभिप्रेत्य बहुव्रीहिसमासं प्रदर्शयन्नाह— **अन्या ग्रहीत्रपेक्षयेत्यादि** । अन्यत्वस्य निरूपितार्थत्वान्निरूपितार्थस्य च निरूपकाकाङ्क्षायामुपस्थितत्वाद्ग्रहीतृनिष्ठा जातिर्गृह्यते । ग्रहीतृनिष्ठजात्यपेक्षया ग्राह्यनिष्ठजातेरन्यत्वमुत्कृष्टत्वेनापकृष्टत्वेन वा कथमपि भवतु न तत्राऽऽग्रह इत्याशयेनाऽऽह—**उत्कृष्टाऽपकृष्टा वेति** । तादृशमन्यजातीयं विधिनाऽपि गृहीतं सन्तमंशभाजं न कुर्यादित्यर्थः । विधिनाऽपरिगृहीतस्य तु सुतगमंशभाक्त्वाभाव इत्येतद्विधिनाऽपीत्यपिशब्देन दर्शितम् । अत्र परिगृहीतमन्यजातीयसुतमुद्दिश्य धनांशग्राहित्वं प्रतिषिध्यत इत्यन्यजातीयसुतस्योद्देश्यत्वेनोपादानादेव तस्य पुत्रीकरणमाक्षेपादेव सिद्धमिति न मन्तव्यम् । अन्यजातीयपुत्रीकरणस्य 'सर्वेषां चैव०' 'अन्यत्र तु न कारयेत्' इत्यादिना निषिद्धत्वात् । किंतु येनाज्ञानतो ज्ञानतो वा निषेधमुल्लङ्घ्यान्यजातीयः पुत्रीकृतस्तस्य धनांशाभावकथनेन ग्रासाच्छादनमात्रं 'प्रतिलोमप्रसूतो यस्तस्याः पुत्रो न रिक्थभाक् । ग्रासाच्छादनमात्रं तु देयं यद्बन्धुभिर्मतम् ॥ इति । तथा 'असवर्णास्तु ग्रासाच्छादभागिनः' इति कात्यायनायुक्तं देयमित्यर्थे तात्पर्यात् । एवं च ग्रहीत्रपेक्षया भिन्नजातीयस्योत्कृष्टस्यापकृष्टस्य च धनांशहरत्वनिषेधाभिधानेन पुत्रत्वप्राप्तिहेतुः पिण्डदत्वं धनहरत्वं च न केवलः प्रतिग्रह इति सूचितमिति भावः ।

ननु यद्यन्यजातीयः सर्वथा पुत्रीकरणानर्हस्तर्हि गृहीतोऽप्यपुत्र एवेतीतरवत्तस्य ग्रासाच्छादनमात्रविधानमप्यनुपपन्नमिति चेदुच्यते । अंशभाजमित्यंशपदमुपाददता समग्रधनभागित्वं तस्य सुतरां नास्तीति स्पष्टमेव सूचितम् । समग्रद्रव्यग्राहित्वाभावेऽप

नाऽपीत्यर्थः। अंशो धनस्य। अंशपदसामर्थ्यात्कृत्स्नधनव्युदासोऽर्थसिद्ध एव।

यत्किंचिद्धनभागित्वं संभवेच्चेत्तदप्याशामोदककल्पम्। 'अंशभाजं न तं कुर्यात्' इत्यनेन यत्किंचिद्धनांशभागित्वस्यापि स्पष्टं निषेधात्। एतावताऽन्यजातीयस्य पुत्रीकरणनिषेध एव दृढीकृतः। ततश्चान्यजातीयो नैव पुत्रीकर्तव्य इत्येव पर्यवस्यति। यदपि कात्यायनादिना ग्रासाच्छादनमात्रभागित्वमुक्तं तस्मादपि नान्यजातीयस्य पुत्रीकरणेऽनुज्ञामात्रस्यापि प्रत्याशा कर्तव्या। ग्रासाच्छादनमात्रस्य विधाने कात्यायनादेर्हेतुद्वयं लक्ष्यते। विधिना गृहीतायाप्यन्यजातीयाय यत्किंचिदपि धनं दातुं शास्त्रानुज्ञा नास्ति। अतोऽन्य एव तादृशः पुत्रो ग्राह्यः, यः समग्रं पुत्रकार्यं कर्तुं शक्नुयान्मद्धनं च कृत्स्नं गृह्णीयात्। गृहीतस्यान्यजातीयस्य च यत्किंचिदपि द्रव्यं नैव देयमिति प्रतिग्रहीता मन्येत। तत्रान्यजातीयपुत्रीकरणनिषेधोल्लङ्घनरूपापराधप्रयुक्तदण्डार्थमिव ग्रासाच्छादनमात्रं प्रतिग्रहीत्रा गृहीतायान्यजातीयाय देयमित्युक्तमित्येको हेतुः। अन्यश्च यथा 'नैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा' इत्ययं निषेधो दातुः प्रतिग्रहीतुश्चोभयोः स्पष्टमुक्तः, नैवमयं तथा। नान्यजातीयं पुत्रीं कुर्यादिति ग्रहीतुरयं प्रतिषेधः। नान्यजातीयं दद्यात्, इति स्पष्टं निषेधाभावात्। 'माता पिता वा दद्याताम्' ( म० स्मृ० ९। १६८ ) इत्यत्र सदृशमित्यस्य गुणैः सदृशमित्यर्थस्य मेधातिथिनाऽभिहितत्वात्। न च पुत्रीकरणं नाम पुत्रनिष्ठपरस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलो व्यापारः। जिघृक्षितपुत्रनिष्ठं यत्परदेवदत्तादिनिरूपितं स्वत्वं तन्निवृत्तिपूर्वकं यत्स्वचैत्रादिग्रहीतृनिरूपितं पुत्रनिष्ठत्वेन जनिष्यमाणं स्वत्वं ममभावस्तदुत्पत्त्यनुकूलो व्यापारः—पुत्रं मे देहीति याचनमिति तदर्थः। तादृशस्वस्वत्वोत्पत्तिश्च परकर्तृकदानमन्तरेण न सिध्यति। न हि पुत्रं मे देहीति याचनमात्रेण तत्र स्वस्वत्वमुत्पत्तुमर्हति। किंतु याचितो यदि ददाति तर्ह्येव तन्निर्वहतीति पुत्रीकरणक्रियया परकर्तृकदानमपि नान्तरीयकत्वादाक्षिप्यते। ततश्च नान्यजातीयं पुत्रीं कुर्यादित्यनेनैवान्यजातीयपुत्रप्रतिग्रहस्येवान्यजातीयपुत्रदानस्यापि निषेधः सिध्यतीति वाच्यम्। यावद्वाचनिकं प्रमाणमिति न्यायादाक्षेप आक्षिप्तस्य च शाब्देऽन्वये प्रमाणाभावात्। अन्यथा घटमानयेत्यस्माद्घटानयनस्येवाऽऽकाशानयनस्यापि बोधापत्तेः। न च लोके तथा बोधोऽनुभूयत इत्यननुभवान्नाऽऽक्षेपो नाप्याक्षिप्तस्य शाब्दान्वय इति भावः। किंचैकस्यां निषेधक्रियायां पुत्रप्रतिग्रहपुत्रदानयोरुभयोरन्वये निषेध्यवाक्यभेदापत्तिः। न च पुत्रदानविशिष्टस्य पुत्रपरिग्रहस्य निषेधेऽन्वयेन विशिष्टान्वयान्न वाक्यभेदः। तथा च विशिष्टस्यैव वैशिष्ट्यं स्वी क्रियतामिति वाच्यम्। निषेधस्य निषेध्यसाकाङ्क्षतया साक्षा-

असवर्णा[illegible] ग्रासाच्छादनभाजना इति कात्यायनस्मरणात् । पिण्डदोंऽशहरश्चै-षामित्यु[illegible] 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' इति योगीश्वरस्मरणाच्च ।

---

च्छ्रुतस्य पुत्रप्रतिग्रहस्यान्वयेनाऽऽकाङ्क्षाया निवृत्तौ सत्यामश्रुतस्य पुत्रदानस्यान्वयासंभवेन वि[illegible]र्विशिष्टस्य सुतरामनुपपतेः । कथं तर्हि ' परस्वत्वापादनस्य च परप्रतिग्रहं [illegible]ऽनुपपत्तेस्तमप्याक्षिपति ' इति मूल एव ग्रन्थकारेणोच्यत इति चेत् । तदुपपत्तिस्तद्[illegible]व्याख्यानावसरे वक्ष्यते । ततश्च योऽन्यजातीयोऽन्यजातीयस्य पुत्रीभूतस्तत्रान्य[illegible] पुत्रीकुर्वतोऽपराधो नान्यजातीयस्य पुत्रीभवितुरिति तादृशस्य पुत्रीभूतस्य निरप[illegible]स्य ग्रहीतुर्धनांशलाभाभावेऽपि तदुदरपूर्तिपर्याप्तमपि किंचिद्देयमुचितमित्याकलय्य ग्रासाच्छादनं विहितमिति । एतावतेदं वचनमन्यजातीयस्य पुत्रीकरणेऽनुज्ञामात्रस्याप्याक्षेपकं न भवति प्रत्युत निषेधदार्ढ्यमेव संपादयति । तदेतन्मया धाष्टर्येनोक्तं युक्तं चे[illegible]ग्राह्यम् । इतरथा ' ममत्वमुच्चैः शिरसां सतीव ' इति न्यायेन श्रीमतां सविधे क्षमा नित्यं कृतसंनिधानैव । यतो ग्रन्थकारेण ' नान्यजातीयः पुत्रीकार्य इत्युक्तं तदतिक्रमे कथम् ' इत्युक्तं ततोऽयमदृष्टचरः कल्पनाप्रयत्नोऽङ्गीकृतः । अंशभाजं न तं कुर्यादिति स्वोक्तेऽर्थे ऋष्यन्तरसंमतिं प्रदर्शयंस्तमनुकूलयति---**असवर्णास्त्वित्यादिना योगीश्वरस्मरणाच्चेत्यन्तेन** । पूर्वस्य पूर्वस्याभावे यत्परस्य परस्य पिण्डदातृत्वमंशहरत्वं चोक्तं तत्तनयानां सजातीयत्वे सत्येवेति बोध्यमित्यर्थः । दत्तकचन्द्रिकाकारस्तु ' जातिष्वेव न चान्यतः ' नान्यजातीयः पुत्रीकर्तव्य इत्ययं नियमो न सर्वथा विजातीयनिषेधार्थः, किंतु सजातीयसंभवे विजातीयनिषेधार्थः । ' असवर्णास्तु ग्रासाच्छादनभागिनः, इति कात्यायनवचनविरोधादित्याह । तस्यायं भावः-नानेन कात्यायनवचनेनान्यजातीयानां पुत्रीकरणं विधीयते, किंतु पुत्रीकृतांस्तानुद्दिश्य ग्रासाच्छादनभागित्वं विधीयते । ततश्च यद्ययं नियमः सर्वथा विजातीयनिषेधार्थः स्यात्तर्हि विजातीयपुत्रीकरणस्याप्रसिद्धत्वात्तदुद्देशेन ग्रासाच्छादनविधानमनुपपन्नमिति विरोधः । एवं च विजातीयस्य पुत्रीकरणं विना ग्रासाच्छादनविधानानुपपत्तेर्विजातीयपुत्रीकरणस्य च नियमसं[illegible]वं विनाऽनुपपत्तेः सजातीयलाभसंभवे विजातीयनिषेधार्थो नियम इत्येवं कल्प्यत इति ।

अत्रेदं चिन्त्यताम्---निरुक्तरीत्या निषेधसंकोचनेन परिगृहीतेऽन्यजातीये सजातीय इव पुत्रत्वमुत्पद्यते न वा ?। आद्ये ' सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ' इति ' सजातीयः सुतो ग्राह्यः पिण्डदाता स रिक्थभाक् ' इति

चाऽऽहत्य सजातीयस्यैव पुत्रत्वप्रयोज्यपिण्डदत्वांशहरत्वाभिधानस्वारस्यभङ्गापत्तिः। अन्येऽपि ग्रासाच्छादनविधानानुपपत्तिरिति चेन्न। नान्यजातीयः पुत्रीकर्तव्य इति निषेधात् 'यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित्। अंशभाजं न तं कुर्यान्मन्वादीनां मतं हि तत्'॥ अत्र चतुर्थचरणे मन्वादीनामित्यस्य स्थाने शौनकस्येत्यपि पाठः। इति वचनेनान्यजातीयस्यांशभागित्वस्य निषेधाद्गोत्ररिक्थानुगः पिण्ड इति नियमात्पिण्डदत्वांशभाक्त्वयोर्व्याप्यव्यापकभावाद्व्यापकनिवृत्तौ व्याप्यनिवृत्तेरर्थसिद्धत्वादिति न्यायाद्व्यापकांशभाक्त्वनिषेधेन व्याप्यपिण्डदत्वस्यापि निषेधाच्च विजातीये पुत्रत्वानुत्पत्तेः सूचनात्। यथोढायां सगोत्रायां 'असमानार्षगोत्रजाम्' (या० स्मृ० १।५३) इति पर्युदासात् 'भोगतस्तां परित्यज्य पालयेज्जननीमिव' इति त्यागपरिपालनयोर्विधानाच्च भार्यात्वमेव नोत्पद्यत इत्युक्तं मिताक्षरायां तद्वदित्यर्थः। न चैवं तस्य ग्रासाच्छादनभागित्ववचनमनुपपन्नमितरवदपुत्रत्वाविशेषादिति वाच्यम्। दत्तकपुत्रत्वं नाम पिण्डदत्वांशहरत्वलोकजयादिदृष्टादृष्टजनकः स्ववंशीयत्वादिलौकिकव्यवहारप्रयोजको धर्मविशेषः, न तु स्वत्वविशिष्टजन्यपुंस्त्वरूपम्। तस्य दत्तकविधिना भाव्यत्वासंभवात्। तत्र परिगृहीते विजातीये पुत्रीकरणनिषेधोल्लङ्घनप्रयुक्तेन दुरदृष्टेन प्रतिबन्धात्पूर्वोक्तरीत्या पिण्डदत्वांशहरत्वादिदृष्टादृष्टफलकपुत्रत्वानुत्पादेऽपि लौकिकव्यवहारप्रयोजकधर्मविशेषानुत्पादे प्रमाणाभावात्। 'वंशमात्रकरः स्मृतः' इति वृद्धयाज्ञवल्क्यस्मरणात्। अत एव च ग्रासाच्छादनभागित्वं व्याजहार कात्यायनस्तेषाम्। एवं च कोऽत्र विरोधः, यद्बलान्नान्यजातीयः पुत्रीकर्तव्य इत्ययं निषेधः सजातीयला[illegible]भवे विजातीयनिषेधार्थ इति कल्प्येत। नन्वेवमस्तु स्ववंशीयत्वादिलौकिकव्य[illegible]प्रयोजकधर्मविशेषोत्पादः। परंतु तादृशधर्मविशेषोत्पादकपुत्रीकरणे कथमस्य प्रवृत्तिः। अन्यजातीयपुत्रीकरणस्य सर्वथा निषिद्धत्वेन निषिद्धे च प्रेक्षावत्प्रवृत्तेरदर्शनात्। [illegible]था च निषेधसंकोच आवश्यक इति चेद्भ्रान्तोऽसि। भ्रान्तेः पुरुषधर्मत्वादि[illegible]न्यायेनाज्ञानतो लोभादिना ज्ञानतोऽपि वा निषिद्धे प्रवृत्तेर्लोकसिद्धत्वात्। तथा च निषिद्धेऽप्यन्यजातीयस्य पुत्रीकरणेऽज्ञानादिना प्रवृत्तिसंभवेन विरोधाभावान्न ग्रास[illegible]दनविधायकं कात्यायनवचनमन्यजातीयस्य पुत्रीकरणे कथमपि साधकं भवतीति [illegible]। एवं तर्हि 'सजातीयः सुतो ग्राह्यः पिण्डदाता स रिक्थभाक्। तद[illegible] विजातीयो वंशमात्रकरः स्मृतः' इति वृद्धयाज्ञवल्क्यवचनं विजातीयस्य पुत्रीकरणे [illegible]मस्तु। अनेन वचनेन सजातीयस्य पिण्डदातृत्वरिक्थभाक्त्वमात्रमुक्तं नतु [illegible]तीयस्य पुत्रीकरणं निषिद्धम्। न च सजातीयपदश्रवणाद्विजातीयस्य निषे[illegible]भिमतः।

अन्यथा 'सुतो ग्राह्यः' इत्येतावतैव निर्वाहादिति वाच्यम् । तदभावे विजातीय इत्युक्तेः । किंतु 'वंशमात्रकरः स्मृतः' इति मात्रपदेन तस्य पिण्डदातृत्वरिक्थभाक्त्वे व्यावर्तिते । एवं चानेन सजातीयसुतालाभे विजातीयस्य ग्राह्यता स्पष्टमेवोक्ता । तथा च नान्यजातीयः पुत्रीकर्तव्य इत्ययं नियमो यदि सर्वथा विजातीयनिषेधार्थः स्यात्तदाऽस्मिन् वचने तदभावे विजातीय इत्युक्तिविरोधः स्पष्ट एवेति ।

अत्रोच्यते । तदभावे विजातीय इत्यस्य विजातीयो ग्राह्य इति नार्थः । तादृशार्थकपदादर्शनात् । विजातीयो ग्राह्यः, स च वंशमात्रकरो बोध्य इति वाक्यभेदापत्तेश्च । किंतु विजातीयो गृहीत इत्यर्थो बोध्यः । 'यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित्' इत्यनेनैकवाक्यत्वलाघवात् । अन्यथा अत्यन्तरकल्पनागौरवं स्यात् । विजातीयो गृहीतश्चेत्स वंशमात्रकरः स्मृत इत्यर्थोपपत्तेर्वाक्यभेदोऽपि न भवति । न च तादृशार्थकपदस्याप्यदर्शनात्तादृशोऽप्यर्थो वक्तुमशक्यः । अध्याह्रियत इति चेत् 'सजातीयः सुतो ग्राह्यः' इति पूर्वप्रक्रान्तानुसारेण ग्राह्य इत्यस्यैवाध्याहारोऽत्रानुवृत्तिर्वा समुचितेति वाच्यम् । विजातीयपरिग्रहस्य सर्वथा निषिद्धत्वेन तदध्याहारस्य तदनुवृत्तेर्वाऽयोग्यत्वान्न संबन्धः । न च निषिद्धत्वादेव गृहीत इत्यस्याप्ययोग्यत्वम् । ज्ञानतोऽज्ञानतो वा निषेधमुल्लङ्घ्य प्रवृत्तेर्लोकसिद्धत्वादिति दत्तोत्तरत्वात् । एवं चैतद्वचनबलादपि विजातीयस्य पुत्रीकरणे शास्त्रीयत्वप्रत्याशा न कर्तव्येति दत्तकमीमांसाकारस्याभिप्राय इति भाति ।

'मेधातिथिस्तु भार्यात्ववददृष्टरूपं दत्तकत्वं होमसाध्यम्' इत्युक्तवान् । स्त्रियाश्च होमासंभवस्तथाऽपि व्रतादिवद्विप्रद्वारा होमं कारयेदिति हरिनाथादयः । संबन्धतत्त्वेऽप्येवम् । एवं शूद्रस्यापि । 'स्त्रीशूद्राश्च सधर्माणः' इति स्मृतेः । अत एव शूद्रकर्तृकहोमो विप्रद्वारैव पराशरेणोक्तः । 'दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः । ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत्' ॥ अत्र माधवाचार्यः— 'यो विप्रः शूद्रदक्षिणामादाय तदीयं हविः शान्तिपुष्ट्यादिसिद्धये वैदिकैर्मन्त्रैर्जुहोति तस्य विप्रस्यैव दोषः । शूद्रस्तु होमफलं लभेतैव' इति व्याचचक्षे' इति निर्णयसिन्धौ तृतीयपरिच्छेदपूर्वार्धे दत्तकविधिनिरूपणे भट्टकमलाकरेणोक्तं तत्तत एवावगन्तव्यम् । विस्तरभीतेनेह व्याख्यायते । एतेन 'ब्राह्मणेन वैदिकविवाहसंस्कारपूर्वकं शूद्राय दत्तायां स्वकन्यायां कथमपि कीदृशमपि भार्यात्वं नोत्पद्यत इति तस्याः पुनरन्येन वरेण साकं विवाहो भवत्येव । तत्र न किंचिद्बाधकम् । अत एव च तादृशविवाहस्य वैधत्वं दुरपह्नवम्' इति प्रलपन्परास्तो वेदितव्यः । ब्राह्मणेन गृहीते शूद्रपुत्रे वैदिकमन्त्रकरणकहोमसाध्यादृष्टरूपदत्तकपुत्रत्वोत्पादवच्छूद्रेण वैदिक-

विवाहसंस्कारपूर्वकं गृहीतायां ब्राह्मणकन्यायां भार्यात्वोत्पत्तेः प्रतिबन्धकाभावेनावश्यं-भावात् । अत्र भार्यात्वं नोत्पद्यत इति वदन्वादी प्रष्टव्यः—किं नाम भार्यात्वं किंच तस्योत्पादकं किंच तन्निरूपकमधिकार्यादीति । तत्र ( या० स्मृ० १ । ५२—५३ )गतमिताक्षराव्याख्यायां बालंभट्टाः—' पाणिग्रहणादिसप्तपदन्तो विवाहसंस्कारो भार्यात्वोत्पादकः । भार्यात्वं च त्रिविधदृष्टादृष्टजनक आश्रमसंपत्त्या तदभावप्रयुक्तदोषाभावजनकतादृशसंस्कारजन्यधर्मविशेषः ' इत्याहुः । रति–पुत्र–मिथुनसाध्यधर्मरूपं त्रिविधं दृष्टमथ च तादृशसंस्कारजन्यातिशयरूपमदृष्टमित्यनयोर्जनकः, किंच गृहस्थाश्रमाभावप्रयोज्यो यो दोषस्तदभावस्य प्रयोजको यस्तादृश-विवाहसंस्कारजन्यो धर्मविशेषस्तद्भार्यात्वस्वरूपमिति तदर्थः । तादृशधर्मविशेष एव च दृष्टादृष्टादिफलकभार्यात्वव्यवहारप्रयोजक इति यावत् । यथा द्विजेन देवाग्नि-द्विजसाक्षिकमूढायां सगोत्रत्वादिदोषरहितायां द्विजकन्यायां तादृशविवाहसंस्काराद्योऽदृष्टोऽतिशय उत्पन्नस्तेनेयमस्य भार्याऽयं चास्याः पतिरिति व्यवहारो जायते तद्वच्छूद्रेणोढायां द्विजकन्यायां तादृशविवाहसंस्काराधीन इयमस्य भार्येति व्यवहारः स्यादेव परिगृहीते शूद्रपुत्रे पुत्रत्वमिव । न च शूद्रस्य वैदिके कर्मण्यनधिकार इति वाच्यम् । पुत्रदातुः शूद्रस्यापि दानहोमाङ्गमन्त्रेष्वनधिकारात् । दक्षिणामादाय वैदिकमन्त्रैः शूद्रस्य हविषि हूयमाने सति तस्य तत्फलभागित्वस्य माधवाचार्यैरुक्तत्वाच्च । एवं द्विजकन्यासमुद्वोढरि शूद्रे वेदमन्त्रसाध्यफलसंबन्धावश्यंभावात् । न च तत्र दक्षिणामादायेत्युक्तं विवाहे तु न शूद्रात्कन्यादाता द्विजेन दक्षिणाऽऽदत्तेति वाच्यम् । तत्र दक्षिणादानस्यावैदिके वैदिकमन्त्रैः संस्कारकरणप्रवृत्तिसाधनोपलक्षणत्वात् । अवैदिके वेदमन्त्रकरणकसंस्कारकरणे प्रवृत्तिश्च धनादानेन, स्नेहादिना तेन विनाऽपि, क्रोधादिना, भ्रान्त्योपकारेच्छया वा, येन केनापि प्रकारेण भवतु वेदमन्त्रसाध्यफलसंबन्धः शूद्रस्य भाव्य एवेत्यत्र तात्पर्यात् । नहि दक्षिणामनादायोपकारार्थं वेदमन्त्रैः शूद्रयाजनं केषामपि तान्त्रिकाणां निर्दुष्टमिति संमतम् । न च शूद्रस्य द्विजकन्यायाः प्रतिग्रहे, द्विजस्य च शूद्राय कन्यादानेऽधिकारा-भावेनानधिकारिणा कृतमकृतमेवेति रीत्या न तत्र भार्यात्वमुत्पद्यत इति वाच्यम् । ब्राह्मणस्य शूद्रपुत्रपरिग्रहे, शूद्रस्य च ब्राह्मणाय स्वपुत्रदानेऽधिकाराभावाविशेषात् । किंच ब्राह्मणस्य सुरापाननिषेधात्तत्र ब्राह्मणोऽनधिकारी सोऽपि यथेच्छं सुरां पीत्वाऽपि शुद्ध एव स्यात् । तथा ' शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ' इति स्मृतेः शूद्रागमने ब्राह्मणोऽनधिकारीति यथेष्टं शूद्रावक्त्रासवामोदमाघ्रायापि निर्धूततण्डुल इव शुद्ध एवेति सर्वोऽपि प्रायश्चित्तविधिरनर्थक इति बहु व्याकुली स्यादिति महदेत-

त्पाण्डित्यमाविष्कृतमायुष्मता । तस्मात्सगोत्रादिविवाहे ' असमानार्षगोत्रजाम् ' इति पर्युदासात्तस्यास्त्यागपालनयोर्विधानाच्च त्रिविधदृष्टाभावेन संस्कारजन्यादृष्टस्य च त्यागपालनादिसंयुक्तो यो निषेधस्तदुल्लङ्घनजानितेन दुरदृष्टेन प्रतिबन्धात्तस्यामनुत्पादात्तादृशभार्यात्वानुत्पादेऽपि तादृशदोषाभावजनकं तु तद्भार्यात्वमस्त्येव । अत एव वाग्दत्तावत्पुनर्न विवाहः ' इति बालंभट्टोक्तेर्द्विजेन दत्तकत्वेन परिगृहीते शूद्रपुत्रे ' नान्यजातीयः पुत्रीकर्तव्यः ' इति निषेधात् ' अंशभाजं न तं कुर्यात् ' इति निषेधाच्च पिण्डदत्वादिदृष्टाभावेन दत्तकविधिजन्यादृष्टस्य च निषेधातिक्रमजनितेन दुरदृष्टेन प्रतिबन्धाद्दृष्टादृष्टफलकपुत्रत्वानुत्पादेऽपि यथा वंशमात्रकरत्वप्रयोजकं तत्पुत्रत्वमस्त्येव । अन्यथा तस्य ग्रामाच्छादनभागित्वविधानानुपपत्तेः । तद्वत् ' सवर्णः श्रोत्रियो वरः ' ' सवर्णां लक्षणान्विताम् ' इत्यसवर्णनिषेधात् ' शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम ' इति मनुस्मृतेस्तत्तुल्यन्यायात ' शूद्रं शयनमारोप्य ब्राह्मणी यात्यधोगतिम् ' इति शूद्रगमने दोषोक्तेः शूद्रस्य स्वतो वेदाधिकाराभावेन च शूद्रेणोढायां द्विजकन्यायां त्रिविधदृष्टाभावेन संस्कारजन्यादृष्टस्य च निषेधातिक्रमजनितेन दुरदृष्टेन प्रतिबन्धात्तादृशभार्यात्वानुत्पादेऽप्याश्रमाभावप्रयुक्तदोषाणामभावप्रयोजकं तु तद्भार्यात्वमस्त्येव । तदनुत्पादे न किंचिदपि प्रमाणं पश्याम इति सगोत्रोढावच्छूद्रोढाया अपि द्विजकन्याया न पत्यन्तरेण विवाहो भवितुं युक्तः । यच्चोक्तं शूद्रस्य वेदे कन्याप्रतिग्रहे चाधिकाराभावः। द्विजस्य तु वेदे कन्याप्रतिग्रहे चाधिकार इत्युभयोर्विशेषान्न सगोत्रोढावच्छूद्रोढायां तादृशदोषाभावप्रयोजकमपि तद्भत्वमर्हतीति । तद्बालप्रतारणमात्रमित्यतितुच्छम् । यदि कंचिदपि विशेषमनुपादाय द्विजस्य कन्याप्रतिग्रहेऽधिकार इत्युच्यते तदा तद्वच्छूद्रस्यापि कन्याप्रतिग्रहेऽधिकारोऽस्तीति शूद्रस्य कन्याप्रतिग्रहेऽधिकाराभाव इति दुर्वचम् । यदि तु ' सवर्णां भार्यामुद्वहेत ' इत्युक्तेः शूद्रस्य द्विजकन्याप्रतिग्रहेऽधिकारो नास्तीत्युच्यते चेत ' असमानार्षगोत्रजाम् ' इति पर्युदासाद्द्विजस्यापि सगोत्रजकन्याप्रतिग्रहेऽधिकारो नास्तीति सममेव । वेदाधिकारविषये तु साक्षाद्वेदाधिकाराभावेऽपि ' दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः । ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् , इति स्मृतेर्माधवाचार्यैः शूद्रस्य वेदमन्त्रसाध्यकर्मजन्यफलभागित्वप्रतिपादनेन पूर्वमेव दत्तमुत्तरम् । एवं च सगोत्रशूद्रयोर्वरयोः कथमपि कीदृशमपि वैलक्षण्यं सुरगुरुणाऽपि दुर्वचमिति सगोत्रोढावच्छूद्रोढायामपि तादृशदोषाभावप्रयोजकं भार्यात्वमस्त्येवेत्यासेतुहिमाचलं सर्वशिष्टानां निबन्धॄणां च संमतमिति निश्प्रचम् । तथा च शूद्रेणोढायां द्विजकन्यायां भार्यात्वानुत्पादात्तस्याः

इदानीं कीदृशः पुत्रीकार्य इत्याह शौनकः–

नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन ।
बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः ॥ इति ।

एक एव पुत्रो यस्येत्येकपुत्रस्तेन तत्पुत्रदानं न कार्यम् । न त्वेवैकं पुत्रं दद्यादिति वसिष्ठस्मरणात् । अत्र स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनस्य दानपदार्थत्वात्परस्वत्वापादनस्य च परप्रतिग्रहं विनाऽनुपपत्तेस्तमप्याक्षिपति । तेन प्रतिग्रहनिषेधोऽप्यनेनैव सिध्यति। अत एव वसिष्ठः--न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वेति । तत्र हेतुमाह–स हि संतानाय पूर्वेषामिति। संतानार्थत्वाभिधानेनैकस्य दाने संतानविच्छित्तिः प्रत्यवायो बोधितः । स च दातृप्रतिग्रहीत्रोरुभयोरप्यु-

---

पत्यन्तरेण विवाहो भवत्येवेति वचनं महत्साहसमेवेत्यलं विस्तरेण ।

अथ कीदृशेन पुत्रो देयः केन च न देय इत्याकाङ्क्षायामाह शौनक एव–**नैकपुत्रेणेति**। एक एव पुत्रो यस्येत्यवधारणगर्भो बहुव्रीहिः। तादृशेन पित्रादिना तस्यैकस्यैव पुत्रस्य दानं न कर्तव्यम । अत्रर्ष्यन्तरसंमति प्रदर्शयन्नाह—**न त्वेवैकमिति** । एकस्य पुत्रस्य दानं स्ववंशक्षयापादकत्वान्न युज्यत इति भावः । अत्रेदं बोध्यम्–दानं नाम स्वकीयस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलो व्यापारः। स्वं देवदत्तः। तन्निरूपितं यत्पुत्रगतं स्वत्वं ममभावस्तव्द्यावृत्तिपुरःसरं दात्रपेक्षया परोऽन्यश्चैत्रादिः प्रतिग्रहीता तन्निरूपितं यत्पुत्रनिष्ठत्वेनोत्पादयिष्यमाणं स्वत्वं तस्य योत्पत्तिस्तदनुकूलो दास्यामीति संकल्परूपो यो देवदत्तनिष्ठो व्यापारः स दानपदार्थ इति तदर्थः। तादृशपरस्वत्वोत्पत्तिश्च परकर्तृकप्रतिग्रहमन्तरेण न सिध्यति । न हि पुत्रदानं करिष्य इत्येतावता परस्वत्वमुत्पद्यते । किंतु दीयमानं पुत्रं यदि परः प्रतिगृह्णाति तदैवोत्पद्यत इति दानक्रियया प्रतिग्रहोऽपि नान्तरीयकतयाऽऽक्षिप्यते । ततश्च न दद्यादित्यनेनैवैकपुत्रदानस्यैवैकपुत्रप्रतिग्रहस्यापि निषेधः सिध्यतीति । तदेतत्स्पष्टमुक्तं वसिष्ठेन–न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वेति। एवं चैतद्वसिष्ठवचनप्रामाण्यादेव नैकपुत्रेण कर्तव्यं पुत्रदानमित्यत्रत्यदानपदार्थेन प्रतिग्रहाक्षेपः । आक्षिप्तस्य च तस्य शाब्देऽन्वय इति भावः । **एकपुत्रदानप्रतिग्रहयोर्निषेधे** हेतुं प्रदर्शयन्नाह–**स हि संतानायेति** । अत्र पुत्रस्य संतानार्थत्वकथनेनैकस्य पुत्रस्य दाने वंशच्छेदकरणजन्यः प्रत्यवायः सूचितः । स चैकपुत्रदातृप्रतिगृहीत्रोरुभयोरपि भवति । 'स हि संतानाय पूर्वेषाम्' इति हेतुवाक्यस्यैकपुत्रदाननिषेधस्यैकपुत्रप्रतिग्रहनिषेधस्य चेत्युभयोर्हेतुमतोः शेषत्वादित्यर्थः । पुत्रदातैकपुत्रदानेन स्ववंशोच्छेदकारणीभूतः संवृत्तः, प्रतिग्रहीताऽपि तादृशैकपुत्रस्य प्रतिग्रहेण

भयशेषत्वात् । यत्तु स्मृत्यन्तरम्–

सुतस्यापि च दाराणां वशित्वमनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥ इति ।

यच्च योगीश्वरस्मरणम्–देयं दारसुतादृत इति । तदेकपुत्रविषयम् । कदाचन–आपदि । तथा च नारदः–

निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ।
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ॥
अदेयान्याहुराचार्या यच्च साधारणं धनम् ॥ इति ।

इदमप्येकपुत्रविषयमेव । वसिष्ठशौनकैकवाक्यत्वात् । तर्हि केन पुत्रो देय

तद्वंशोच्छेदकारणीभूतः संवृत्त इत्युभयोरपि वंशच्छेदप्रत्यवायो भवतीति भावः ।

ननु 'बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः' इति पुत्रदानकर्तव्यतोक्ता । परंतु साऽयुक्ता, स्मृतिषु पुत्रदानस्य निषिद्धत्वादित्याशङ्क्य निषेधस्य विशेषपरत्वं व्यवस्थापयन्नादौ तन्निषेधकस्मृतिं प्रदर्शयति–**सुतस्यापि चेति** । अयमर्थः–अनुशासने दृष्टादृष्टार्थशिक्षणे सुतस्याथ च दाराणां पित्रधीनत्वं भवति । परंतु दानेऽथ च विक्रये सुतस्य पित्रधीनत्वं नास्तीति । अत्र सुत इति षष्ठ्यर्थे सप्तमी । सुतस्येत्यर्थः । सुतस्येति च दाराणामप्युपलक्षणम् । तथा च सुतानां दाराणां च दाने विक्रये वा पितुरधिकारो नास्तीत्यनेन पुत्रदानं निषिद्धमिति भावः । 'देयं दारसुतादृते' ( या० स्मृ० २ । १७५ ) इति वदता याज्ञवल्क्येन तु पुत्रदाराणामदेयत्वं स्पष्टमेवाभिहितम । परिहरति–**तदेकेति** । यस्यैक एव पुत्रस्तादृशैकपुत्रदानं पूर्वोक्तः पुत्रदाननिषेध इत्यर्थः । एकपुत्रदानस्य वंशोच्छेदकारित्वादिति भावः । नतु सर्वथा पुत्रदाननिषेधः । तथा सति पुत्रदानविधिविरोधापत्तेः । पुत्रदाननिषेध एकपुत्रविषयकः । पुत्रदानविधिस्तु बहुपुत्रविषयक इति विधिनिषेधयोर्भिन्नविषयत्वान्न विरोध इति भावः । तदुक्तं 'बहुपुत्रेण कर्तव्यं पुत्रदानम्०' इति । **कदाचनेति** । आपद्यपीत्यर्थः । तत्रैव प्रमाणं प्रदर्शयन्नाह–**तथा च नारद इति** । ( या० स्मृ० २ । १७५–१७६ ) श्लोकटीकायां मिताक्षरायां विज्ञानेश्वरेणोद्धृते–निक्षेपः पुत्रदारं चेत्यादिवचनेऽदेयवस्तुप्रतिपादके 'आपत्स्वपि हि कष्टासु' इत्यभिधानात्कदाचनेत्यस्य निरुक्तोऽर्थो युक्त इति भावः । नन्वनेन नारदवचनेनाविशेषेण पुत्रस्यादेयताया उक्तत्वाद्बहुपुत्रकर्तृकपुत्रदानमप्ययुक्तमित्याशङ्क्याऽऽह–**इदमपीति** । 'नैकपुत्रेण कर्तव्यं पुत्रदानम्०' 'नत्वेवैकं पुत्रं दद्यात्' इति शौनकवसिष्ठाभ्यामेकवाक्यत्वबलान्नारद-

इत्यत आह—बहुपुत्रेणेति। बहवः पुत्रा यस्येति स बहुपुत्रः। नैकपुत्रेणेति निषेधाद्द्विपुत्रस्यैव दानप्राप्तौ यद्बहुपुत्रेणेत्युच्यते तद्द्विपुत्रस्यापि तत्प्रतिषेधाय।

एकपुत्रो ह्यपुत्रो मे मतः कौरवनन्दन।
एकचक्षुर्यथाऽचक्षुर्नाशे तस्यान्ध एव हि॥

इत्यादि भीष्मं प्रति शंतनूक्तेः। बहुपुत्रेणेति पुंस्त्वश्रवणात्स्त्रियाः पुत्रदानप्रति-

---

वचनमप्येकपुत्रविषयकमेवेति निश्चीयत इत्यर्थः। अन्यथा श्रुत्यन्तरकल्पनयाऽतिगौरवं स्यादिति भावः।

ननु बहुपुत्रेणेति न वक्तव्यम्। एकपुत्रकर्तृकपुत्रदानस्य निषेधेन द्व्यादिपुत्रकाणां पुत्रदानेऽप्रतिबन्धादनायासत एव बहुपुत्रकर्तृकपुत्रदानस्य सिद्धत्वात्। तत्रूच्यमानं 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेन द्विपुत्रकस्य पुत्रदानं निवर्तयति। पुत्रद्वयमध्य एकस्य पुत्रस्य दाने कृत एक एव पुत्र उर्वरित इति स्वस्यैकपुत्रवत्त्वं संपद्यते। एकपुत्रवत्त्वं चापुत्रत्वसममेव। एकपुत्रो ह्यपुत्रो मे मतः कौरवनन्दन। एकं चक्षुर्यथाऽचक्षुर्नाशे तस्यान्ध एव हि॥ इति भीष्ममुद्दिश्य शंतनोरुक्तेः। एवं च तादृशेन पुत्रवता पुत्रदानं कर्तव्यं भवति येन पुत्रदानेन स्वस्य सर्वथाऽपुत्रत्वमेकपुत्रत्वं वा न घटेत। एकपुत्रेण पुत्रदाने कृते स्वस्य निर्वंशः स्यादिति स्पष्टमेव। पुत्रद्वयवता पुत्रे दत्ते सति यद्यप्येकपुत्रदानवत्सद्य एव साक्षान्निर्वंशो न भवति तथाऽप्युर्वरितस्यैकस्य यदि कदाचिद्दैवदुर्विपाकान्नाशः स्याच्चेन्निर्वंशत्वं प्रसज्येतेति भावि सांभावनिकं निर्वंशत्वं पर्यालोच्याप्येकपुत्रेणेव पुत्रद्वयवताऽपि पुत्रदानं न कार्यम्। न केवलं साक्षान्निर्वंशता पुत्रदानप्रतिबन्धिका किंतु निर्वंशतासंभावनाऽपि पुत्रदानप्रतिबन्धिकेत्यर्थः। तदेतदेकचक्षुर्दृष्टान्तेन शंतनूक्त्या स्फोरितम्। तथा च यत्र पुत्रदाने प्रात्यक्षिकी सांभावनिकी वा निर्वंशता न घटेत तादृशेनैव पुत्रवता पुत्रदानं कर्तुमर्हमिति मनस्यनुसंधायोक्तम्—बहुपुत्रेण कर्तव्यमिति। बहुपुत्रकर्तृकपुत्रदानस्थले न प्रात्यक्षिकी निर्वंशता घटितुमर्हति। एकस्मिन् दत्तेऽपि पुत्रद्वयावशेषात्। नापि सांभावनिकी, पुत्रद्वयावशेषादेवेति बोध्यम्। पुंस्त्वश्रवणादिति। बहवः पुत्रा यस्य पुंस इत्यर्थे बहुव्रीहौ कृते पुंस्त्वविशिष्टार्थप्रतिपादकाद्बहुपुत्रशब्दात्तृतीयैकवचने टाप्रत्यय इनादेशे च बहुपुत्रेणेत्यस्य सिद्धत्वात्पुंस्त्वश्रवणमित्यर्थः। पुंस्त्वश्रवणेन च बहुपुत्रस्य पुंस एव पुत्रदानाधिकारावगमादथ न पुंस्त्वश्रवणेनैव पुत्रदानविधौ कर्तृत्वेन स्त्रिया असंबन्धस्य स्फोरणाच्च स्त्रियाः पुत्रदानप्रतिषेधः पर्यवस्यतीत्यर्थः।

ननु बहुपुत्रेणेति पुंस्त्वश्रवणात्पुत्रदानविधौ कर्तृत्वेन स्त्रीसंबन्धो नास्तीत्युक्तं तथ

षेधः । अत एव वसिष्ठः—न स्त्री पुत्रं दद्यादिति नैरपेक्ष्यश्रवणात् । भर्त्रनुज्ञाने

---

युज्यते । बहुपुत्रश्च बहुपुत्रा चेत्येवं स्त्रिया सह पुंस उक्तौ विवक्षितायां 'पुमान् स्त्रिया' ( पा० सू० १।२।६७ ) इत्येकशेषे कृते स्त्रीसंबन्धसंभवादिति चेन्न । तथा सत्येकशेषेण बहुपुत्रा, इति स्त्रीवाचकशब्दस्य निवृत्तावपि यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन कृतैकशेषाद्बहुपुत्रशब्दाद्द्विवचनं कृतं स्यात् । तत्तु न कृतं, किंत्वेकवचनमेव कृतम् । तस्मादेवं ज्ञायते यत्पुत्रदानविधौ कर्तृत्वेन स्त्रीसंबन्धो नास्तीति । नन्वेवं स्त्रियाः पुत्रदानाधिकार एव नास्तीति वक्तुमुचितं, कथमुक्तं 'स्त्रियाः पुत्रदानप्रतिषेधः' इत्याशङ्क्याऽऽह—न स्त्री पुत्रमिति । तथा चानेन पुत्रदानस्य निषेधान्निषेधस्य च प्राप्तिपूर्वकत्वादधिकारो नास्तीति कल्पनस्यायोग्यत्वेन स्त्रियाः पुत्रदानप्रतिषेध इत्युक्तमित्यर्थः । एवं च निषादस्थपतिन्यायेन निषेधान्यथानुपपत्त्या स्त्रियाः पुत्रदानाधिकारोऽस्तीति सिध्यति । स चाधिकारो भर्त्रनुज्ञासापेक्षस्तन्निरपेक्षो वेति वीक्षायां बहुपुत्रेणेत्यत्र पुंस्त्वश्रवणेन पत्नीनिरपेक्षस्य बहुपुत्रस्य पुंसः पुत्रदानाधिकारवन्न स्त्रीति स्त्रीत्वश्रवणेन भर्तृनिरपेक्षायाः स्त्रियाः पुत्रदानप्रतिषेधश्रवणात्तदन्यथानुपपत्त्या कल्प्यमानः पुत्रदानाधिकारोऽपि भर्तृनिरपेक्षाया एव कल्प्यत इति केचिद्वदन्ति । न च निरुक्तपुत्रदाननिषेधकवसिष्ठवाक्येऽग्रेऽन्यत्रानुज्ञानाद्भर्तुरित्युक्तत्वेन भर्त्रनुज्ञाया असत्त्वे न स्त्री पुत्रं दद्यात्, भर्त्रनुज्ञायाः सत्त्वे तु दद्यादित्यर्थप्रतीत्या भर्त्रनुज्ञासापेक्ष एव स्त्रियाः पुत्रदानाधिकारो न तन्निरपेक्ष इति वाच्यम् । 'न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः' इत्येवं प्रतिगृह्णीयाद्वेत्यनन्तरमन्यत्रानुज्ञाद्भर्तुरित्यस्य पठितत्वेनानन्तरत्वात् 'न प्रतिगृह्णीयात्' इत्यनेनैव तदन्वयो न व्यवहितेन 'न स्त्री पुत्रं दद्यात्' इत्यनेनेति तदाशयात् । न चैवं स्त्रियाः स्वातन्त्र्येण पुत्रदानाधिकाराङ्गीकारेऽपि तस्य न स्त्री पुत्रमित्यनेन निषेधात्तदङ्गीकारो विफलः स्यादिति चेत्—उभयोश्चारितार्थ्याय विषयभेदः कल्प्यते । स्वातन्त्र्येणाधिकारो विधवाविषयकः । निषेधस्तु सधवाविषयक इति । एवं चात्र मते पत्न्यनुमत्यभावेऽपि भर्तुः स्वातन्त्र्येणाधिकारः । पत्नी तु जीवतु म्रियतां वा । तथा पत्न्या अपि स्वातन्त्र्येण पुत्रदानाधिकारः । तत्रायं विशेषः—यदि भर्ता जीवति तदा 'न स्त्री पुत्रं दद्यात्' इति निषेधः प्रवर्तते । यदि च मृतस्तर्हि निषेधो न प्रवर्तत इत्यर्थात्स्त्रिया भर्तृमरणोत्तरं स्वातन्त्र्येणाधिकारः । भर्ता चानुज्ञां दत्त्वाऽदत्त्वा वा मृतो भवत्विति । दद्यान्माता पिता यं वेत्यादि न पुत्रदानविधायकम् । यच्छब्दघटितत्वेन यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्युक्तोद्देश्यलक्षणाक्रान्तत्वात् । तच्छब्द एवकारश्च स्यादुपादेयलक्षणमिति

लक्षणानुसारेण तच्छब्दघटितत्वेन 'स ज्ञेयो दत्त्रिमः सुतः' इत्यस्य विधेयत्वावगमाच्च। 'शुक्रशोणितसंभवः पुत्रः' इति वसिष्ठवचनं न स्वातन्त्र्येण पुत्रदानविधायकं, किंतु परस्परानुज्ञानसापेक्षमित्यग्रे वक्ष्यते। एतदाशयनैव चोक्तं मूले—न स्त्री पुत्रं दद्यादिति नैरपेक्ष्यश्रवणादिति। अन्ये तु व्यवहितत्वेऽपि 'न स्त्री पुत्रं दद्यात्' इत्यत्रैवान्यत्रानुज्ञानाद्भर्तुरित्यस्य संबन्धः। अन्यथा 'दद्यान्माता पिता यं वा स ज्ञेयो दत्त्रिमः सुतः' इति वत्सव्यासवचनेन 'माता पुत्रं दद्यात्' इति विधेः सत्त्वात् 'न स्त्री पुत्रं दद्यात्' इति निरपेक्षनिषेधाच्च षोडशिग्रहणाग्रहणवद्विकल्पापत्तिः स्यात्। विकल्पश्च नेष्टः। अष्टदोषग्रस्तत्वात्। कथं तर्हि व्रीहियववाक्ययोर्विकल्प आश्रित इति चेत्। गत्यन्तराभावादिति गृहाण। तदुक्तम्—एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः। विकल्प आस्थितस्तत्र गतिरन्या न विद्यते॥ इति। अतः 'न स्त्री पुत्रं दद्यात्' इत्यत्रान्यत्रानुज्ञानाद्भर्तुरित्यस्यान्वयेऽनुज्ञाता माता पुत्रं दद्यादननुज्ञाता च न दद्यादित्यर्थान्न विकल्पप्रसक्तिः। 'स्त्री पुत्रं प्रतिगृह्णीयात' इति विध्यभावेन 'न प्रतिगृह्णीयात' इत्यत्रान्यत्रानुज्ञानाद्भर्तुरित्यन्वयस्य निष्फलत्वात्। न च 'न स्त्री पुत्रं प्रतिगृह्णीयात' इति पुत्रप्रतिग्रहनिषेधान्यथानुपपत्त्या पुत्रदानाधिकारवत्स्त्रियाः पुत्रप्रतिग्रहाधिकारोऽपि सेत्स्यतीति वाच्यम्। स्त्रियाः पुत्रप्रतिग्रहाधिकारकल्पने प्रयोजनाभावात्। यथा पुत्रदानाधिकारकल्पनस्य 'माता पिता वा दद्यातां यम्०' इत्यादौ पुत्रदानानुवादः फलं तथा पुत्रप्रतिग्रहाधिकारकल्पनस्य न किंचित्फलं संभवतीत्यर्थः। न च 'न स्त्री पुत्रं प्रतिगृह्णीयात्' इति प्रतिग्रहनिषेधोपपत्तिरेव फलमिति वाच्यम्। पुत्रप्रतिग्रहाधिकारं प्रकल्प्य तस्य निषेधकरणापेक्षया 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायेन 'न प्रतिगृह्णीयात' इति निषेधाकरणस्यैव लघुत्वेन युक्तत्वात्। न च 'पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च' इति पुत्रप्रतिग्रहं प्रत्युक्तस्य पिण्डोदकदानादिहेतोः पुरुषं प्रतीव स्त्रियं प्रत्यप्यविशेषात्तस्याः पुत्रप्रतिग्रहाधिकारः सिध्येदिति वाच्यम्। यथा हि—चातुर्मास्ये श्रूयते 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इति। अत्र तेन ह्यन्नं क्रियत इति वाक्यं हेतुविधायकम्। हेतुबोधकहिशब्दघटितत्वात्। शूर्पेण होमः कुतः कारणादित्याकाङ्क्षायां यतस्तेनान्नं क्रियतेऽतः कारणाच्छूर्पेण होमः कर्तव्य इत्युक्तौ यद्यदन्नसाधनं तत्तद्धोमसाधनमिति लभ्यते। अन्नसाधनत्वस्य हेतोः शूर्प इव स्थालीपिठरादिष्वप्यविशेषात्। एवं चान्नसाधनत्वात्स्थालीपिठरादीनामपि होमसाधनत्वं प्राप्तम्। परंतु शूर्पस्य यद्धोमसाधनत्वं तच्छ्रौतं शूर्पेणेति तृतीयया तदवगमात्। स्थालीपिठरादीनां त्वानुमानिकम्। ततश्च केन साधनेन होमः

तस्या अप्यधिकारः। तथा च वसिष्ठः—अन्यत्रानुज्ञानाद्भर्तुरिति। यत्तु दद्यान्माता पिता यं वेति, यच्च माता पिता वा दद्यातामिति मातुः पितृसवकक्षतयाऽभिधानं तदपि भर्त्रनुज्ञानविषयमेव।

---

कार्य इत्येवं होमस्य साधनाकाङ्क्षायां शूर्पेण जुहोतीत्यनेन प्रत्यक्षश्रुतेनाऽऽनुमानिकस्य बाधात्तेन यन्नमिति हेतुः स्थालीपिठरादौ न प्रवर्तत इति सिद्धान्तितं पूर्वमीमांसायां प्रथमाध्यायगतद्वितीयपादस्य तृतीयेऽधिकरणे। तद्वत्प्रकृतस्थले पिण्डोदकदानादिः पुत्रप्रतिग्रहहेतुः ‘ अङ्गादङ्गात्संभवसि ’ इत्यादिप्रतिग्रहाङ्गमन्त्रपाठानधिकारेण बाधितत्वात्स्त्रियां न प्रवर्तत इत्यस्यैव वक्तुं युक्तत्वात्। न च ‘ अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ’ इति वचनेनापुत्रमुद्दिश्य पुत्रप्रतिनिधिकरणं पुत्रप्रतिग्रह इति यावत। विधीयत इति पुंस्त्वस्योद्देश्यविशेषणतयाऽविवक्षितत्वेनापुत्रया पुत्रप्रतिनिधिः कर्तव्य इत्येवमर्थपर्यवसानात्स्त्रियाः पुत्रप्रतिग्रहाधिकारः सेत्स्यतीति वक्तव्यम्। तेन वचनेन न केवलं पुत्रप्रतिग्रहो विधीयते, किंतु पुत्रप्रतिग्रहवद्प्राप्तत्वात्तत्कर्तृत्वेनापुत्रोऽपि विधेय एवेष्यते। न चैवमुभयविधाने विधेयभेदाद्वाक्यभेदः स्यादिति वाच्यम्। अपुत्रकर्तृकपुत्रप्रतिग्रहः कर्तव्यतया विधीयत इति विशिष्टविधेराद्दतत्वात। विशिष्टविधौ च विशेषणविधिरार्थिक इति पुंस्त्वस्य विधेयविशेषणत्वमेवेति कृत्वा पशुना यजेतेत्यत्र विधेयपशुगतपुंस्त्वस्येवापुत्रगतपुंस्त्वस्य विवक्षाया आवश्यकत्वेनापुत्रया पुत्रप्रतिनिधिः कर्तव्य इत्येवं स्त्रीकर्तृकपुत्रप्रतिग्रहविधिरुन्नेतुं न शक्यः। तस्मान्नास्ति स्त्रियाः पुत्रप्रतिग्रहाधिकारः। न चैवं ‘ न प्रतिगृह्णीयात् ’ इति निषेधो व्यर्थः स्यादिति वाच्यम्। रागप्राप्तपुत्रप्रतिग्रहप्रतिषेधेन ‘ न स्त्री पुत्रं प्रतिगृह्णीयात ’ इति निषेधस्य सार्थक्यादित्याहुः। एतन्मते भर्त्रनुज्ञासापेक्षः स्त्रियाः पुत्रदानाधिकारः। भर्त्रनुज्ञापेक्षा च भर्तृसत्त्वे भर्तृजीवनदशायामिति यावत्। अन्यथा ‘ दद्यान्माता पिता वा यम्० ’ इति वत्सव्यासवचने मातुः पितृसमकक्षतयाऽभिधानं विरुध्येत। एवं च मातापित्रोरुभयोर्जीवतोर्यथा पत्न्या भर्त्रनुमत्या दातृत्वं तथा पत्युरपि पत्न्यनुमत्यैव दातृत्वं प्रतिग्रहीतृत्वं च। कथंचित्तदनुमत्यभावेऽत्यन्तापदि पत्युः स्वातन्त्र्यमपि। पत्न्यास्तु पत्यौ जीवति संनिहिते प्रोषिते वा तदनुमत्यैव दातृत्वम्। तत्रैवानुज्ञानाभावे ‘न स्त्री पत्रं दद्यात् ’ इति निषेधः। मृते स्वातन्त्र्यमिति बोध्यम्। अन्योक्ते मते ‘ भर्त्रनुज्ञानापेक्षयैव स्त्रियाः पुत्रदानेऽधिकारः ’ इति यदुक्तं तदनुमतमेव, किंतु ‘ भर्त्रनुज्ञानापेक्षा च भर्तृजीवनदशायाम् ’ इति यदुक्तं तदपरे न मन्यन्त इति सूचयन्नाह—**यत्त्वित्यादि भर्त्रनुज्ञाविषयमेवेत्यन्तम्।** ‘ दद्यान्माता ’ इति व्यासवचने ‘ माता पिता वा ’ इति मनुवचने च यन्मातुः

११
न चैवं विधवाया आपद्यपि पुत्रदानं न स्यात् तस्या भर्त्रनुज्ञानासंभवात्परिग्रहवदिति वाच्यम्। मानवीयलिङ्गदर्शनेन तथा कल्पनात्। नैरपेक्ष्यैकत्वश्रवणाच्च। स्त्रीनिरपेक्षस्यैकस्यापि भर्तुः पुत्रदानाधिकारः। दद्यान्माता पिता यं वा,

---

पितृसमकक्षत्वं पितृनिरपेक्षतया पार्थक्येन दातृत्वं श्रूयते तदपि भर्त्रनुज्ञाने सत्येव बोध्यं नतु तदभाव इत्यर्थः। एवं च स्त्रियाः पुत्रदाने भर्तृपारतन्त्र्यमेव न कस्यामप्यवस्थायां स्वातन्त्र्यमिति भावः। एतेन भर्त्रनुज्ञानापेक्षा च भर्तृजीवनदशायामिति यदुक्तं तदपरेषां न संमतमिति सूचितं भवति। तथा च विधवाया भर्त्रनुज्ञाने सति पुत्रदाने न किंचित्प्रतिबन्धकम्। अनुज्ञामदत्त्वैव भर्तरि मृते पितुर्ज्ञातीनां वाऽनुज्ञया पुत्रदानं स्यात्। न चैवं भर्तृपदस्यानिष्टा लक्षणा स्यादिति वाच्यम्। रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके। अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः॥ (या० स्मृ० १। ८५) इति योगीश्वरवचनात्। अत्रावस्थाभेदेन स्त्रियाः संरक्षितारो ये प्रोक्तास्तदेकदेशानुवादद्वारा पित्रादीनां ग्रहणस्य सूचनाल्लक्षणाया इष्टत्वात्। वस्तुतस्तु पूर्वोक्तं मानवीयं वैयासकं च वचनं न भर्त्रनुज्ञानविषयमिति प्रतिपादयितुं शङ्कते-**न चैवमिति**। यदि निरुक्तं वचनद्वयमपि भर्त्रनुज्ञानविषयकमेव स्यात्तर्हि विधवाया अनुज्ञानात्पूर्वमेव भर्तृमरणेनानुज्ञाया असंभवादापद्यपि पुत्रपालनासामर्थ्येऽपि पुत्रो न देयः स्यात्। यथा 'न स्त्री पुत्रं प्रतिगृह्णीयात्' इति निषेधान्नैव पुत्रो ग्रहीतुं शक्यस्तद्वदित्यर्थः।

भर्त्रनुज्ञानाभावेऽपि विधवायाः पुत्रदानाधिकारं साधयितुमाह-**मानवीयलिङ्गेति**। 'माता पिता वा०' इति मनुवचने पितृनिरपेक्षाया मातुः पुत्रदातृत्वाभिधानेन मातुः स्वातन्त्र्येण पुत्रदानाधिकारः कल्प्यते। वसिष्ठवचनविरोधपरिहाराय मानवीयमिदं वचनं विधवापरमित्यवगम्यते। वसिष्ठवचनं तु सौभाग्यवत्स्त्रीपरमिति भावः।

ननु मनुवचनेन मातुः स्वातन्त्र्येणाधिकारः कल्पयितुमशक्यः। दद्यातामिति द्विवचनेनोभयोः साहित्येन दातृत्वाभिधानादित्याशङ्क्याऽऽह—**नैरपेक्ष्यैकत्वेति**। 'दद्यान्माता पिता वा यम्०' इति व्यासवचने स्त्रीनिरपेक्षस्यैकस्यापि भर्तुः पुत्रदानकर्तृत्वप्रतिपादनात्तद्वद्भर्तृनिरपेक्षाया एकस्या अपि स्त्रियाः पुत्रदानाधिकारः सिध्यतीत्यर्थः।

ननु 'क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान्। क्षेत्रबीजसमायोगात्संभवः सर्वदेहिनाम्॥ (म० स्मृ० ९। ३३) इति मनुना पुत्रोत्पत्तिं प्रति मातापित्रोरुभयोः कारणत्वाविशेषाभिधानात्कथमेकैकस्य पार्थक्येन पुत्र-

माता पिता वा दद्यातामिति मातृनिरपेक्षैकपितृनिर्देशात् । बीजस्य प्राधान्याद-योनिजा अपि पुत्रा दृश्यन्त इति बौधायनीयहेतुदर्शनाच्च । भारतेऽपि—

माता भस्त्रा पितुः पुत्रो येन जातः स एव सः । इति ।

श्रुतिरपि—आत्मा वै जायते पुत्र इति । मानवे दद्यातामित्युभयकर्तृक-

---

विषयेऽधिकारः प्रतिपाद्यत इति मनस्यनुसंधायाऽऽह—**बीजस्य प्राधान्यादिति ।** बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते । सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥ ( म० स्मृ० ९ । ३५ ) इत्यन्वयमुखेन तथा–इयं हि भूमिर्भूतानां शाश्वती योनिरुच्यते । न च योनिगुणान्कांश्चिद्बीजं पुष्यति पुष्टिषु ॥ ( म० स्मृ० ९ । ३७ ) इति व्यतिरेकमुखेण च बीजस्योत्कृष्टत्वप्रतिपादनात्प्राधान्यमित्यर्थः ।

ननु ' बीजाद्योनिर्बलीयसी ' इत्युक्तत्वादत एव विचित्रवीर्यस्य क्षेत्रे क्षत्रि-यायां ब्राह्मणेनोत्पादिता अपि धृतराष्ट्रादयः क्षत्रियाः क्षेत्रिण एव पुत्रा इति महाभारते प्रसिद्धत्वाच्च बीजापेक्षयाऽपि क्षेत्रस्य प्राधान्यप्रतीतेः कथं बीजस्य प्राधान्यमुच्यत इति चेत् । यथा पुत्रोत्पत्तिं प्रति बीजस्याव्यभिचार उप-लभ्यते न तथा योन्याः । योनिस्तु पुत्रोत्पत्तिं प्रति व्यभिचरत्येव । अतस्तस्याः प्राबल्यं वाचनिकं क्वाचित्कं चेति प्रदर्शयितुं योन्या व्यभिचारं प्रदर्शयति—**अयोनिजा अपीति** । अगस्त्यमाण्डव्याद्योऽयोनिजा इति पुराणेषु प्रसिद्धम् । ' अगस्त्यः कुम्भसंभवः ' इत्यमरकोशाच्चागस्त्यस्यायोनिजत्वावगमः । एवं च यत्र यत्र पुत्रोत्पत्तिस्तत्र तत्र बीजमिति यथा पुत्रोत्पत्तिबीजयोः साहचर्यं सर्वत्रोपलभ्यते, नैवं पुत्रोत्प-त्तियोन्योः साहचर्यं सर्वत्रोपलभ्यते । अगस्त्यमाण्डव्यादीनां योनिसंबन्धाभावादिति भावः । तथा च मात्रपेक्षया पितुः प्राधान्यं भवति । अत्रायोनिजा इत्यनेन पुत्रयोन्योर्व्यभिचारः प्रदर्शितः । अबीजजा इत्यवचनाच्च पुत्रबीजयोः साहचर्यं च ध्वनितम् । मात्र-पेक्षया पितुः प्राधान्ये भारतवचनं प्रमाणयति—**भारतेऽपीति । भस्त्रेति** । लोहका-रादीनामग्न्युद्दीपनकरो यन्त्रविशेषः । ' भाता ' इति महाराष्ट्रभाषायां प्रसिद्धः । यथा भस्त्राऽग्निं चेतयेन्न तमुत्पादयेत् । तदुत्पादकं तु तृणकाष्ठादिकमेव । तथा माता ज्ञेया । माता तु केवलं पुरुषं चेतयेन्न पुत्रमुत्पादयेदित्यर्थः । पुत्रोत्पादकस्तु पितैव । यतः स पितैव पुत्ररूपेण जायते न पुत्रो नाम व्यक्त्यन्तरमस्ति । आत्मा वै पुत्रनामासीति श्रुत्यैकवाक्यत्वात् । अत एव पितुः पुत्र इति लोके व्यवहारः प्रसिद्धः, न मातुः पुत्र इतीत्याशयः । अनेन पितुः प्राधान्यं माता तु भस्त्रावत्तं प्रत्युपसर्जनमिति प्रदर्शितम् । श्रुतिरपीममेवार्थमभिधत्ते-**आत्मा वै जायते पुत्र इति** । बह्वृचब्रा-ह्मणमपि—पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे

ताश्रवणाच्चोभयाधिकारो मुख्यः । अत एव वसिष्ठः—शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इति । बौधायनोऽपि—मातापित्रोरेव संसर्गसाम्यादिति । अत एव माता पिता वा दद्यातामिति

---

मासि जायते ॥ इति । मनुश्च—पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते ( म० स्मृ० ९ । ८ ) इति । पतिः शुक्ररूपेण भार्यां प्रविश्य गर्भमापाद्य तस्यां पुत्ररूपेण जायत इति मन्वर्थमुक्तावली तदर्थमाह । एवं च मात्रपेक्षया पितुः प्राधान्ये श्रुतिस्मृत्यादयोऽप्यनुकूलाः । एवं मातृनिरपेक्षं पितुरधिकारं भर्तृसापेक्षं मातुरधिकारं च प्रदर्श्योभयाधिकारं मुख्यं प्रदर्शयति मानवे—**दद्यातामिति** । माता पिता वा दद्यातामिति मनुवचने दद्यातामिति कर्तृवाचकद्विवचनान्तक्रियापदश्रवणेन मातापित्रुभयकर्तृकतावगमादुभयाधिकारः प्रतीयते । स च मुख्यः । मातापित्रोरुभयोरधिकारे प्रमाणं वसिष्ठवचनं निर्दिशति—**शुक्रशोणितसंभवइत्यादि प्रभवतइत्यन्तम्** । शुक्रं पुरुषवीर्यम् । शोणितं स्त्रीरजः । ताभ्यां संभूतस्तत्संयोगोत्पन्नोऽत एव मातापित्रुभयकारणिकः स पुत्रो भवतीति शेषः । तादृशस्य पुत्रस्य विक्रये दाने त्यागे च मातापितरावेव प्रभवतः समर्थौ स्त इति तदर्थः । **संसर्गसाम्यादिति** । मातापित्रोः संसर्गस्य जनकतारूपसंबन्धस्य समत्वादित्यर्थः । **अत एव** । जनकत्वरूपसंसर्गस्य समत्वेनोभयाधिकारस्य मुख्यत्वादेव । भर्त्रनुज्ञानसापेक्षस्य मातुरधिकारस्य जघन्यत्वं भार्यानुज्ञाननिरपेक्षस्य पितुरधिकारस्य मध्यमत्वं जनकतासंसर्गसाम्यादुभयाधिकारस्य मुख्यत्वमङ्गीकृत्य ‘ माता पिता वा दद्याताम् ’ इति वचने मनुना पूर्वं मातृनिर्देशस्ततः पितृनिर्देशस्तदनन्तरं च दद्यातामिति द्विवचनेनोभयनिर्देशश्च कृतः । तत्र भर्त्रनुज्ञानसापेक्षत्वेन मातुरधिकारस्य जघन्यत्वात्तत्र जघन्यत्वरूपामरुचिं वीक्ष्य मातुरनन्तरं पितृनिर्देशः कृतः । तत्रापि स्त्रीनिरपेक्षत्वेन किंचिन्न्यूनत्वमरुचिमनुसंधाय तदनन्तरं कर्तृवाचकद्विवचनान्तक्रियापदोदाहरणेनोभयोर्मातापित्रोर्निर्देशः कृतः । अयमेव मुख्याधिकारः । यथाऽस्मिन्नाङ्ग्लमहाविद्यालये प्राचार्य एको नियोक्तव्यो भवति यस्यापेक्षा स्यात्तेन विज्ञप्तिपत्रं प्रेषणीयमिति वर्तमानपत्रद्वारोद्घोषितम् । ततस्त्रयो विज्ञप्तारः समुदतिष्ठन् । तत्रैक उत्तीर्णप्राचार्यपरीक्षोऽनुभूतप्राचार्यकर्मा च । द्वितीयश्चोत्तीर्णप्राचार्यपरीक्षोऽननुभूतप्राचार्यकर्मा । तृतीयस्त्वदत्तप्राचार्यपरीक्षोऽप्यनुभूतप्राचार्यकर्मेत्येवंप्रकारास्ते त्रय आसते । तदेषां त्रयाणां मध्ये कस्य निर्वृत्तिः( निवड ) कर्तव्येति वीक्षायामेवं मीमांसन्ते मुख्याधिकारिणः । योऽयं तृतीयस्तस्य स्वयंसिद्धः प्राचार्यकर्माधिकारो नास्ति । अदत्तप्राचार्य-

परीक्षत्वात् । किंतु क्वचिदेकस्मिन्राजानाश्रिते महाविद्यालयेऽनेन कतिचिद्दिनानि प्राचार्यकर्म निर्व्यूढमित्येतावतैवास्य प्राचार्यकर्मण्यधिकारो वाच्यः । परंत्वयं गौणतरः । ज्ञानपूर्वकस्यैवानुभवस्य यथार्थत्वात् । यथा रजते 'इदं रजतम्' इत्यनुभवः । अज्ञानपूर्वकस्यानुभवस्यायथार्थत्वाच्च । यथा शुक्ताविदं रजतमित्यनुभवोऽयथार्थ इति तादृशं तं परित्यजन्ति । द्वितीयस्योत्तीर्णप्राचार्यपरीक्षत्वेन स्वयंसिद्धेऽधिकारेऽपि तत्सहकारी योऽनुभवः सोऽस्य कियानपि नास्तीत्ययमप्यधिकारो गौण एव । तस्माद्यः प्रथम उत्तीर्णप्राचार्यपरीक्षोऽनुभूतप्राचार्यकर्मा च तस्योत्तीर्णप्राचार्यपरीक्षत्वेन स्वयंसिद्धाधिकारः सोऽपि च प्राचार्यकर्मानुभवेन परिपुष्ट इति तमेव योग्यमधिकारिणं मत्वा प्राचार्यकर्मणि नियोजयन्ति । तद्वत्प्रकृते भर्तृनिरपेक्षः केवलमातुरधिकारो गौणतरः । पत्नीनिरपेक्षः केवलपत्युरधिकारो गौणः । पत्न्यनुमत्या पत्युरधिकारः पत्यनुमत्या च पत्न्यधिकारः सोऽयं परस्परानुमत उभयाधिकारो मुख्यः । सोऽयं मुख्याधिकारो मातापित्रोर्द्वयोर्जीवतोरेव संभवतीति वसिष्ठवचनं सौभाग्यवत्स्त्रीविषयकम् । भर्तृनिरपेक्षः केवलमातुरधिकारश्च भर्तृमरणोत्तरमेव संभवतीति दद्यान्माता पिता वा यमित्यादि वत्सव्यासादिवचनं विधवास्त्रीविषयकमिति व्यवतिष्ठत इति बोध्यम् । एवं च स्त्रियाः स्वातन्त्र्येण पारतन्त्र्येण वा पुत्रदानस्यैवाधिकारो न तु पुत्रप्रतिग्रहस्य । 'अपुत्रेणैव कर्तव्यः' इत्यादिपुत्रप्रतिग्रहविधायकेषु वचनेषु विधेयपुत्रगतपुंस्त्वस्य विशेषणस्य विवक्षावश्यंभावात् । 'दद्यान्माता पिता यं वा' इत्याद्यनुवादकेषु मतान्तरेण विधायकेषु वा दानस्य श्रवणात्प्रतिग्रहस्याश्रूयमाणत्वाच्चेति ज्ञेयम् । अपरे तु 'दद्यान्माता पिता' इत्यादिवचनेषु श्रूयमाणं दानं प्रतिग्रहस्योपलक्षणम । 'अन्यत्रानुज्ञानाद्भर्तुः' इति च 'न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा' इत्युभयोः शेष इति वदन्ति । तथा च 'माता पुत्रं गृह्णीयात्' इति प्रतिग्रहविधेः सत्त्वात्, 'न प्रतिगृह्णीयात्' इति निरपेक्षनिषेधाच्च विकल्पापत्तिः । अतः 'न प्रतिगृह्णीयात्' इत्यत्रान्यत्रानुज्ञाद्भर्तुरित्यस्यान्वयेऽनुज्ञाता माता पुत्रं प्रतिगृह्णीयात्, इत्यर्थादननुज्ञाता माता न प्रतिगृह्णीयादित्येवं विधिनिषेधयोर्विषयभेदान्न विकल्पापत्तिप्रसरः । अत्र मते पुत्रदानाधिकारवद्भर्त्रनुज्ञानसापेक्षः स्त्रियाः प्रतिग्रहाधिकारः । भर्त्रनुज्ञानस्य च भर्त्रसत्त्व एव प्रायः संभवः । तत्रैव च भर्त्रनुज्ञानासत्त्वे न प्रतिगृह्णीयादिति प्रतिग्रहनिषेधः । भर्तरि मृते प्रायोऽनुज्ञानासंभवात्स्वातन्त्र्येण स्त्रियाः प्रतिग्रहाधिकारः ।

न चात्राननुज्ञाता 'स्त्री न प्रतिगृह्णीयात' इति निषेधः स्यादिति वाच्यम् । निषेधस्य प्राप्तिपूर्वकत्वात्प्राप्तेश्च भर्त्रनुज्ञानपूर्वकत्वादनुज्ञानस्य च

मनुना मातुर्भर्त्रनुज्ञानसापेक्षत्वाज्जघन्यत्वं, स्व्यनुज्ञाननैरपेक्ष्यात्पितुर्मध्यमत्वं, जनकतासामान्यादुभयोर्मुख्यत्वमभिप्रेत्य पूर्वपूर्वास्वरसादुत्तरोत्तरमभिहितम्। न चेदमेकमेव वाक्यं द्विचनान्तैकक्रियाश्रवणादिति वाच्यम् । मध्ये विकल्पासंगतेः । तस्मादत्र वाक्यत्रयमेव । अत एव योगीश्वरः—दद्यान्माता पिता यं वेति प्रत्येकमेकवचनान्तमेव क्रियापदमुदाजहार । तत्रापि निमित्तमाह—प्रयत्नत इति । प्रकृष्टो यत्नो यस्मिन्कालेऽसौ प्रयत्न आपत्कालः । तेन चाऽऽपत्काल एव पुत्रदानं नान्यथेत्यर्थः । यथाऽऽह कात्यायनः—आपत्काले तु कर्तव्यं दानं विक्रय एव वा ।

अन्यथा न प्रवर्तेत इति शास्त्रविनिश्चयः ॥ इति ।

प्रक्रमात्पुत्रदाराणाम् । मनुरपि—

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । इति ।

आपदि दुर्भिक्षादौ । अनापदि दाने दातुर्दोषः । अन्यथा न प्रवर्तेत इति निषेधात् । यद्वा प्रयत्नत इति प्रतिग्रहीतुः प्रयत्नात् । आपद्यपुत्रत्व इति ।

अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ।

भर्तृसत्त्व एव समर्थन भर्तृसत्त्व एव निषेधप्रवृत्त्योरौचित्यादिति । पुनः शङ्कते—**न चेद-मेकमेवेति** । दद्यातामिति द्विवचनान्तक्रियापदश्रवणेन मातापितरौ यं दद्यातामित्यर्थकमेकमेवेदं वाक्यमिति न शङ्कयमित्यर्थः । तथा सति विकल्पार्थकवाशब्दस्य मध्ये प्रयोगासंभव इति कल्पत्रयमेवेत्यर्थः । **अत एव** । कल्पत्रयसत्त्वादेवेत्यर्थः । एक-वचनान्तक्रियापदोदाहरणस्यैवमेव संभव इति भावः । बहुपुत्रेण पुत्रदानं कर्तव्य-मित्युक्तम् । तदपि नाविशेषेण, किंतु कस्मिंश्चिन्निमित्तसद्भाव एव । किं तन्नि-मित्तमित्यपेक्षायामाह—**प्रयत्नत इति** । आद्यादित्वात्सप्तम्यर्थे तसिः । प्रयत्न इति च बहुव्रीहिः । आपत्कालोऽन्यपदार्थः । यस्मिन् काले कुटुम्बपरिपोषणं प्रकृष्टय-त्नसाध्यत्वाद्बहुकष्टतरं भवति । कुटुम्बपरिपोषणं हि दुर्भिक्षाद्यापत्तिकाले बहुकष्टतरं भवतीति प्रसिद्धमेव । अतः प्रयत्नत इत्यस्य दुर्भिक्षाद्यापत्काल इत्यर्थः । तेन च बहुपुत्रवताऽप्यापत्काल एव पुत्रदानं कर्तव्यं नानापदीत्यर्थः । प्रयत्नत इत्यस्य निरुक्तार्थकरणे प्रमाणं प्रदर्शयन्नाह—**आपत्काले त्विति** । कस्य दानं कस्य वा विक्रय इति वीक्षायां पूर्वप्रक्रमानुरोधेन पुत्राणां दाराणां चेति बोध्यम् । मनुरप्यापदि पुत्रदानमाहेति दर्शयति—**माता पिता वेति** । आपदीत्यस्य व्याख्यानं दुर्भिक्षादाविति । आपत्त्यावसत्यां पुत्रदाने दातुर्दोषं दर्शयति—**इति निषेधादिति** । आपदीत्यस्य व्याख्यानान्तरं दर्शयति—**आपद्यपुत्रत्व इति** । तादृशव्याख्याने प्रमाणं दर्शयति—**अपुत्रेणैवेति** । अत्र व्याख्यानान्तरे ग्रन्थकारान्तरसंमतिं दर्शयन्नाह—**व्याख्यातं**

इत्यत्रिस्मरणात् । व्याख्यातं चैवमेवापरार्कचन्द्रिकाभ्याम्–आपदि प्रतिग्रहीतुरपुत्रत्व इति । विशेषान्तरमपि कालिकापुराणे–

दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः ।
आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥
पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥ इति ।
चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दासतोच्यते ॥
ऊर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ।
गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत् ॥
पौनर्भवं तु तनयं जातमात्रं समानयेत् ।
कृत्वा पौनर्भवस्तोमं जातमात्रस्य तस्य वै ॥
सर्वांस्तु कुर्यात्संस्काराञ्जातकर्मादिकान्नरः ।
कृते पौनर्भवस्तोमे सुतः पौनर्भवः स्मृतः ॥ इति ।

दत्ताद्या इति । अन्यबीजसमुद्भवा अपि दत्ताद्यास्तनया निजगोत्रेण प्रतिग्रहीत्रा स्वगोत्रेण सम्यक् स्वसूत्रोक्तविधिना जातकर्मादिभिः संस्कृताश्चेत्तदेव प्रतिग्रहीतुः पुत्रतां प्राप्नुवन्ति नान्यथेत्यर्थः । तदाह वसिष्ठः–

अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः ।
स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक् ॥ इति ।

---

चैवमेवेत्यादि प्रहीतुरपुत्रत्व इत्यन्तम् । दत्तकविषये कंचिद्विशेषं कालिकापुराणोक्तं दर्शयति–दत्ताद्या अपीति । अस्यार्थः–अन्यबीजसमुद्भवा अन्यगोत्रसमुद्भवा इति यावत् । अपि दत्ताद्यास्तनया निजगोत्रेण प्रतिग्रहीत्रा स्वगोत्रेण सम्यक्स्वगृह्यसूत्रोक्तविधिना जातकर्मादिभिः संस्कारैः संस्कृताश्चेत्तदेव प्रतिग्रहीतुः पुत्रतां यान्ति प्राप्नुवन्ति नान्यथेत्यर्थ इति । तथा च भिन्नगोत्रीयः पुत्रो जातमात्र एव ग्राह्यो भवतीत्ययं विशेषः । यद्यपि जातकर्मादिसंस्काराणां साक्षाद्गोत्रकरणकत्वं न श्रुतं तथाऽपि तदङ्गभूतवृद्धिश्राद्धे गोत्रसंबन्धसत्त्वात्प्रधानेऽपि तत्संबन्धं गृहीत्वा 'निजगोत्रेण संस्कृताः' इति गोत्रकरणकत्वं निर्दिष्टम् । किंच चूडादिषु साक्षादेव गोत्रसंबन्धः श्रूयते–'शिखा अपि च कर्तव्याः कुमारस्याऽऽर्षसंख्यया' इति स्मृतेः । दत्ताद्या अपीत्यनेन प्रोक्तार्थे वसिष्ठसंमतिं प्रदर्शयति–अन्यशाखोद्भव इति ।

**दत्ताद्या इत्याद्यपदेन कृत्रिमादीनां ग्रहणम्।**

**औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च।**
**गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे॥**
**कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा।**
**स्वयंदत्तश्च दासश्च षडिमे पुत्रपांसनाः॥**
**अभावे पूर्वपूर्वेषां परान्समभिषेचयेत्।**
**पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत्॥**

इति पूर्वोपक्रमात्। योऽयं पौनर्भवादीनां राज्यनियोजनाभावः स औरसव्यतिरिक्ताभाव एव। अभावे पूर्वपूर्वेषामित्यस्यैवानेनापवादात्। सत्यौरसे तु राज्याभावस्य

---

अस्यार्थः—प्रतिग्रहीत्रपेक्षयाऽन्या भिन्ना शाखा कर्मकाण्डीयवेदो यस्य तस्मादुत्पन्नो भिन्नगोत्रोद्भव इति यावत। उपनायितः कृतसंस्कारः। अनेकार्थत्वाद्धातूनामुपपूर्वस्य नयतेः संस्कारेऽर्थे वृत्तिः। यद्वा कृतोपनयनसंस्कार इत्यर्थः। तथा च प्रतिग्रहीत्रा स्वगोत्रेण स्वगृह्योक्तविधानेन कृतसंस्कारः कृतोपनयनसंस्कारो वा चेत्स्यात्तर्ह्येव स भिन्नगोत्रीयः पुत्रः प्रतिग्रहीतः शाखां भजति। अत्र 'उपनायितः' इति विशेषणाद्भिन्नगोत्रस्य दत्तकस्य जातकर्मादिसंस्कारकरणेन प्रतिग्रहीतृपुत्रत्वं सिध्यति, न केवलप्रतिग्रहविधिनेत्यभिप्रैति वसिष्ठः। अन्यथोपनायित इति न वदेदिति भावः। प्रतिग्रहीतृशाखास्वीकारं प्रति प्रतिग्रहीतृपुत्रत्वस्य हेतुत्वं प्रतिग्रहीतृपुत्रत्वस्य च प्रतिग्रहीतृकर्तृकपरिग्रहविधिसहकृतजातकर्मादिसंस्कारस्य हेतुत्वमिति यावत्। अत्र दत्ताद्या इत्याद्यपदेन कृत्रिमादीनां ग्रहणम। तानेव कृत्रिमादीन्दर्शयन्नाह—**औरसः क्षेत्रज इत्यादि तनया इमे इत्यन्तम्। तथा कानीनश्चेत्यादि पुत्रपांसना इत्यन्तं च**। तत्रौरसः क्षेत्रज इत्यादयः प्रथमे षट् भागार्हा अंशभाज इत्यर्थः। तदितरे षट् पुत्रपांसनाः पुत्राधमा इति बोध्यम्। **अभाव इति**। पूर्वपूर्वेषामभावे परान्राज्ये समभिषेचयेत्। यथा—औरसाभावे क्षेत्रजं, क्षेत्रजाभावे दत्तं, दत्ताभावे कृत्रिममित्येवंरीत्या पूर्वाभावे परं राज्ये विनियोजयेत। किंतु पौनर्भवं स्वयंदत्तं दासं च राज्ये न स्थापयेत्। पूर्वेषामभावेऽपीति शेषः। इति तदर्थः। अत्र योऽयं पौनर्भवादीनां राज्ये नियोजनाभावः प्रतिपादितः स पूर्वप्रक्रमानुरोधेनौरसव्यतिरिक्तानां क्षेत्रजादीनामभाव एवेति बोध्यम्। यतो 'अभावे पूर्वपूर्वेषां परान्समभिषेचयेत्' इति पूर्वार्धेनौरसव्यतिरिक्तक्षेत्रजादिक्रीतान्तानामभावे सति पौनर्भवस्वयंदत्तदासानां प्राप्तं यद्राज्यनियोजनं तस्यैवानेनोत्तरार्धेन प्रतिषेधात्। नन्वस्तु पौनर्भवादीनां पूर्वार्धप्राप्तस्य

न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत् ।
पितॄणां साधयेन्नित्यमौरसे तनये सति ॥

इत्यनेन प्रागेवाभिधानात् । सत्यौरसे क्षेत्रजादीन् राज्ये नाभिषेचयेत् । पितॄणां नित्यं श्राद्धादि च न साधयेन्न कारयेदित्यर्थः। गोत्रेणेति । यद्यपि जातकर्मादिषु साक्षाद्गोत्रस्य करणता न श्रूयते तथाऽपि तदङ्गभूते वृद्धिश्राद्धे तत्संबन्धावश्यंभावात्प्रधानेऽपि तत्संबन्ध इति । चूडादिषु तु साक्षादेव तत्संबन्धः ।

शिखा अपि च कर्तव्याः कुमारस्याऽऽर्षसंख्यया ।

इति स्मरणात् । संस्कारैः पुत्रत्वमित्युक्तम् । तानेवान्वयव्यतिरेकाभ्यामाह– पितुर्गोत्रेणेति । यः पुत्र आचूडान्तं चूडान्तैः संस्कारैः पितुर्जनकस्य गोत्रेण सं-

---

राज्यनियोजनस्यानेनापवादः, किंत्वौरसव्यतिरिक्तक्षेत्रजादीनामभाव एव नत्वौरसाभावे क्षेत्रजादिसत्त्वेऽपीति कुतोऽवगतमित्याशङ्कयाऽऽह—'न क्षेत्रजादींस्तनयान्राजा राज्येऽभिषेचयेत् । पितॄणां साधयेन्नित्यमौरसे तनये सति' इति वचनेनौरसे सति क्षेत्रजादीनां राज्याभावस्य 'औरसः क्षेत्रजश्चैव०' इत्याद्युपक्रमात्प्रागेव प्रतिपादितत्वात् । औरसाभावे क्षेत्रजादिसत्त्वे तु पौनर्भवादीनां राज्ये नियोजनं नैव प्राप्नोति यन्निषिध्येत । औरसाभावे 'अभावे पूर्वपूर्वेषाम' इति वचनेन क्षेत्रजादीनामेव तत्प्राप्तिसत्त्वात् । तस्मात्क्षेत्रजादीनामभाव एव तेषां राज्ये नियोजनं प्राप्नोति तदनेन निषिद्धमिति बोध्यम । तथा च वसिष्ठसंहितायां प्रथमतः 'न क्षेत्रजादीन्०' इति वचनमौरससद्भावे क्षेत्रजादीनां राज्याभावप्रतिपादकं पठित्वा तदनन्तरं 'औरसः क्षेत्रजश्चैवेत्यादि' 'दासं राज्ये न योजयेत' इत्यन्तं वचनत्रयं पठितम् । तदेवं वचनचतुष्टयं क्रमेण पठितं गृहीत्वा विचारे क्रियमाणे पौनर्भवादीनां योऽयं राज्ये नियोजननिषेधः स औरसव्यतिरिक्तक्षेत्रजादीनामभाव एव पर्यवस्यतीति संप्रत्येव सयुक्तिकं प्रदर्शितमेव । तदयं निष्कृष्टोऽर्थः–औरसे सति क्षेत्रजादीनां मध्ये कस्यचिदपि राज्ये नाधिकारोऽस्ति । औरसाभावे क्षेत्रजादिक्रीतान्तानां सर्वेषामनुक्रमेण राज्याधिकारोऽस्ति । क्षेत्रजादीनामभावेऽपि पौनर्भवस्वयंदत्तदासानां राज्येऽधिकारो नैवास्तीति । तादृशवचनचतुष्टयानन्तरं 'अन्यशाखोद्भवो दत्तः' इत्यस्य वचनस्य वसिष्ठेन लिखितत्वात्स्वतन्त्रत्वेन नास्य राजप्रतिगृहीतराज्यार्हदत्तकविषयकत्वं, किंतु सामान्यपुरुषप्रतिगृहीतदत्तकपरत्वमेव । तद्वद्गाथा अपीत्यस्यापीति ज्ञेयम् । ततश्चानेन वचनद्वयेन संस्कारैः पुत्रत्वं प्राप्नोतीत्युक्तं भवति । तानेव संस्कारानन्वयव्यतिरेकाभ्यां दर्शयति–**पितुर्गोत्रेणेति** । अस्यार्थः– यः पुत्र आचूडान्तं चूडान्तैः संस्कारैः पितुर्जनकस्य गोत्रेण संस्कृतः सोऽन्यतोऽन्यस्य

स्कृतः सोऽन्यतोऽन्यस्य पुत्रतां न याति। अयमत्राभिसंधिः—कृतचूडस्य प्रतिग्रहीतृपुत्रताभावप्रतिपादनमसाधारणपुत्रतां विषयी करोतीत्यवश्यं वाच्यम्। अन्यथा गृहीत्वा पञ्चवर्षीयामित्यनेन कृतचूडस्यापि परिग्रहीतृपुत्रताप्रतिपादनविरोधात्। गृहीत्वेत्यस्य च कृतचूडविषयत्वावश्यंभावः स्पष्टमिष्यते। ततश्च चूडान्तसंस्का-

---

ब्राह्मणादेः परिग्रहीतुः पुत्रतां न याति न प्राप्नोतीति निषिध्यते। अत्रेदं बोध्यम्—कृतचूडस्य यत्परिग्रहीतृनिरूपितं पुत्रत्वाभावाभिधानं तदसाधारणपुत्रतां बोधयति। या दातृप्रतिग्रहीत्रोरुभयोः पुत्रता सा साधारणपुत्रता। उभयोर्मध्ये एकस्यैव पुत्रता साऽसाधारणपुत्रतोच्यते। तथा च यः पुत्रश्चूडान्तैः संस्कारैर्जनकगोत्रेण कृतसंस्कारः सोऽसाधारणपुत्रतां परिग्रहीत्रेकमात्रस्य पुत्रतां न याति न प्राप्नोति, किंतु दातृप्रतिग्रहीत्रोरुभयोः पुत्रतां यातीत्यर्थोऽवश्यं वाच्यः। अन्यथेति। उक्तवैपरीत्ये। दातृप्रतिग्रहीत्रोरुभयोः पुत्रतां यातीति तात्पर्यार्थं विहाय परिग्रहीतुः पुत्रतां न यातीत्येतावत्येव वाच्यार्थे परिगृहीते 'गृहीत्वा पञ्चवर्षीयम्' इति वचनेन पञ्चवर्षपरिमितवयसः पुत्रस्य कृतचूडस्यापि यत्परिग्रहीतृनिरूपितं पुत्रत्वमभिहितं तद्विरुध्येत।

ननु गृहीत्वेति वचनं यदि कृतचूड एव पञ्चवर्षीयेऽवश्यं प्रवर्तेत तर्ह्येव तद्विरुध्येत, तदेव तु कुतः पञ्चवर्षीयमित्यविशेषेणाभिधानादित्यत आह—**गृहीत्वेत्यस्य चेति।** अयं भावः—चूडाया यदीत्यस्य चूडाप्रभृतिसंस्कारा यदि प्रतिग्रहीतृगोत्रेण कृतास्तदैव दत्ताद्यास्तनयाः पुत्रतां लभन्ते। अन्यथा—चूडाप्रभृतिसंस्काराकरणे कृतचूडस्य परिग्रहे वा ते दत्ताद्या दासा उच्यन्ते, नतु पुत्रा इत्यर्थः। तथा चानेनाकृतचूडो ग्राह्य इत्युच्यते। तत्राकृतचूड इत्यत्रत्यश्चूडाशब्दो यदि चूडासंस्काररूपवाच्यार्थपरः स्यात्तर्ह्यकृतचूडस्याष्टवर्षीयस्यापि ग्रहणं प्रसज्येत। इष्टमेवैतदिति चेन्न। 'ऊर्ध्वं तु पञ्चमाद्वर्षात्' इत्यनेन पञ्चमवर्षानन्तरं पुत्रपरिग्रहकालनिषेधात्। अतश्चूडाशब्देन चूडासंस्कारकालो लक्षणीयः। चूडासंस्कारकालश्च द्वेधा—मुख्यो गौणश्च। तृतीयं हि वर्षं मुख्यश्चूडाकालः। ततः पञ्चमवर्षमुपनीतिकालश्च गौणः। तत्र 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायेन चूडाशब्देन स्वमुख्यकालस्तृतीयं वर्षमेवोपलक्ष्यते। किंचोपसंहार ऊर्ध्वं तु पञ्चमाद्वर्षादित्यत्र वर्षशब्दसत्त्वादुपक्रमे विद्यमानश्चूडाशब्दस्तृतीयवर्षपर एवाभिप्रेयते। ततश्चाकृतचूडस्य ग्रहणं तृतीये वर्षे प्रशस्तम्। ततः पञ्चमवर्षान्ते काले तादृशस्य ग्रहणं न प्रशस्तमिति सिध्यति। एवं च चूडाया इत्यत्रत्यं चूडापदमाशौच इव कालोपलक्षकमिति फलति। एवमाचूडान्तमित्यत्रापि चूडाशब्दस्तृतीयवर्षपर एव युक्तः। चूडाया उपनीत्या सहानुष्ठानपक्षेऽष्टमवर्षे जनकगोत्रेण कृतचू-

डोऽन्यस्य पुत्रतां न यातीत्यर्थप्रतिपादनार्थं चूडाशब्दो वाच्यार्थपरो गृह्यते चेत्तन्न सम्यक् । पञ्चमवर्षोर्ध्वं गृहीतस्य परिग्रहीतृपुत्रत्वाभावस्य 'ऊर्ध्वं तु पञ्चमाद्वर्षात्' इत्यनेनैव सिद्धत्वात् । तस्माल्लक्षणया तृतीयवर्षबोधकः । तथा च जनकगोत्रेण चूडान्तैः संस्कृतः प्रतिग्रहीतुः पुत्रतां न यातीत्यस्य जनकगोत्रेणाकृतचूडस्तृतीयवर्षीयो मुख्यो ग्राह्यः । ततः पञ्चमवर्षान्तं जनकगोत्रेणाकृतचूडोऽधमो ग्राह्य इत्यर्थः फलति । एवं स्थिते 'गृहीत्वा पञ्चवर्षीयम्०' इत्यनेन पञ्चवर्षीयस्य ग्रहणं यदभिधीयते तदकृतचूडस्य चेत्तदन्यथा सिद्धं, तादृशे प्रतिग्रहीतृपुत्रताऽपि सिद्धैवेति तादृशार्थकथनं विफलमेव स्याद्दासताभावापनायिकायाः पुत्रेष्टेर्विधानं चानुपपन्नं स्यात् । तस्मात्कृतचूडस्यैव ग्रहणबोधकं गृहीते च तादृशे प्रतिग्रहीतुः पुत्रताप्रतिपादकमित्येव मन्तव्यम् । ततश्च तस्य कृतचूडविषयत्वावश्यंभावः स्पष्ट एव लभ्यते । एवं च चूडान्तसंस्कारैः संस्कृतस्य प्रतिग्रहे द्वयोः पुत्रता भवति नाम द्व्यामुष्यायणता भवतीति यावत् । गोत्रद्वयेन संस्कृतत्वादिति भावः । द्व्यामुष्यायणतायाः फलं तु गोत्रद्वयसंबन्ध इत्यग्रे स्पष्टी भविष्यति । तथा चानेन वचनेन जातकर्मादिचूडान्तसंस्काराणां पुत्रताप्रतिहितत्वमुक्तं न तु पुत्रत्वं निषिद्धम् । त च चूडान्ताः संस्कारा जनकगोत्रेण कृताः सन्तो न पुत्रत्वं जनयन्ति, प्रतिग्रहीतृगोत्रेण कृताः सन्तस्तु पुत्रत्वमुत्पादयन्तीति प्रतिग्रहीतृकर्तृकसंस्काराभावे पुत्रत्वाभावः, प्रतिग्रहीतृकर्तृकसंस्कारसत्त्वे पुत्रत्वसद्भाव इत्येवमन्वयव्यतिरेकौ प्रदर्शिताविति तात्पर्यम् । अत्राऽऽचूडान्तमित्यत्राभिविधावाङ् दृश्यते । एवं तर्ह्याचूडमित्येव वाच्यम् । कृतमन्तग्रहणेन । एवं सति यदन्तग्रहणं क्रियते तस्यायं भावः— जातकर्माद्यन्नप्राशनान्तेषु संस्कारेषु जनकगोत्रेण क्रियमाणेष्वपि न क्षतिः । किंत यस्य शिखाछेदनरूपः संस्कारो जनकगोत्रेण न जातस्तादृशोऽपि ग्राह्यो भवति । पुत्रत्वप्रयोजकसंस्काराणां मध्ये प्रधानस्य प्रवरसमसंख्यशिखाच्छेदनरूपस्य संस्कारस्यानिष्पत्त्या पुत्रत्वार्हत्वात् । प्रतिग्रहीत्राऽन्नप्राशनान्तेषु संस्कारेषु कृतेष्वपि चूडायामकृतायां पुत्रत्वं नोत्पद्यते । अन्नप्राशनान्तेषु संस्कारेष्वक्रियमाणेष्वपि केवलचूडायां कृतायामपि पुत्रत्वमुत्पद्यत इति पुत्रत्वप्रयोजकसंस्काराणां मध्ये चूडासंस्कारस्य प्राधान्यं लभ्यते । तथा च यावत्प्रधानसंस्कारो जनकगोत्रेण न निष्पन्नस्तावत्तस्य पुत्रीकरणार्हतेति सूचयितुमन्तशब्दः । ततश्च प्रतिग्रहीत्रा शिखाछेदनमात्रे कृतेऽपि पुत्रत्वमुत्पद्यत इत्युक्तं भवति । एवं चानेन वचनेनान्तग्रहणसामर्थ्यात्पुत्रत्वप्रयोजकानां प्रतिग्रहीतृकर्तृकाणां संस्काराणां मध्ये चूडाप्रभृतिसंस्काराणां पुत्रत्वोत्पादकत्वं भवतीत्युक्तं भवति । तथा च दत्ताद्या अपीति पूर्ववचनेन यत्प्रतिग्रहीतृकर्तृकसंस्कारैः

रसंस्कृतस्य परिग्रहे द्व्यामुष्यायणता भवति। गोत्रद्वयेन संस्कृतत्वात् । तस्य च फलं गोत्रद्वयसंबन्ध इत्यग्रे वक्ष्यते । अनेनैं जातकर्मादीनां चूडान्तानां संस्काराणां पुत्रताहेतुत्वमुक्तम् । आचूडामिति वक्तव्ये यदन्तग्रहणं तदकृतार्षसमसंख्यशिखस्य पुत्रीकरणाभ्यनुज्ञानार्थम् । प्रधानानिष्पत्त्या पुत्रतार्हत्वात् । चूडाद्या इति वक्ष्यमाणत्वाच्च ।

अकृतजातकर्माद्यसंभवे कथमित्यत आह—चूडाद्या इति । चूडाद्याः संस्कारा

---

पुत्रत्वमुक्तं तत्र कुत आरभ्य कुतःपर्यन्ताः संस्काराः पुत्रत्वं जनयन्तीति जिज्ञासायां जातकर्माद्यन्नप्राशनान्ताः संस्काराः पुत्रत्वसंपादका इति लभ्यते । तदग्रेतने पितृगोत्रेणेति वचने आचूडान्तमित्यत्रान्तग्रहणात ' चूडाद्या यदि संस्कारा० ' इति वक्ष्यमाणवचनाच्च प्रतिग्रहीतृकर्तृकाणां चूडाप्रभृतिसंस्काराणां पुत्रत्वप्राप्तिहेतुत्वावगमेनार्थात्तत्पूर्वस्मिन् वचने तत्पूर्वभाविसंस्काराणां जातकर्माद्यन्नप्राशनान्तानां पुत्रत्वप्राप्तिहेतुत्वमिति स्पष्टमेवोक्तं भवतीति भावः । अत्रेदमवधेयम्—प्रतिग्रहीतुरेव जातकर्मादिविधानाज्जातमात्रप्रतिग्रहो मुख्यः । इहाप्याचूडान्तमित्युक्तेश्च । पञ्चवर्षान्तं गौणः । ' ऊर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ' इत्युक्तेरिति भावः ।

नन्वकृतजातकर्मादेः पुत्रस्य लाभासंभवे किं कार्यमित्याशङ्कायामाह—**चूडाद्या यदि संस्कारा इति** । यदि चूडाद्याः संस्कारा निजगोत्रेण प्रतिग्रहीतृगोत्रेण कृताः, वैशब्दोऽवधारणे । तदैव दत्ताद्यास्तनयाः स्युरन्यथा ते दासा उच्यन्त इति तदर्थः । चूडा आद्या येषामिति बहुव्रीहिः । न तु चूडाया आद्या इति तत्पुरुषः । तथा सति ' दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः ' इत्यनेनास्य समानार्थकत्वात्पौनरुक्त्यापत्तेः ।

ननु चूडाया आद्या इत्येवं तत्पुरुषे स्वीक्रियमाणे जातकर्माद्यन्नप्राशनान्ताः संस्काराश्चूडाद्यशब्देनाभिहिता भवन्ति । तथा चानेन वचनेन जातकर्माद्यन्नप्राशनान्तसंस्कारैः पुत्रत्वं भवतीति लभ्यते । दत्ताद्या अपीत्यत्र तु सामान्यतः ' संस्कृताः ' इत्युक्तत्वात्संस्कारैः पुत्रत्वमभिधीयते । ते च संस्काराः कियन्त इत्यपेक्षायामविशेषाज्जातकर्मादयोऽखिलाः संस्कारा उपतिष्ठन्त इति कथं दत्ताद्या इत्यनेन चूडाद्या इत्यस्य समानार्थकत्वमिति चेदुच्यते । आचूडान्तमित्यत्रत्यान्तग्रहणेन चूडासंस्कारस्य तत्प्रभृतिसंस्काराणां वा प्रतिग्रहीतृगोत्रेणानुष्ठाने सति पुत्रत्वप्राप्तेरभिधानेन तत्पूर्ववचने तत्प्राग्वर्तिसंस्काराणां पुत्रत्वप्राप्तिहेतुत्वलाभाद् ' दत्ताद्याः ' इति वचनेन प्रतिग्रहीतृकर्तृकैर्जातकर्माद्यन्नप्राशनान्तसंस्कारैः पुत्रत्वमुच्यते, चूडाया आद्या इति तत्पुरुषे समाश्रीयमाणे चूडाद्या इत्यनेनापि प्रतिग्रहीतृकर्तृकैर्जातकर्मा-

निजगोत्रेण प्रतिग्रहीतृगोत्रेण कृताः, वैशब्दोऽवधारणे, तदैव दत्ताद्यास्तनयाः स्युरन्यथा तेषां दासतोच्यत इति । चूडा आद्या येषां ते तथेति । नतु चूडाया आद्या इति पूर्वेण पौनरुक्त्यापातात् । अनेन[९६] जातकर्माद्यन्नप्राशनान्तानां जनकगोत्रेणानुष्ठानेऽपि न विरोधः। तथा चाकृतजातकर्मादिर्मुख्योऽकृतचूडोऽनुकल्प इति सिध्यति । दत्ताद्याः[९७] इत्याद्यपदेन कृत्रिमादिग्रहणमित्युक्तमेव । तेषामपि संस्कारैरेव पुत्रत्वं न परिग्रहणमात्रेण । अन्यथा दासतोच्यत इति विपक्षबाधकात् । अन्यथा चूडाद्यकरणे कृतचूडादिपरिग्रहे वा दासता भवति । नतु पुत्रत्वमित्यर्थः । अस्य पुत्रत्वस्य यूपत्वादिवत्संस्कारजन्यत्वात् । असंस्कृतः

द्यन्नप्राशनान्तसंस्कारैः पुत्रत्वमुच्यत इति पुनरुक्तता स्यात् । अतस्तत्पुरुषं लघुभूतमपि परित्यज्य गुरुभूतोऽपि बहुव्रीहिरेव चूडाद्यपदे आश्रितः । अनेन च जातकर्माद्यन्नप्राशनान्तानां संस्काराणां जनकगोत्रेणानुष्ठानेऽपि न विरोधः । चूडाप्रभृतिसंस्काराः प्रतिग्रहीतृगोत्रेण कृताः सन्तः पुत्रत्वसंपादका भवन्तीति प्रतिपादनात् । तथा चाकृतजातकर्मादिः पुत्रो मुख्यः । अकृतचूडस्त्वनुकल्प इति फलतीत्यर्थः । दत्ताद्या इति वचनस्य प्रथमतोऽभिहितत्वात् ' मुख्यः स्यात्प्रथमः कल्पः ' इति न्यायेन जातमात्रग्रहणस्य मुख्यत्वं प्रतीयते । चूडाद्या इत्यस्य तु तदनन्तरमुक्तत्वाद् ' द्वितीयो ह्यनुकल्पकः ' इत्युक्तरीत्याऽकृतचूडादिपरिग्रहस्यानुकल्पत्वं जघन्यत्वं प्रतीयत इति भावः । दत्ताद्या इत्याद्यपदेन कृत्रिमादीनां क्रीतान्तानां ग्रहणमित्युक्तमेव प्राक् । तेषामपि संस्कारैरेव पुत्रत्व भवति नतु परिग्रहमात्रेण । अन्यथा दास उच्यत इति चतुर्थचरणेन बाधकाभिधानात् । अन्यथा—चूडादिसंस्काराणामकरणे कृतचूडादेः परिग्रहे वा दासता भवति नतु पुत्रतेत्यर्थः । तथा च चूडाद्यकरणे पुत्रतापवादिका दासतोक्तेति यावत् । एवं चान्वयव्यतिरेकाभ्यां जातकर्माद्यन्नप्राशनान्तसंस्काराणां चूडाप्रभृतिसंस्काराणां वा पुत्रत्वोत्पत्तिहेतुतोक्तेति तात्पर्यम् । चूडाद्यसंस्काराननुष्ठाने कृतचूडस्य ग्रहणे पुत्रत्वं नेत्युक्तं तत्र बीजं प्रदर्शयन्नाह—**अस्येति** । दत्तकपुत्रत्वस्येत्यर्थः । **जन्यत्वादिति** । जातकर्मादिसंस्कारजन्यत्वादित्यर्थः । यथा शास्त्रे सर्वत्र यूपं तक्षतीति तक्षणादिना संस्कृते काष्ठविशेषे यूपशब्दः प्रयुज्यते, यथा वाऽऽहवनीयशब्दः सर्वत्र शास्त्र आधानादिना संस्कृतेऽग्नौ प्रयुज्यत इति कृत्वा यूपत्वमाहवनीयत्वं च संस्कारजन्यं भवति तद्वद्दत्तकपुत्रत्वमपि जातकर्मादिसंस्कारजन्यमेवेति तदभावे तन्नोत्पद्यत इत्याशयेनोक्तं ' अन्यथा दास उच्यते ' इति । एवं चाकृतजातकर्मादिसंस्कारः पुत्रो ग्राह्य इति स्थितम् । तत्र

पुत्रीकार्य इति स्थितं तत्रावध्यपेक्षायामाह—ऊर्ध्वमिति। असंस्कृतोऽपि पञ्चमादूर्ध्वं न ग्राह्यः। कालाभावेन पुत्रत्वानुपपत्तेः। अनेन पञ्चैव वर्षाणि पुत्रपरिग्रहकाल इत्युक्तं भवति। तद्व्यतिरेकेणाभिधानं तु पञ्चमानन्तरं गौणोऽपि कालो नास्तीति प्रतिपादनाय। अन्यथा—

'स्वकालादुत्तरः कालो गौणः सर्वः प्रकीर्तितः'

इति न्यायेन पञ्चमानन्तरस्य गौणकालतापत्तेः। ततश्च जननमारभ्याऽऽतृतीयवर्षं तत्रापि तृतीयवर्षस्य मुख्यकालतया 'ऊर्ध्वं तु पञ्चमाद्वर्षात्' इत्युपसंहारे वर्षश्रवणाच्चात्रापि चूडाशब्दस्य तृतीयवर्षपरतैवाभिप्रेतेति गम्यते। अन्यथोपनीतिसहभावपक्षेऽष्टमवर्षमकृतचूडस्य परिग्रहापत्तेः। न चेष्टापत्तिः। ऊर्ध्वं तु पञ्चमाद्वर्षादित्यनेन विरोधात्। तस्मादाचूडान्तमित्यत्र चूडाशब्दस्तृतीयवर्षपर एव युक्तः। तृतीयानन्तरमापञ्चमं गौणः। ऊर्ध्वं तु गौणोऽपि नेति स्थितम्। सुता इत्यनेन

कियद्वयायनो ग्राह्य इति वयोवध्यपेक्षायामाह—ऊर्ध्वं तु पञ्चमादिति। अकृतजातादिसंस्कारोऽपि पञ्चमाद्वर्षादूर्ध्वं न ग्राह्यः। पञ्चमवर्षादनन्तरं ग्रहणकालाभावेन पुत्रत्वोत्पत्त्यनुपपत्तेः। ऊर्ध्वं न ग्राह्य इत्युक्त्या पञ्चवर्षपर्यन्तं पुत्रप्रतिग्रहणकाल इत्युक्तं भवति। ननु जन्मन आरभ्य पञ्चवर्षान्तर्गतः पुत्रो ग्राह्य इति विधिमुखेन पुत्रपरिग्रहकालबोधनं परित्यज्योर्ध्वं न ग्राह्य इति निषेधमुखेन कालबोधनं किमर्थमित्याशङ्कयाऽऽह—तद्व्यतिरेकेणेति। पञ्चमवर्षादनन्तरं पुत्रो न ग्राह्य इति व्यतिरेकमुखेण पुत्रपरिग्रहकालाभिधानस्य प्रयोजनं पञ्चमादूर्ध्वं गौणोऽपि कालो नास्तीति बोधनमेव। पञ्चवर्षान्तर्गतः पुत्रो ग्राह्य इत्येवं रीत्या पुत्रप्रतिग्रहकालाभिधाने तु 'स्वकालादुत्तरः कालो गौणः सर्वः प्रकीर्तितः' इत्यभियुक्तोक्तेः पञ्चमवर्षादूर्ध्वं गौणोऽपि कालोऽस्तीति विज्ञायेत। तन्मा विज्ञायीति तस्य पुत्रप्रतिग्रहकालस्य व्यतिरेकेण निषेधेनाभिधानमङ्गीकृतमिति भावः। ततश्च जनिमारभ्य तृतीयवर्षमभिव्याप्य मुख्यः कालः। 'अथातस्तृतीयवर्षे चूडाकरणम्' इति सूत्रात्तृतीयवर्षस्य चूडामुख्यकालतया 'ऊर्ध्वं तु पञ्चमाद्वर्षात्' इत्युपसंहारात्मकवचने वर्षशब्दश्रवणाच्च 'चूडाया यदि०' इत्यत्रापि चूडाशब्दस्य वर्षपरत्वमेवाभिप्रेतमिति गम्यते। अन्यथोपनयनेन सह चौलकरणपक्षे स्वीकृतेऽष्टमवर्षपर्यन्तमकृतचूडासंस्कारस्य ग्रहणापत्तिः स्यात्। न चाकृतचूडस्याष्टमवर्षपर्यन्तं ग्रहणमिष्टमेवेति वाच्यम्। 'ऊर्ध्वं तु पञ्चमाद्वर्षात्०' इति निषेधेनानिष्टत्वावगमात्। अत 'आचूडान्तम्' इत्यत्र चूडाशब्दस्तृतीयवर्षोपलक्षक इत्येव युक्तम्। अथ तृतीयवर्षानन्तरं पञ्चमवर्षम-

पुत्रतानुत्पत्तावपि चूडादिसंस्कारा उत्पद्यन्त एव तत्तत्कालसद्भावादित्युक्तम्। तथाऽपि दासतैव पुत्रत्वाभावात्। इदं च तृतीयं दासतानिमित्तम्। यत्तु कात्यायनस्मरणम्—

विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः।
दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत्॥

इत्यनिच्छतां दानादिनिषेधः। सोऽपि पञ्चवार्षिकस्यैव नाधिकस्येति व्या-

भिव्याप्य गौणः कालः। तदूर्ध्वं तु गौणोऽपि कालो नास्तीति समवस्थितम्। न दत्ताद्याः सुता इत्युक्त्या पुत्रत्वस्यानुत्पादेऽपि चूडाद्याः संस्कारा उत्पद्यन्त एवेति बोध्यम्। तत्तत्संस्कारकालस्य सत्त्वादिति प्रागुपपादितमेव। अकृतजातकर्मादिसंस्कारस्य पञ्चमवर्षादूर्ध्वं परिगृहीतस्य यद्यपि संस्कारा उत्पद्यन्ते तथाऽपि दासतैव न पुत्रत्वम्। पुत्रत्वाभावादिति। प्रतिग्रहणकालाभावेन तत्र गृहीतस्य तस्याशास्त्रीयत्वादिति शेषः। इदं तृतीयं दासतानिमित्तमिति। पञ्चमवर्षादूर्ध्वं जातकर्मादिभिरसंस्कृतस्यापि परिगृहीतस्य प्रतिग्रहीत्रा निखिलसंस्कारकरणेऽपि दासतैव न पुत्रत्वमित्येवमुक्तमिदं दासताप्राप्तिनिमित्तं तृतीयमित्यर्थः। तृतीयमित्युक्त्या द्वितीयं प्रथमं च दासतानिमित्तं किमिति जिज्ञासायामुदितायामुच्यते—पितुर्गोत्रेणेति वचनाश्रयेण जनकगोत्रेण यस्य जातकर्मादिचूडान्ताः संस्काराः संपादितास्तादृशस्य परिग्रहणं प्रथमं दासतानिमित्तम्। दत्ताद्या अपीति वचनाश्रयेण दत्तादीनामपि संस्कारैरेव पुत्रत्वं न परिग्रहमात्रेणेत्युक्तम्। तथा चाकृतजातकर्मादेः प्रतिग्रहेऽपि प्रतिग्रहीत्रा तस्य संस्काराननुष्ठानमिदं द्वितीयं दासतानिमित्तम्। तृतीयं तु 'ऊर्ध्वं तु पञ्चमाद्वर्षात्' इति वचनेन निषिद्धस्य यत्परिग्रहणं तदित्युक्तमेवेति।

**विक्रयं चैव दानं चेति**। आत्मदानमनिच्छतः पुत्रस्य दानप्रतिषेधके कात्यायनवचनेऽनिच्छव इति पदोपादानस्वारस्यमाहात्म्यात्पञ्चवर्षदेशीयस्य निसर्गत इच्छाराहित्यात्पञ्चवर्षाभ्यधिकस्यैव चेच्छासंभवात्पञ्चवर्षाभ्यधिकस्यैव परिग्रहः प्राप्नोतीति केचिद्ब्रुवते तान्प्रत्यादिशति—**यस्त्विति**। **विक्रयं चैवेति**। आत्मदानाद्यनिच्छवो दाराः पुत्राश्च विक्रयं दानं च न नेया इति तदर्थः। इत्येवं योऽयं दानादिनिषेधः प्रोक्तः कात्यायनेन सोऽपि पञ्चवर्षान्तर्गतवयस एवेति विज्ञेयं न तु पञ्चवर्षाभ्यधिकवयसः। तथा सति पञ्चवर्षाभ्यधिकवयसः परिग्रहस्य 'ऊर्ध्वं तु पञ्चमाद्वर्षात्' इत्यनेन निषेधात्तत्र तद्दानप्राप्तेरेवाभावेनानिच्छूनां दानादिनिषेधानुपपत्तिप्रसङ्गात। न च पञ्चवर्षान्तर्वर्तिनः स्वरसत इच्छाद्यसंभव इति वाच्यम्। तत्रापि तीव्रबुद्धेः स्वरसत इच्छादेः संभवात्। अत

ख्येयम्। यच्च सदृशं तु प्रकुर्याद्यमिति वाक्ये गुणदोषविचक्षणमिति पाठमभिप्रेत्य विचक्षणं न तु बालमिति सर्वज्ञेन व्याख्यातं तदपि पञ्चवार्षिकमेव । विचक्षणं चातुर्यविशेषेण न तु बालम् । बाल आ षोडशाद्वर्षादिति लक्षणविशिष्टं न कुर्यादित्यर्थ इति व्याख्येयम् । तर्ह्यसंस्कृताभावे कथमित्यत आह—गृहीत्वेति । पञ्चवर्षीयं चूडान्तसंस्कारसंस्कृतमित्यर्थः । ननु कथं तस्य ग्रहणं दासताभि-

---

एव—' ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ' ( म० स्मृ० २ । ३७ ) इति मनुवचनव्याख्यानावसरे ' वेदाध्ययनतदर्थज्ञानादिप्रकर्षकृतं तेजो ब्रह्मवर्चसम् । तत्कामस्य ब्राह्मणस्य गर्भपञ्चमे वर्ष उपनयनं कार्यम् ' इति कुल्लूकेनोक्तं सामीचीन्येन संगच्छते । मन्दबुद्धेरष्टमेऽपि वर्षे स्वरसतस्तदिच्छाद्यसंभवाच्च । तथा ' सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ' ( म० स्मृ० ९ । १६९ ) इति कृत्रिमपुत्रलक्षणप्रतिपादके मनुवाक्ये विचक्षणमिति विशेषणोपादानात्पञ्चवर्षान्तर्वर्तिनो बालस्य विचक्षणत्वस्य गुणदोषाभिज्ञत्वस्यासंभवात्तदूर्ध्वमेव सुतरां तत्संभवात्पञ्चवर्षादूर्ध्वमपि पुत्रग्रहणं समुचितमिति कश्चिदाह त प्रत्याह—यच्चेत्यादि । सर्वज्ञेन व्याख्यातमिति । ' विचक्षणं गुणदोषाभिज्ञं नतु बालम् ' गुणदोषानभिज्ञमिति ' सदृशं तु प्रकुर्यात्० ' इति मनुवचनव्याख्यावसरे सर्वज्ञाख्येन तट्टीकाकृतोक्तं तदपि पञ्चवर्षीयपुत्रविषयकत्वेनैव व्याख्येयम । ' गृहीत्वा पञ्चवर्षीयम्० ' ' ऊर्ध्वं तु पञ्चमाद्वर्षात् ' इत्याभ्यामस्यैकवाक्यतालाघवादिति भावः । व्याख्या चैवम्—विचक्षणं चातुर्यविशेषणाभिज्ञं कुर्यादिति शेषः । न बालमित्यस्य ' बाल आ षोडशाद्वर्षात ' इति लक्षणलक्षितं बालं न कुर्यादिति । पञ्चवर्षान्तर्वर्तिनं बुद्धिचातुर्येण विचक्षणं पुत्रीं कुर्यात् । पञ्चवर्षादूर्ध्वं षोडशवर्षान्तर्वर्तिनं बालं न पुत्रीं कुर्यादिति तात्पर्यम् ।

नन्वकृतजातकर्मादिसंस्कारस्य पुत्रस्यालाभे का गतिरत आह—गृहीत्वेति । पञ्चवर्षीयमित्यस्य पञ्चवर्षान्तर्गते वयस्यवस्थितत्वे सति कृतचूडादिसंस्कारमित्यर्थः । पुत्रेष्टिं प्रथमं चरेदिति चतुर्थपादेन पुत्रपूतत्वार्थं पुत्रेष्टेरभिधानात् । यदि तु पञ्चवर्षीयमित्यस्य पञ्चवर्षान्तर्वर्तिनमित्येवार्थोऽभिप्रेतः स्यात्तर्ह्यजातजातकर्मादिसंस्कारस्य पञ्चवार्षिकपुत्रस्य परिग्रहणं सर्वथा शास्त्रशुद्धमिति तत्र दोषलेशस्याप्यनुत्पत्त्या पूतत्वार्थेष्टिविधानानुपपत्तिः । यदि च ' ऊर्ध्वं तु पञ्चमाद्वर्षात् ' इति निषेधाविषयस्यापि पञ्चवर्षीयस्य कृतचूडस्य ग्रहणं क्रियेत तदा दातृगोत्रेण चूडान्तसंस्काराणां संजातत्वात् ' चूडाद्या यदि० अन्यथा दास उच्यते ' इति कृतचूडस्य ग्रहणे चूडासंस्कारस्य पालकगोत्रेणासंजातत्वाद्दासताभिधानेन तद्दोषापगमार्थं

धानादित्यत आह—पुत्रेष्टिमिति । अयमत्राभिसंधिः । अग्नये पुत्रवते पुरोडाश-मष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां जनयति वृद्धामिन्द्रः प्रयच्छतीति वाक्ये प्रजाफलकत्वमिष्टेः श्रूयते । तद्यत्रानुत्पन्ना प्रजा तत्र तदुत्पत्तिरेव भाव्या । यत्र तूत्पन्ना परिगृह्यते तत्रो-त्पत्तेरभावात्तस्याः प्रजात्वमेव भाव्यमिति कल्प्यते । प्रकृतविध्यन्यथानुपपत्तेः ।

---

पुत्रेष्टिविधानमुपपद्यते । तथा च पञ्चवार्षिकं कृतचूडं पुत्रं गृहीत्वा पालकेन विहि-तकर्मान्तरानुष्ठानात्प्रथमं पुत्रेष्टिः कार्या । सा च तस्य दासभावापनायिकेति भावः ।

**पुत्रेष्टिमिति** । अत्रेदं बोध्यम्—अग्नये पुत्रवत्त्वगुणविशिष्टायाष्टाकपालं पुरोडाशं, तथा पुत्रवत्त्वगुणयुक्तेन्द्रदेवताया एकादशकपालेषु संस्कृतं पुरोडाशं प्रजां कामय-मानः पुरुषो निर्वपेत् । तथा सत्यग्निरेव प्रीतोऽस्मै प्रजाकामिने पुरुषाय प्रजां संततिं जनयति, इन्द्रश्चापि वृद्धां वृद्धियुक्तां प्रजां प्रयच्छति ददातीति वाक्येनो-क्तायाः पुत्रेष्टेः प्रजारूपफलं श्रूयते । प्रजाकाम इत्युक्तेरित्यर्थः । तत्र यत्र स्थले तादृशेष्टिकर्तुर्मूलत एव प्रजा नोत्पन्नाऽस्ति तत्र तादृशेष्ट्यनुष्ठानेन प्रजां भावयेदि-त्यर्थात्प्रजोत्पत्तिरेव भाव्या संपाद्येत्यर्थः । यत्र तु प्रजोत्पन्ना परिगृह्यते तत्रोत्पत्तेः संजातत्वेन तस्याः प्रजायाः प्रजात्वमेव केवलं भाव्यं संपाद्यमिति कल्प्यते ।

एवं कल्पने प्रमाणं वक्तुमाह—**प्रकृतविधीति** । प्रकृतो यः पुत्रेष्टिविधिः पञ्चवर्षीयं गृहीत्वा 'पुत्रेष्टिं प्रथमं चरेत्' इति चतुर्थचरणेनोक्तस्तस्यैवं प्रजाफलकत्वकल्प-नमन्तरेणानुपपत्तेरसंगतेरित्यर्थः । यदि च निरुक्तपुत्रेष्टिप्रतिपादकवाक्ये पुत्रेष्ट्या प्रजां भावयेदित्यर्थात्पुत्रेष्टेः प्रजोत्पत्तिरेव फलं स्यात्तदा पञ्चवर्षीये गृहीते दत्तके पुत्रेष्टिविधानमसंगतं स्यात् । तत्र कृतचूडस्य पुत्रस्योत्पन्नत्वेनोत्पत्तेः प्रागेव सिद्धत्वेन प्रजोत्पत्तिसाधिकायाः पुत्रेष्टेर्विधानस्य सुतरामसंभवादिति भावः । सत्यप्येवं यत्तादृ-शस्थले पुत्रेष्ट्याचरणं विधत्ते ततः पश्यत्येवमृषिप्रवरो यत्रोत्पन्ना प्रजा परिगृह्यते तत्र पुत्रेष्ट्या केवलं प्रजात्वमेव भाव्यत इति । यथा 'संध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्' इति पापक्षयपूर्व-कब्रह्मलोकप्राप्तिः संध्योपासनस्य यत्फलमुक्तं तत्सपापविषयकम् । यस्त्वादावेव निष्पा-पस्तत्र विधूतपापत्वांशस्य सिद्धत्वेन विधातुमयोग्यत्वात्केवलं ब्रह्मलोकावाप्तिरेव संध्यो-पासनस्य फलमुच्यते तद्वत् । पुत्रेष्टेर्नैकमेव प्रजोत्पत्तिः फलं किंतु केवलं प्रजात्व-मपि तत्फलं भवतीति यावत् । तच्च प्रजात्वं तदपवादकदासत्वदूरीकरणमन्तरा न संभवतीति दासत्वापगमोऽपि प्रकृतस्थलीयपुत्रेष्टिविधिसामर्थ्यादेव भवतीत्यङ्गीकार्यम् ।

तत्र दासत्वापनोदनमृते न संभवतीति तदपनोदोऽप्यवश्यमभ्युपेयः । अन्यथा प्रजात्वमात्रसंपादकत्वे पुत्रपरिग्रहमात्रे स्यात् । यदि च संस्कारैरेव तत्र पुत्रतोत्पत्तेर्न तदपेक्षेति तर्हि प्रकृतेऽपि तुल्यं प्रथमपदेनात्र तत्सूचनात् ।

‘ सर्वांस्तु कुर्यात्संस्काराञ्जातकर्मादिकान्नरः ’

इत्यन्तेऽभिधानाच्च । तस्मात्पुत्रेष्ट्या पूर्वसंस्कारप्रयुक्तदासत्वापनोदपूर्वकप्रजात्वसंपादनात्संस्कृतोऽपि परिग्राह्य इति स्थितम् । यद्येवं तर्हि संस्कृतमित्येव वाच्यम् । किं पञ्चवर्षीयपदोपादानेनेति चेत् । मैवम् । पञ्चवर्षीयस्यैवेति निय-

---

**अन्यथेति** । उक्तवैपरीत्ये । पुत्रेष्टेः केवलप्रजात्वनिष्पादकत्व इत्यर्थः । **पुत्रपरिग्रहमात्रेति** । यत्राजातजातकर्मादेः पुत्रस्य परिग्रहेण दासता नास्ति तत्र प्रजात्वसंपत्त्यर्थं पुत्रेष्टिविधानं चरितार्थं स्यादिति भावः ।

ननु यत्र दासता न भवति तत्र प्रतिग्रहीतृकर्तृकैर्जातकर्मादिसंस्कारैरेव पुत्रत्वं भाव्यत इति नास्ति तत्र पुत्रेष्टेरपेक्षा । जातकर्मादिसंस्कारकरणेनापि पुत्रत्वोत्पत्तेः प्रागभिहितत्वादित्याशङ्कयाऽऽह—**यदि च संस्कारैरेवेति** । दासताभावस्थले संस्कारैरेव पुत्रत्वोत्पत्तेः सिद्धत्वान्नास्ति पुत्रेष्टेरपेक्षेति ब्रूषे चेदाह—**प्रकृतेऽपि तुल्यमिति** । चूडान्तसंस्कारैर्जनकगोत्रेण संस्कृतस्य परिग्रहेऽपि । यथाऽजातसंस्काराणां ग्रहणे संस्कारोऽवश्यमपेक्षणीयस्तथा जातसंस्काराणां ग्रहणेऽपि संस्कारोऽपेक्षणीय इति तुल्यमित्यर्थः ।

नन्वजातसंस्कारस्य संस्कारोऽपेक्षणीय इति युक्तिसहं किंतु कृतसंस्कारस्य संस्कारापेक्षायां किं प्रमाणमत आह—**प्रथमेति** । ‘ पुत्रेष्टिं प्रथमं चरेत् ’ इत्यत्रत्यप्रथमपदेन कृतसंस्कारस्यापि संस्कारकरणापेक्षासूचनात् । गृहीत्वेति वचनस्य कृतचूडविषयत्वावश्यंभावः प्रागुक्त एव । तथा च कृतचूडं पञ्चवर्षीयं गृहीत्वा प्रथमं प्राक्पुत्रेष्टिः कर्तव्येत्युक्तम् । तत्र प्रथममित्युक्तत्वात्पुत्रेष्टेः प्राथम्यं किमपेक्षयेति जिज्ञासायां संस्कारेभ्यः प्रथममिति लभ्यते । एवं च कृतसंस्कारस्यापि संस्कारापेक्षेति प्रथमपदेन सूचितमिति भावः । किंच गृहीत्वेति वचनानन्तरं ‘ सर्वांस्तु कुर्यात्संस्काराञ्जातकर्मादिकानथ ’ इत्यनेन कृतसंस्कारस्यापि संस्कारापेक्षायाः स्पष्टमुक्तेः । अतः पुत्रेष्ट्या जनकगोत्रेण कृता ये संस्कारास्तत्प्रयुक्तं यद्दासत्वं तदपगमपूर्वकं प्रजात्वस्य संपादनात्संस्कृतोऽपि परिग्राह्य इति समवस्थितम् । नन्वेवं ‘ गृहीत्वा कृतसंस्कारम् ’ इत्येव स्पष्टं वक्तव्यं किमर्थं पञ्चवर्षीयमित्युक्तमत आह—**नियमार्थत्वादिति** । नियमश्चैवम्—कृतसंस्कारो यदि गृह्यते तर्हि पञ्चवर्षीय एव ग्राह्यो न तदधिकवया इति । तत्रापि पञ्चवर्षीयोऽप्येतादृश एव ग्राह्यो भवति—‘ ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ’ इति मनुवचनानुसारेणाक्षरस्वीकारपूर्वकब्रह्मवर्चसफलकं

मार्थत्वात् । नियमश्चाक्षरग्रहणपूर्वकब्रह्मवर्चसफलकोपनयनप्राप्त्यर्थः । न चायं नियमः पूर्ववाक्येनैव सिद्ध इति वाच्यम् । तस्याकृतसंस्कारावधिसमर्पकत्वेन प्रकृतार्थत्वाभावे परिगृहीतत्वात् । प्रथममिति । संस्कारेभ्यः प्रागित्यर्थः ।

ननु परिग्रहहोमादेव प्रागिति कुतो नेष्यते । गृहीत्वेति साङ्गाया ग्रहणभावनायाः क्त्वाप्रत्ययेन पूर्वकालतावगमात् । पुत्रेष्ट्या पूर्वसंस्कारापनोदेन संस्कारान्तरावश्यपेक्षणाच्चेति । यदुक्तमूर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता इति । तस्यापवादमाह–पौनर्भवं त्विति । 'अक्षतायां क्षतायां वा जातः पौनर्भवः

---

यदुपनयनं तत्कर्तृत्वं प्रतिग्रहीतुः प्राप्नुयादित्याह—**नियमश्चेत्यादि** । ननु सोऽसौ नियमः 'ऊर्ध्वं तु पञ्चमाद्वर्षात' इति पूर्ववाक्येनैव सिद्ध इत्याशङ्क्याऽऽह—**तस्याकृतसंस्कारेति** । अकृतसंस्कारो ग्राह्य इति मुख्यपक्षेऽकृतसंस्कारोऽप्येकद्वित्रीत्यादिकियद्वर्षपर्यन्तवया ग्राह्य इत्याकाङ्क्षायां पञ्चवर्षपर्यन्तवया ग्राह्य इत्येवं वयोवधिप्रदर्शनेन 'ऊर्ध्वं त्विति वचनस्य चरितार्थ्येन नियामकत्वासंभवान्नियमार्थं पुनर्वचनारम्भो युक्त एवेति न काचित्क्षतिः । **प्रकृतार्थत्वाभाव इति** । प्रकृतो योऽर्थः कृतचूडः पुत्रस्तद्विषयकत्वाभावे सति 'गृहीत्वेति' वचनं नियमार्थत्वेन परिगृहीतमित्यर्थः ।

ननु प्रथममित्यस्य संस्कारेभ्यः प्रागित्यर्थः क्रियते तत्र दत्तकपरिग्रहहोमात्प्रागेवेत्यर्थः कुतो न स्वी क्रियते तत्राऽऽह—**क्त्वाप्रत्ययेनेति** । 'समानकर्तृकयोः पूर्वकाले' ( पा० सू० ३ । ४ । २१ ) इति पाणिनिस्मृतेः पूर्वकालवाचिना गृहीत्वेति ग्रहधातूत्तरेण क्त्वाप्रत्ययेन होमाद्यङ्गजातसहिते दत्तकपरिग्रहविधौ निर्वृत्ते सति पश्चात्पुत्रेष्टिर्विहिता । यदि तु पुत्रपरिग्रहाङ्गहोमात्प्रागेव पुत्रेष्टिरनुष्ठीयेत तर्हि क्त्वाप्रत्ययेन बोधितः पुत्रपरिग्रहपुत्रेष्ट्योः पूर्वोत्तरकालविभागो बाध्येत । नह्यङ्गभूतहोमात्प्राक्क्रियमाणा पुत्रेष्टिः साङ्गपरिग्रहविध्यनुष्ठानानन्तरकाले कृता भवति । तस्मात्पुत्रपरिग्रहविध्यनन्तरकाले विहितायाः पुत्रेष्टेस्तदङ्गभूतहोमानन्तरकालिकत्वस्यावश्यंभावेन होमात्प्रागिति वक्तुमशक्यमिति भावः । किंचेयं पुत्रेष्टिर्दासभावापनोदार्थं विहिता । दासभावश्च जनकगोत्रकृतसंस्कारप्रयुक्तः । दासभावस्यात्यन्तापनोदश्च तत्कारणापनोदमन्तरा न संभवतीति पूर्वजातसंस्कारापनोदोऽपि पुत्रेष्ट्या भवतीति स्वीकर्तव्यम् । ततश्च यथाऽकृतसंस्कारस्य संस्कारान्तरापेक्षाऽऽवश्यकी तद्वत्कृतसंस्कारस्यापि पुत्रेष्ट्या पूर्वजातसंस्कारनिवर्तनेनाकृतसंस्कारसमत्वात्तत्र संस्कारान्तरापेक्षाया आवश्यकत्वादित्यर्थः । **अपवाद इति** । ऊर्ध्वं तु पञ्चमाद्वर्षादित्यस्यापवादमाहेत्यर्थः । **पौनर्भवं त्विति** । 'अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः' इति याज्ञवल्क्यवचनेन मनोदत्ता, वाचादत्ता, अग्निं परि-

स्मृत इत्यनेन सप्तविधायामपि पुनर्भ्वां जातः संगृहीतः । जातमात्रमुत्पन्नमात्रम् । तेनोत्पत्तिकाल एव न कालान्तर इत्यर्थः । समानयेत्—परिग्रहविधिना परिगृह्णीयात् । ननु जातमात्रस्य जातकर्मैवोचितं कुमारं जातं पुराऽन्यैरालम्भादिति सूत्रात् । तत्कथमुच्यते जातमात्रं समानयेदिति । सत्यम् । अपरिगृहीतस्य स्वसुतत्वाभावे संस्कारानुपपत्तेः । संस्कुर्यात्स्वसुतान्पितेति स्मरणात् । न च बीजसंबन्धादेव स्वत्वम् । बीजाद्योनिर्बलीयसीत्यपवादात् । समयादन्यस्येति गौतमस्मरणाच्च । अन्यस्य जनयितुः पुत्रः समयादेवेत्यर्थः । तस्मादत्र जातकर्मणः प्राक्

गता, सप्तमं पदं नीता, भुक्ता, गृहीतगर्भा, प्रसूतेति सप्तविधासु पुनर्भूषु जातः संगृहीतः । तं पौनर्भवं जातमात्रम्—उत्पन्नमात्रम् । उत्पत्तिसमकालमेव गृह्णीयान्न तत्र कालान्तरं कर्तव्यमिति यावत् । समानयेदित्यस्य परिग्रहविधिना गृह्णीयादित्यर्थः । जातमात्रं गृह्णीयादित्युक्तम् । तत्र जातमात्रस्याऽऽदौ ग्रहणं पश्चाज्जातकर्माथवा प्रथमतो जातकर्मानन्तरं परिग्रह इत्येवमाशङ्क्य संस्कुर्यात्स्वसुतान्पितेति स्मृतौ स्वसुतानित्युक्तत्वात्परिगृहीते स्वीयसुतत्वसंपादनमन्तरेण तत्र जातकर्मादिसंस्कारप्रवृत्तेरसंभवादादौ परिग्रह एव कार्यः । तेन च परिगृहीते स्वसुतत्वे संपादिते ततः संस्कारप्रवृत्तिर्न्याय्येत्याह—**अपरिगृहीतस्येति** ।

ननु पौनर्भवे बीजसंबन्धादेव प्रतिग्रहीतुः सुतत्वं सिद्धमिति न तत्र स्वसुतत्वसंपादने परिग्रहविध्यपेक्षेत्याशङ्कायामाह—**बीजाद्योनिरिति** । फलं त्वनभिसंधाय० बीजाद्योनिर्बलीयसी ( म० स्मृ० ९ । ५२ )। बीजापेक्षया योनेर्बलीयस्त्वे दृष्टान्तः ( म० स्मृ० ९।५०।५१ ) श्लोकयाद्रष्टव्यः । बीजापेक्षया योनिर्बलीयसीति तदर्थः । यद्यपि 'बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते' ( म० स्मृ० ९ । ३५ ) अनेन बीजक्षेत्रयोर्मध्ये बीजं प्रधानमभिधीयते तथाऽपि बीजप्राधान्यस्य योनिर्बलीयसीत्ययमपवादः । तथा च क्वचिद्बीजापेक्षया क्षेत्रस्य प्राधान्यं भवतीत्यर्थः । अत एव 'क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा' ( या० स्मृ० २ । १२८ ) 'यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा । स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः' ( म० स्मृ० ९ । १६७ ) इति मनुयाज्ञवल्क्यौ यत्परक्षेत्रे नियुक्तेन सगोत्रेणासगोत्रेण वोत्पादितस्य पुत्रस्य क्षेत्रिणः पुत्रत्वमाहतुस्तत्सामीचीन्येन संगच्छते । किंचान्यस्य जनयितुः पुत्रो यदपत्यमत्रोत्पत्स्यते तदावयोः समानं भविष्यतीत्यादिसमयादेव भवतीत्यर्थिका 'समयादन्यस्य' इति गौतमस्मृतिरप्याह । एवं च बीजाद्योनेर्बलवत्त्वात्समयाभावाच्च पौनर्भवं जनयितुः पुत्रत्वाभावेन तत्सिद्ध्यर्थं परिग्रहविधिरावश्यक इति भावः । तस्मात्पौनर्भवस्य जातकर्मकरणात्प्रागेव

परिग्रह इति । परिग्रहानन्तरं संस्कारप्राप्तावपवादमाह—कृत्वेति । जातमात्रस्य परिग्रहानन्तरं पौनर्भवस्तोमं विधाय पश्चाज्जातकर्मादिसंस्कारान् कुर्यादित्यर्थः ।

नन्विदमनुपपन्नं जातेष्टिन्यायविरोधात् । तथा हि—यथा जातेष्टिर्विधीयते तथाऽत्र पौनर्भवस्तोमो विहितः । स च जातकर्मणः प्राक्क्रियमाणः प्रधानं विरुणद्ध्येव ।

---

परिग्रह इति स्थितम् । परिग्रहानन्तरमप्यादौ पौनर्भवस्तोमं कृत्वा पश्चात्संस्काराः कर्तव्या इत्याह—परिग्रहानन्तरमित्यादि ।

शङ्कते—इदमिति । पौनर्भवस्य पुत्रस्य जननानन्तरं परिग्रहस्तदनन्तरं पौनर्भवस्तोमस्ततो जातकर्मादिः संस्कार इत्येवं यत्क्रमेणोक्तं तदनुपपन्नमिति शङ्काशय इत्यर्थः । विरोधादिति । 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति पुत्रजननानन्तरकाले विहितेष्टिर्जातेष्टिरित्युच्यते । जातकर्मानन्तरं च स्तन्यप्राशनमुक्तं नतु ततः पूर्वम् । ततश्च जननान्तरं प्रथमतो जातेष्टिस्ततो जातकर्म ततः स्तन्यप्राशनमिति क्रमेण विहितानि । तदानीं क्रमिकाणां तेषां करणे स्तन्यपानेऽतिविलम्बापत्त्या कदाचिद्बालविपत्तिशङ्काऽपि स्यात् । अतः सेष्टिरङ्गभूता शेषिणं पुत्रजननिमित्तजातकर्म विरुणद्धीति तादृशबालविपत्तिशङ्कारूपबाधकबलाज्जातकर्मणः प्राक्कालिकाऽपि जातेष्टिरुत्कृष्यते जातकर्मानन्तरमनुष्ठीयत इति यावत् । सोऽयं जातेष्टिन्यायः । सत्येवं पौनर्भवस्तोमं कृत्वा पश्चाज्जातकर्मादिकं कार्यमित्येवं यदुच्यते तज्जातेष्टिन्यायविरुद्धमित्यर्थः । विरोधमेवोपपादयन्नाह—यथा जातेष्टिरित्यादि । यथा जातकर्मणः प्रागप्राप्ता जातेष्टिर्विहिता तथाऽत्र पौनर्भवस्तोमो विहितोऽप्राप्त इति शेषः । स चाङ्गभूतः पौनर्भवस्तोमः पश्वाहसाध्य इति जातकर्मणः प्राक्क्रियमाणः प्रधानमाङ्गि जातकर्म विरुणद्ध्येव । स्तन्यपानेऽतीव दीर्घकालव्यवधानेन जातबालप्राणविपत्तेः सुतरां संभवात् । ततश्च जातेष्टिवज्जातकर्मानन्तरं तदनुष्ठानमुचितमिति कथमुच्यते पौनर्भवस्तोमं कृत्वा पश्चाज्जातकर्मादीति चेत्तत्रोच्यते । न जातेष्टिवदसौ पौनर्भवस्तोमोऽत्रापूर्वतया विधीयतेऽपि त्वन्यत्र विहितस्य पौनर्भवस्तोमस्य जातकर्मादिश्चात्र पौर्वापर्यमात्रं प्रतिपाद्यते । यथा 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' नानेन वाक्येन दर्शपूर्णमासयागः सोमयागो वाऽप्राप्ततया विधीयते, किंत्वन्यत्र वाक्ये विहितयोस्तयोरत्रानुष्ठानार्थं पूर्वोत्तरभावोऽभिधीयते तद्वत् । तथा च वचनेन येन क्रमेण ययोरनुष्ठानं प्रतिपादितं तेनैव क्रमेण तयोरनुष्ठानमवश्यं कार्यम् । शास्त्रेण पौर्वापर्येणैवानुष्ठानस्य विहितत्वात् । अन्यथा शास्त्रोल्लङ्घनजन्यप्रत्यवायापत्तेः । एवं च क्रमप्रतिपादकवचनसामर्थ्याज्जातकर्मणः प्राक् पौनर्भवस्तोमं कृत्वा बालकविपत्तिरूपबाधकसद्भावात्पश्वाहानन्तरं जातकर्मादिक-

पश्चाहसाध्यत्वात्तस्येति चेत् । उच्यते–नात्र पौनर्भवस्तोमो जातेष्टिवदपूर्वो विधीयते । किंत्वन्यत्रोत्पन्नस्य तस्य जातकर्मादीनां च क्रममात्रम्, यथा दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति । तेन न कोऽपि विरोधः । वैशब्दोऽवधारणे । जातमात्रस्यैव न कालान्तर इत्यर्थः । तेनास्य जातेष्टिवदेव पूर्वकालतादिनियमोऽपि न सिध्य-

---

मावश्यकं भवति । शास्त्रेण शब्दतो योऽर्थः प्रतिपादितस्तदर्थानुष्ठानमवश्यं करणीयमपूर्वजनकत्वादकरणे प्रत्यवायापादकत्वाच्च । यश्चार्थो न शाब्दः किंत्वर्थात्सिध्यति तादृशार्थस्योल्लङ्घनेऽपि न काचित्क्षतिः । तदुल्लङ्घनस्य प्रत्यवायापादकत्वाभावात् । पौनर्भवस्तोमजातकर्मणोश्चात्र पूर्वोत्तरभाव एव शास्त्रेण विधीयत इति न तदुल्लङ्घनं कर्तुं शक्यम् । प्रत्यवायापत्तेः । अतः शास्त्रप्रामाण्यात्पश्चाहसाध्यस्यापि पौनर्भवस्तोमस्य जातकर्मणः प्रागनुष्ठानमावश्यकम् । नैव प्राक्तदनुष्ठानमाक्षेपार्हम् । शास्त्रसिद्धत्वात् । तदनन्तरं जातकर्मान्तरेण स्तन्यपानासभवाद्बालप्राणविपत्तिसंभवेनैतद्बाधकबलात्पश्चाहानन्तरं जातकर्मादिकमावश्यकमिति यावत् । 'वैश्वानरं द्वादशकपालं निर्वपेत' इति वाक्येन जातेष्टिः कर्तव्येत्येव केवलं प्रतिपाद्यते, न तु जातेष्टिजातकर्मणोः पौर्वापर्यमभिधीयते । तच्च पुत्रे जात इत्युक्तत्वादर्थात्प्रतीतं भवति । ततश्च जातेष्टेः कर्तव्यत्वांशो नोल्लङ्घयितुमर्हः । शास्त्रविहितत्वात् । तादृशकर्तव्यत्वांशस्य परिपालनं जातकर्मणः प्राक् पश्चाद्वा जातेष्टौ क्रियमाणायामपि भवति । आर्थिकस्य पौर्वापर्यांशस्य बाधेऽपि न किंचिद्बाधकमिति बालविपत्तिसंभावनया जातकर्मानन्तरं जातेष्टिः क्रियत इति युक्तम् ।

नन्वार्थिकस्य पौर्वापर्यस्य जातकर्मानन्तर जातेष्टिकरणेन बाधो भवतु नाम । तद्बाधस्य शास्त्रोल्लङ्घनप्रयुक्तप्रत्यवायजनकत्वाभावात् । परंतु 'पुत्रे जाते' इत्युक्तेर्जननक्षणाव्यवहितोत्तरक्षणो जातेष्टेर्मुख्यः कालः शास्त्रात्प्रतीतः । जातकर्मानन्तरं जातेष्टौ क्रियमाणायां शास्त्रविहितस्य जातेष्टिकालस्य बाधितत्वात्कथं न शास्त्रोल्लङ्घनप्रयुक्तप्रत्यवायापत्तिः । स्वेच्छया शास्त्रोल्लङ्घने प्रत्यवायावश्यंभावादिति चेन्न । जननाव्यवहितोत्तरकालविशिष्टा जातेष्टिरप्राप्ता विहिता शास्त्रेण । तत्र कालोऽङ्गमप्रधानम् । जातेष्टिरङ्गिनी प्रधानमिति यावत् । ततश्च तत्काले जातेष्टौ क्रियमाणायां ततो जातकर्मणि च कृते पश्चात्स्तन्यप्राशनकाल इति तत्रातिविलम्बेन कदाचिद्बालविपत्तिः संभवेत् । तादृशविपत्तिपरिहारार्थं विपत्तिसंभावनाबलादेव जातेष्टेर्बाधो वाच्यः । तत्राप्रधानबाधेनोपपत्तौ प्रधानबाधस्यान्याय्यत्वादिति न्यायेन प्रधानजातेष्टेर्बाधापेक्षया तदङ्गभूतकालबाधस्योचितत्वेन जातकर्मणोऽनन्तरं जातेष्टिरनुष्ठीयते । एवं च जातेष्टिकालबोधकशास्त्रोल्लङ्घने विपत्तिसंभावनैव प्रमाणं प्रामाणिकं च शास्त्रोल्लङ्घनं न दोषा-

तीति । सर्वपदेनैव सिद्धौ जातकर्माद्युपादानं तत्पूर्वभाविनां गर्भसंस्काराणां निवृत्त्यर्थम् । जातकर्माद्युपादानेऽपि यत्सर्वपदोपादानं तद्यस्य यावन्तः संस्कारास्तस्य तावत्प्राप्त्यर्थम् । ततश्च शूद्रादीनामुपनयनाद्यभावेऽपि चौलादिभिरेव पुत्रत्वं भवतीति कल्प्यम् । नर इति सामान्योपादानेऽपि पौनर्भवस्तोमे त्रैवर्णिकस्यैवाधिकारादन्येषां तु संस्कारमात्रेणैव पुत्रत्वमिति । पौनर्भवस्तोमसंस्कारयोर्मिलितयोः पुत्रत्वहेतुतामुपसंहरति—कृत इति । पौनर्भवस्तोमे कृते ततस्तैः संस्कारैः पौनर्भवः सुतो भवतीत्यर्थः ।

---

जनकामिति भावः । ततश्च न कोऽपि जातेष्टिन्यायविरोध इति बोध्यम् ।

जातमात्रस्य तस्य वै, इत्यत्रत्यो वैशब्दोऽवधारणार्थः । तेन जातमात्रस्यैव पौनर्भवस्तोमः कर्तव्यः । परिग्रहानन्तरमिति शेषः । न तु कालान्तरे दत्तकादिवत्पञ्चवर्षाभ्यन्तरे नैवेत्यर्थः । तेनेति । बालविपत्तिसंभावनया जातेष्टेर्जातकर्मणः प्राक्कालिकत्वं बाधित्वा जातकर्माद्यनन्तरं तदनुष्ठानमिति व्याख्यानेनेत्यर्थः । यथा जातेष्टेर्जातकर्मणः पूर्वकालतारूपो नियमो नास्ति तथाऽत्रापि बालप्राणविपत्तिसंभावनारूपबाधकबलात्पौनर्भवस्तोमस्यापि जातकर्मणः पूर्वकालतानियमो नास्तीत्यर्थः । 'सर्वांस्तु कुर्यात्संस्काराञ्जातकर्मादिकान्नरः' इत्यत्र सर्वपदजातकर्मादिपदेत्येतत्पदद्वयोपादानस्योपयोगं प्रदर्शयन्नाह—सर्वपदेनैवेति । सर्वान् संस्कारान् कुर्यादित्येतावतैव जातकर्मादेः संग्रहसिद्धौ जातकर्मादिपदोपादानं तत्पूर्वभाविगर्भाधानादिसंस्कारनिवृत्त्यर्थम् । अन्यथा सर्वपदेन संग्रहात्तेऽपि कर्तव्याः स्युरिति प्रसज्येत । तर्हि जातकर्मादिपदमेवास्तु प्रयोजनवत्त्वात्सर्वपदं माऽस्तु प्रयोजनविरहादित्याशङ्क्य सर्वपदस्यापि प्रयोजनं प्रदर्शयति—यस्य यावन्तः संस्कारा इति । यस्य वर्णस्य यावन्तः संस्कारा विहितास्तस्य तावद्भिः संस्कारैः पुत्रत्वमुत्पद्यत इत्यर्थं बोधयितुं सर्वपदमित्यर्थः । अन्यथा शूद्रादीनामुपनयनाभावेन जातकर्माद्यखिलसंस्काराभावात्पुत्रत्वं न स्यात् । सर्वपदोपादाने तु चूडादिभिर्यावद्भिरेव संस्कारैस्तेषां पुत्रत्वं सिध्यतीति कल्प्यमिति भावः ।

नर इति । अविशेषेण मनुष्यबोधकनरशब्दोपादानेऽपि पौनर्भवस्तोमे ब्राह्मणक्षत्रियवैश्येति वर्णत्रयस्यैवाधिकार इति त्रैवर्णिकस्य पौनर्भवस्तोमसंस्काराभ्यामुभाभ्यां मिलिताभ्यां पुत्रत्वं जायते । येषां पौनर्भवस्तोमेऽधिकारो नास्ति तेषां शूद्रादीनां केवलसंस्कारकरणेनैव पुत्रत्वमुत्पद्यत इति भावः । कृत इति । पौनर्भवस्तोमे कृते सति संस्कारानुष्ठानेन पौनर्भवः पुत्रतां लभत इत्यर्थः । अनेन पौनर्भवस्तोमसंस्कारयोरुभयोः समुच्चितयोः पुत्रत्वोत्पत्तिहेतुता प्रदर्शितेत्यन्यतरस्याभावे पुत्रत्वं नोत्पद्यत इति सूचयित्वा सोभयोः पुत्रहेतुतोपसंहृतेति बोध्यम् ।

प्रासङ्गिकं पौनर्भवधर्ममाह–

एकोद्दिष्टं पितुः कुर्यान्न श्राद्धे पार्वणादिकम्।

पौनर्भवः पुत्रः पितुः श्राद्धे क्षयाह एकोद्दिष्टमेव कुर्यान्न पार्वणादिकम्। आदिशब्दात्पार्वणविकृतीनामपि निषेधः।

प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश॥

इति जातूकर्ण्यस्मरणात्।

---

दत्ताद्या अपीत्यारभ्य ततः पौनर्भवः सुतः, इत्यन्तकालिकापुराणस्थवचनानां निष्पिण्डितोऽर्थस्तत्तद्वचनव्याख्यावसरे प्रदर्शितोऽपि पुनरत्र बालबोधार्थं संगृह्यते–तत्र दत्ताद्या इत्याद्यन्यबीजसमुद्भवा इत्यन्तवचनेन जनकगोत्रेणाकृतजातकर्मादिः पुत्रो ग्राह्येषु मुख्य इति निर्णीतम्। पितुर्गोत्रेणेत्यादि याति चान्यतः इत्यन्तवचनेन जनकगोत्रेण चूडान्तसंस्कारसंस्कृतस्य ग्रहणे प्रतिग्रहीत्रा गृहीत्वा पञ्चवर्षीयमित्यादि-पर्यालोचनया पुत्रेष्टिं कृत्वा पुनः सर्वसंस्कारकरणे द्व्यामुष्यायणो भवतीति कथितम्। चूडाद्या इत्यादि–अन्यथा दास उच्यत इत्यन्तेन जनकगोत्रेण जातकर्मा-द्यन्नप्राशनान्तसंस्कारसंस्कृतोऽपि ग्राह्यो भवति। प्रतिग्रहीत्रा चूडाद्यैः संस्कृतश्चेत्तस्य पुत्रत्वाभिधानात्। परंत्वयमनुकल्प इति प्रदर्शितम्। ऊर्ध्वं त्वित्यादिप्रथमं चरे-दित्यन्तवचनेन जनकगोत्रेणाकृतजातकर्माऽपि पञ्चमवर्षानन्तरं नैव ग्राह्य इति व्यवस्थाप्य जनकगोत्रेण कृतचूडान्तसंस्कारस्य पञ्चवर्षाभ्यन्तरवर्तिनः पुत्रस्य ग्रहणे प्रतिग्रहीत्रा प्रथमं पुत्रेष्टिः कर्तव्या। तया च दासतामपगमय्य सर्वे संस्काराः कर्तव्या इति सूचितम्। पौनर्भवं तु तनयमित्यादि तस्य वै इत्यन्तेन पौनर्भवः पुत्रो जातमात्र एव ग्राह्यः। गृहीत्वा च पौनर्भवस्तोमं कृत्वा जातकर्मादिकमनुष्ठेयमित्य-भिहितम्। सर्वास्त्वित्यादि पौनर्भवः सुत इत्यन्तेन प्रतिग्रहीत्रा जातकर्मप्रागभावि-गर्भसंस्कारा न कर्तव्या इति सूचयित्वा येषां वर्णानां यावन्तः संस्कारा विहितास्तावद्भिरेव संस्कारैस्तेषां पुत्रत्वं भाव्यत इति पौनर्भवस्तोमसंस्कारयोः समुच्चितयोः पुत्रत्वप्राप्तिहेतुत्वमुपसंहृतमिति निगदितमिति।

अथेदानीं प्रसङ्गसंगत्या कांश्चित्पौनर्भवधर्मानाह––**एकोद्दिष्टमिति**। **पौनर्भवेण** पुत्रेण पितुः क्षयाहश्राद्धमेकोद्दिष्टविधिनैव कार्यं नौरसवत्पार्वणविधिना। पार्वणादिकमित्यादिशब्दात्पार्वणविकृतिष्वमावास्यादिश्राद्धेषु पार्वणमेव नैकोद्दिष्टमिति भावः। अत्रार्थे वचनान्तरं प्रमाणत्वेन प्रदर्शयन्नाह––**प्रत्यब्दमिति**। जातूकर्ण्यवचनं प्रदर्श्य

पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् ।
सर्वत्रानेकगोत्राणामेकोद्दिष्टं क्षयेऽहनि ॥

इति पराशरस्मरणाच्च । पुत्रोद्देशे स्वयंदत्तश्च दासश्चेत्युक्तं तत्र दासलक्षणमाह—

क्रीता या रमिता मूल्यैः सा दासीति निगद्यते ।
तस्यां यो जायते पुत्रो दासपुत्रस्तु स स्मृतः ॥

या सवर्णाऽपि मूल्यैः क्रीता सती रमितोपभुक्ता सा दासीत्युच्यते पूर्वैः ।

क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः ॥

इति स्मरणात् ।

तस्यां जातो दासपुत्रः। दास्याः पुत्रो दासपुत्रः । छान्दसः पुंवद्भावः । यद्वा दासश्चासौ पुत्रश्चेति । यद्वा दासाभिधः पुत्रो दासपुत्र इति ।

तद्धर्मानाह—

न राज्ञो राज्यभाक् स स्याद्विप्राणां श्राद्धकृन्न च ।
अधमः सर्वपुत्रेभ्यस्तस्मात्तं परिवर्जयेत् ॥

स राज्ञो राज्यभाग्न विप्राणां श्राद्धकृच्च न स्यात् । यस्मात्सर्वपुत्रेभ्योऽधमः स इत्यर्थः ।

कीदृश इति निरूपितम् । इदानीं कथमिति निरूप्यते । तत्र शौनकः-

---

पराशरं प्रमाणयति—**पितुरिति** । **त्रिपौरुषमिति** । पितुः क्षयाहमघामावास्यादिश्राद्धमौरसेन पार्वणवत्कार्यम् । अनेकगोत्राणां दत्तकादीनां तु पितुः क्षयाहश्राद्धमेकोद्दिष्टमेवेत्यर्थः । मघामावास्यादिषु तु पार्वणं भवत्येव । **पुत्रोद्देशे**—द्वादशविधपुत्रकथनावसर इत्यर्थः । दासाख्यः पुत्र उक्तः । तत्र किंस्वरूपो दास इत्युच्यते—**क्रीतेति** । अस्यार्थो मूल एव स्पष्ट इति पुनर्नोच्यते । दास्यां जातो दासः स चासौ पुत्रश्चेत्येवं सारल्येन प्रयोगोपपत्तौ दास्याः पुत्र इति षष्ठीसमासे पुंवद्भावस्याऽऽर्षत्वकल्पना गौरवग्रस्तेत्यर्थः । तादृशदासाख्यपुत्रस्य धर्मान् कथयति—**न राज्ञ इति** । राज्याधिकाराभावे विप्रश्राद्धाधिकाराभावे च हेतुं प्रदर्शयन्नाह—**यस्मादित्यादि अधम इत्यन्तम्** । अत्र राज्याधिकारनिषेधेन राज्यव्यतिरिक्तद्रव्येऽधिकारस्तथा विप्रश्राद्धाधिकारनिषेधेन ब्राह्मणव्यतिरिक्तश्राद्धेऽधिकारश्च सूचित इति ज्ञेयम् ।

एतावत्पर्यन्तं कीदृशः पुत्रो ग्राह्य इति प्रतिपादितम् । अथेदानीं केन

शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम्।
अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च॥

संग्रहं संग्रहणविधिम्। उपोष्य संग्रहदिनात्पूर्वेद्युः। वन्ध्यो मृतप्रजो वाऽपीति वृद्धगौतमः।

वाससी कुण्डले दत्त्वा उष्णीषं चाङ्गुलीयकम्।
आचार्यं धर्मसंयुक्तं वैष्णवं वेदपारगम्।
मधुपर्केण संपूज्य राजानं च द्विजाञ्शुचीन्॥

राजाऽत्र ग्रामस्वामी।

'बन्धूनाहूय सर्वांस्तु ग्रामस्वामिनमेव च।

---

प्रकारेण ग्राह्य इति ग्रहणप्रकारमभिधातुमुपक्रमते—तत्र **शौनक इत्यादिना। पुत्रसंग्रहमिति**। संगृह्यतेऽनेनेति व्युत्पत्तेः पुत्रग्रहणविधिमित्यर्थः। **उपोष्येति**। पुत्रग्रहणदिनात्पूर्वस्मिन्दिन इत्यर्थः। इदं चोपोषणं पुत्रग्रहणाङ्गं पुत्रग्रहणमङ्गीत्यर्थः। पुत्रार्थमित्युक्तेः। पुत्रायेदं पुत्रार्थम्। पुत्रोपकारकमित्यर्थात्। अत्र चास्मदादीनामस्य पुत्रस्य च विद्यमानपितृपुत्रभावादिसंबन्धनिमित्तककार्यनिवृत्तयेऽस्मायमुकशर्मणेऽमुकगोत्राय पुत्रदानं करिष्य इति दातः संकल्पः। प्रतिग्रहीतुस्तु पूर्वदिन उपवासं कृत्वा परदिने बन्धूनाहूय प्रतिग्रहं राज्ञे कथयित्वा ग्रहीष्यमाणपुत्रस्य तज्जनकादीनां च पितृपुत्रभावादितत्तत्संबन्धनिवृत्तिद्वारा तत्प्रयुक्तकार्यनिवृत्तिपूर्वकमस्मदादीनां तस्य च परस्परं पितृपुत्रभावादितत्तत्संबन्धप्रवृत्तिद्वारा तत्प्रयुक्तकार्यप्रवृत्तये पुत्रप्रतिग्रहं करिष्य इति संकल्पः। अयं च केवलदत्तके। व्यामुष्यायणे तु—अस्मदादीनामस्य पुत्रस्य च पितृपुत्रभावादिसंबन्धसत्त्वेऽप्यस्य पितृपुत्रभावादिसंबन्धसिद्धय इमं पुत्रं दास्यामीति दातुः संकल्पः। एवमस्य पुत्रस्य तज्जनकादीनां च पितृपुत्रभावादिसंबन्धसत्त्वेऽप्यस्मदादीनां पितृपुत्रभावादिसंबन्धसिद्ध्यर्थं पुत्रप्रतिग्रहं करिष्य इति प्रतिग्रहीतः संकल्प इति बोध्यम्। **वाससी कुण्डले इत्यादि द्विजाञ्शुचीनिति**। इदं वरणविधिना वृतायाऽऽचार्याय दानम्। 'दत्त्वा' इत्यस्य 'तमाधाय' इत्यग्रिमश्लोकस्थाधायेत्यनेन समानकर्तृकत्वात्। नतु प्रतिग्रहीष्यमाणपुत्राय दानम्। इदानीं दातृसमीपे गमनाभावात्। आचार्याय तद्दानं च धृतवासोद्वयोष्णीषकुण्डलाङ्गुलीयकस्याऽऽचार्यस्य पुत्रयाचनार्थं दातुर्गृहे नयनार्थम्। तेन प्रतिग्रहीतुः संपत्तिमत्त्वं व्यज्यत इति दाता निःशङ्कं पुत्रदाने प्रवर्तते। **राजानं चेति**। अत्र राजपदेन ग्रामनगरपालको गृह्यते, नतु साक्षान्नृपः। सर्वत्र तस्यासौलभ्यात्। तदेतत्स्पष्टमभिहितं वृद्धगौतमेन—'बन्धूनाहूय सर्वांस्तु ग्रामस्वा-

इति वृद्धगौतमस्मरणात् । यदपि तत्रैवाग्रे–

मधुपर्कं ततो दद्यात्पृथिवीशाय शासिने ।

इति पृथिवीशपदं तदपि ग्रामस्वामिपरमेव । तस्योपक्रमस्थत्वेन बलवत्त्वात् । द्विजान्त्रीन्याचनार्थतया मधुपर्कादिना संपूज्येत्यर्थः ।

---

मिनमेव च ' इति । तथा चैतदेकवाक्यत्वादपि राजपदेन ग्रामस्वामी ( पाटील–मामलेदार ) ग्राह्य इति भावः । यदपीति । तत्रैवेति । वृद्धगौतमीयदत्तकप्रतिग्रहप्रकरण एव । अग्रे बन्धूनाहूयेत्यस्मादुत्तरं ' मधुपर्कं ततो दद्यात्पृथिवीशाय शासिने ' इत्यत्र यत्पृथिवीशपदं तदपि ग्रामस्वामिपरमेव । तत्र हेतुमाह–तस्येति । असंजातविरोधित्वेनोपक्रमस्थस्य ग्रामस्वामिन इत्यस्य प्रबलत्वेन तमनुसृत्य तद्वशेनोपसंहारस्थस्य पृथिवीशपदस्य नेतव्यत्वात् । उपक्रमानुरोधेनोपसंहारस्थपृथिवीशपदं ग्रामस्वामीत्यर्थकत्वेन व्याख्येयमिति यावत् । अग्नेर्ऋग्वेदः । वायोर्यजुर्वेदः । आदित्यात्सामवेदः । इत्युपक्रमगतवेदशब्दानुसारेण ' उच्चैर्ऋचा, उपांशु यजुषा, उच्चैः साम्ना, इत्युपसंहारस्थर्गादिपदानां वेदपरत्वं यथा व्याख्यातं तद्वदित्यर्थः । एतच्च ' वेदो वा प्रायदर्शनात् ' ( जै० न्या० मा० ३ । ३ । २ ) इत्यत्र स्पष्टम् । वाशब्दोऽवधारणार्थः । ' वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये ' इति कोशादित्यर्थः । उच्चैर्ऋचा, इत्यादिविधिप्रदेशगतऋगादिशब्दो मन्त्रब्राह्मणसमुदायरूपवेदार्थक एव । न तु मन्त्रपरः । तत्र हेतुं दर्शयति––प्राय उपक्रमवाक्ये वेदशब्ददर्शनादिति तदर्थः । द्विजानिति । पुत्रयाचनार्थं मधुपर्कादिना संपूज्येत्यर्थः ।

त्रीनिति । कपिञ्जलन्यायेन बहुवचनं त्रित्वे पर्यवसन्नमिति मीमांसकसिद्धान्ताद्द्विजानिति बहुवचनस्य त्रीनित्यर्थ इति भावः । कपिञ्जलन्यायश्च पूर्वमीमांसायामेकादशेऽध्याये ' वसन्ताय कपिञ्जलानालभेत ' इति वैदिकवाक्यविचारे स्पष्टः । वसन्ताय वसन्त इत्यर्थः । छान्दसो विभक्तिव्यत्ययः । कपिञ्जलाः पक्षिविशेषाः । तानालभेत हन्यादित्यर्थः । तत्र कपिञ्जलानिति बहुत्वं गम्यते । ते त्र्यादयः परार्धावधिकाः कपिञ्जलास्त्रयो वा चत्वारो वा पञ्च वेति विकल्पेनाऽऽलब्धव्या उत त्रय एवेति संशयः । तत्रैवं पूर्वपक्षः––कपिञ्जलानिति बहुवचनेन द्वित्वातिरिक्तसंख्या सामान्यरूपेणाभिहिता । तद्विशेषाकाङ्क्षायां सत्यां त्र्यादिपरार्धान्तातिरिक्तसंख्याविशेषाभावात्त्र्यादिसंख्याविशेषा आक्षिप्यन्ते । तस्माद्यथाप्राप्तानां त्रिचतुरादीनामेव विकल्पेनाऽऽलम्भ इति । सिद्धान्तस्तु घटानानयेतिवदुच्चारितस्य बहुवचनान्तस्य शब्दस्य चतुरादिशब्दोपादानमन्तरेण त्रित्वमात्रं वाच्यम् । यो हि चतुष्ट्वादिसंख्यामुपादत्ते तेन न तदन्तर्भूतं त्रित्वं वर्जयितुं शक्यम् । त्रित्वमुपाद-

बर्हिः कुशमयं चैव पालाशं चेध्ममेव च ।
एतान्याहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः ॥

बन्धूनात्मपितृमातृबन्धून् । ज्ञातीन्सपिण्डान् । बन्ध्वाद्याह्वानं दृष्टार्थं राजाह्वानवत् । बध्नन्ति जानन्त्यात्मीयतया परिगृहीतं नरमित्यर्थः । शब्दद्वयसामर्थ्यात् ।

बन्धूनन्नेन संभोज्य ब्राह्मणांश्च विशेषतः ।

बन्धूनाहूतान् । ब्राह्मणान्पूर्ववृतान् । चकारादाहूताञ्ज्ञातींश्च संभोज्येत्यर्थः ।

अग्न्याधानादिकं तन्त्रं कृत्वाऽऽज्योत्पवनान्तकम् ।
दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत् ॥

याचनं कारयेत्पूर्वं वृतैर्ब्राह्मणैरित्यर्थः ।

दाने समर्थो दाताऽस्मै ये यज्ञेनेति पञ्चभिः ।

दानसामर्थ्यं बहुपुत्रत्वं पत्न्यनुमतिश्चेत्यादि । पञ्चभिर्दद्यादिति शेषः । प्रति-

---

दानेन त्वनन्तर्भूतं चतुष्ट्वादिकं वर्जयितुं शक्यमित्यवश्यंभावित्वेन प्रथमभावित्वेन च त्रित्व उपात्ते तावतैव बहुत्वोपपत्तेः । अतिरिक्ताक्षेपे च प्रमाणाभावः । तस्मात्त्रय एव कपिञ्जला हिंस्याः । उक्तं च जैमिनिना—प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ( जै० ११ । १ । ४२ ) इति सूत्रेण । अत एव बहुवचनं त्रित्वे पर्यवस्यतीति लोकोक्तिः साधीयसी भवतीति । **बर्हिरिति** । समिदित्यर्थः ।

**पालाशमिति** । पलाशवृक्षसंबन्धि । अर्कः पलाशः खदिरोऽपामार्गोऽथ च पिप्पलः । उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् । इति वचनात् । **बन्धूनिति** । आत्मनो मातुः पितुश्च संबन्धिनः । **ज्ञातीन्**—सपिण्डान् । बान्धवाद्याह्वानं दृष्टफलार्थं राजाद्याह्वानवत् । दृष्टं फलं प्रदर्शयन्नाह—**बध्नन्तीति** । मयाऽसौ पुत्रीकृत इति सर्वेषां ख्यापनार्थं तेषामाह्वानम् । बन्ध्वाद्याह्वानमन्तरेणापि पुत्रपरिग्रहः सिध्यति । तेन च व्यवहारे सौलभ्यं भवति । यथा राजसमक्षं पुत्रीकृते राजकीयो व्यवहारः सुकरो भवति तद्वत् । **शब्दद्वयेति** । बन्धुज्ञातीत्येतच्छब्दद्वयोपादानसामर्थ्यात्पितृमातृबन्धवः सपिण्डाश्च गृह्यन्ते । **चकारादिति** । ‘ बन्धूनन्नेन संभोज्य ब्राह्मणांश्च ’ इत्यत्रत्यचकारादित्यर्थः । बन्धून्पुत्रप्रतिग्रहे साक्षित्वेनाऽऽहूतान् । याचनार्थं पूर्ववृतान्ब्राह्मणान् । चकारादाहूताञ्ज्ञातीन् भोजयित्वेत्यर्थः । अग्निस्थापनमारभ्य पवित्रेण त्रिराज्यस्योत्पवनान्तं कर्म कृत्वा दातृसमीपं गच्छेदित्यर्थः । **याचयेदिति** । पूर्वं वृतैर्ब्राह्मणैरिति भावः । **दाने समर्थ इति** ।

गृह्णीत मानवं सुमेधस इति मन्त्रलिङ्गात् ।

देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च ।
अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनि ।
वस्त्रादिभिरलंकृत्य पुत्रच्छायावहं सुतम् ॥

पुत्रच्छाया पुत्रसादृश्यम् । तच्च नियोगादिना स्वयमुत्पादनयोग्यत्वम् । यथा भ्रातृसपिण्डसगोत्रादिपुत्रस्य । न चासंबन्धिनि नियोगासंभवः ।

बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यताम् ।

---

दानसामर्थ्यं च बहुपुत्रत्वं पत्नीसंमतिश्च । य यज्ञेनेति पञ्चभिर्मन्त्रैर्दद्यादिति शेषः । तत्र दाने लिङ्गमाह--**प्रतिगृह्णीतेति** । परस्वत्वनिवृत्तिपूर्वकस्वस्वत्वापादनस्य प्रतिग्रहपदार्थत्वात्स्वस्वत्वापादनस्य च दानं विनाऽनुपपत्तेस्तदप्याक्षिप्यत इति प्रतिग्रहरूपाल्लिङ्गाद्दानं कल्प्यत इति यावत् । तत्र च य यज्ञेनेत्यादय. पञ्च मन्त्रा विनियुक्ता इति भावः ।

**देवस्य त्वेति** । इतिशब्देन 'पूष्णो हस्ताभ्याम्' इत्यन्तो मन्त्रः । **ऋचमिति** । इतिशब्देन 'स जीव शरदः शतम्' इत्यन्तः सूचितः । पादेन चार्थेन चोपेतो वृत्तबद्धो मन्त्र ऋक्, इत्यर्थके 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' ( जै० द० २ । १ । ३५ ) इति लक्षणलक्षिताऽत्रर्क् । **वस्त्रादिभिरिति** । आदिना कुण्डलोष्णीषाङ्गुलीयकानि । ततश्चाऽऽचार्यवत्पुत्रार्थमपि कुण्डलोष्णीषादिकं सपार्यमिति भावः । **पुत्रच्छायावहमिति** । पुत्रच्छायां पुत्रसादृश्यं दधतमित्यर्थः । पुत्रसादृश्यं च नियोगादिना स्वयमुत्पादनयोग्यत्वम् । नियोग--'अपुत्रां गुर्वनुज्ञातः०' ( या० स्मृ० १ । ६८ ) इति याज्ञवल्क्येनोक्तः । आदिना वेतनदानम् । यः पुत्रो ग्राह्यस्तस्य मातरि साक्षाज्जनिकाया प्रतिग्रहीतुर्नियोगादिकरणेन यत्प्रतिग्रहीतृकर्तृकं ग्राह्यपुत्रनिष्ठमुत्पादनं तद्योग्यत्व तदित्यर्थः । प्रतिग्राह्यप्रतिग्राहकयोर्नियोगादिद्वारेणोत्पाद्योत्पादकत्वरूपसंबन्धयोग्यतासत्त्वमेव पुत्रसादृश्यमिति यावत् । यथा भ्रातृपुत्रे सपिण्डपुत्रे सगोत्रपुत्रे च पुत्रसादृयं वर्तत । यतो 'अपुत्रां गुर्वनुज्ञातः' इति याज्ञवल्क्यवचनेन योग्यपुत्रहीनायाः स्त्रियाः पतिश्वशुरादिभिस्तस्यां पुत्रोत्पादनार्थं पत्युर्भ्रातुस्तदभावे तत्सपिण्डस्य तदलाभेऽसपिण्डस्यापि सगोत्रस्यानपकृष्टवर्णस्य नियोगोऽभ्यनुज्ञातः । अतो भ्रातृसपिण्डसगोत्रपुत्रेषु नियोगद्वारेण प्रतिग्रहीतृकर्तृकोत्पादनयोग्यतासत्त्वात्पुत्रसादृश्यमक्षुण्णमिति भावः ।

ननु परगोत्रीयदत्तकस्थले कथं पुत्रसादृश्यं परगोत्रीयस्य प्रतिग्रहीतुर्नियोगाविधानेन नियोगद्वारकस्वयमुत्पादनयोग्यत्वाभावादत आह-**न चासंबन्धिनीति** । '**बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यताम्**' इति वचनाद्धनदानेन पुत्रोत्पादनार्थं ब्राह्मण-

इति स्मरणात्। ततश्च भ्रातृपितृव्यमातुलदौहित्रभागिनेयादीनां निरासः। पुत्रसादृश्याभावात्। एतदेवाभिप्रेत्योक्तमग्रे तेनैव—

---

स्यासंबन्धिनोऽपि निमन्त्रणाभिधानेनासंबन्धिन्यपि नियोगसंभवान्नियोगासंभवो न वाच्य इत्यर्थः। **ततश्चेति**। नियोगादिशास्त्रीयमार्गेण स्वयमुत्पादनयोग्यस्यैव पुत्रीकरणार्हत्वाच्चेत्यर्थः।

**निरास इति**। भ्रात्रा भ्राता, भ्रातृपुत्रेण वा पितृव्यो न पुत्रीकर्तव्य इत्येवं भ्रात्रादिभागिनेयान्तानां पुत्रीकरणस्य निषेधः पर्यवस्यतीति भावः। तत्र कारणं प्रदर्शयति–**सादृश्याभावादिति**। नियोगादिना स्वयमुत्पादनयोग्यत्वाभावादित्यर्थः। अस्याऽऽशयः पूर्वं निरूपितोऽपि बालबोधार्थं पुनर्लिख्यते–यत्र पुत्रप्रतिग्रहीतुः प्रतिग्राह्यपुत्रसाक्षान्मातुश्च परस्परं नियोगादिशास्त्रीयेण पथा दांपत्यसंबन्धः संभवति सोऽयं संबन्धः पुत्रोत्पत्त्यनुकूलत्वादविरुद्धसंबन्ध इत्युच्यते। तादृशाविरुद्धसंबन्धघटितो यः सपिण्डादिस्तस्यैव पुत्रीकरणमुचितम्। पितृपुत्रभावसंबन्धस्य दांपत्यसंबन्धपूर्वकत्वनियमात्। यथा भ्रातृपुत्रः। भ्रातुष्पुत्रस्य साक्षान्मातरि प्रतिग्रहीतुः पितृव्यस्य 'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया' (या० स्मृ० १। ६८) इत्युक्तेर्नियोगादिशास्त्रीयमार्गेण रतिः (दांपत्यसंबन्धः) संभवतीति सोऽयं प्रतिग्रहीतृप्रतिग्राह्यमात्रोः (संभविदांपत्यसंबन्धः) शास्त्रीयपुत्रोत्पत्त्यनुकूल इति ग्रहीष्यमाणपुत्रे स्वयमुत्पादनयोग्यत्वरूपाविरुद्धसंबन्धसत्त्वात्तादृश एव पुत्रत्वेन ग्राह्यो भवति। एवं चैतादृग्रतिसंभावनमेव जिघृक्षितपुत्रे स्वयमुत्पादनयोग्यत्वमिति तात्पर्यम्। यत्र च प्रतिग्रहीतुर्ग्राह्यमातुश्च मिथो नियोगादिना शास्त्रीयमार्गेण रतिः (दांपत्यसंबन्धः) न भवति विरुद्धसंबन्धाक्रान्तत्वात्सोऽयं शास्त्रीयपुत्रोत्पत्तिप्रतिकूलत्वाद्विरुद्धसंबन्ध इत्युच्यते। ततश्च पितृपुत्रभावसंबन्धस्य दांपत्यसंबन्धपूर्वकत्वाद्दांपत्यसंबन्धश्च यत्रासंभवी तत्र विरुद्धसंबन्धावश्यंभावाद्विरुद्धसंबन्धस्य च ग्राह्यशास्त्रीयपुत्रोत्पत्तिप्रतिकूलत्वाद्ग्रहीष्यमाणपुत्रे स्वयमुत्पादनायोग्यत्वरूपविरुद्धसंबन्धो वर्तत इति कृत्वा तादृशविरुद्धसंबन्धाक्रान्तः पुत्रो न ग्राह्यो भवति। निरुक्तरत्यसंभावनैव जिघृक्षितपुत्रे स्वयमुत्पादनायोग्यत्वमिति भावः। यथा दौहित्रः। अत्र प्रतिग्रहीतुर्मातामहस्य जिघृक्षितदौहित्रसाक्षान्मातुश्च मिथो नियोगादिशास्त्रीयमार्गेण रतिर्न संभवति। प्रतिग्रहीतुर्ग्राह्यमातृनिरूपितपितृत्वात्। ग्राह्यमातुश्च प्रतिग्रहीतृनिरूपितपुत्रीत्वादित्येवमुभयोः पितृपुत्रीभावरूपविरुद्धसंबन्धः सोऽयं दांपत्यसंबन्धविघटकत्वात्पुत्रोत्पत्तिप्रतिकूल इति ग्रहीष्यमाणपुत्रे दौहित्रे स्वयमुत्पादनायोग्यत्वरूपविरुद्धसंबन्धसत्त्वात्तादृशविरुद्धसंबन्धाक्रान्तो दौहित्रः पुत्रत्वेन ग्रहणानर्ह इति भावः। एवं पितृव्यमातुलभागिनेयानां सपिण्डत्वेऽपि विरुद्धसंबन्धाक्रान्तत्वात्स्वयमुत्पादनायोग्यत्वरूप-

**दौहित्रो भागिनेयश्च शूद्राणां विहितः सुतः ।**
**ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ॥ इति ।**

**अत्रापि भागिनेयपदं पुत्रासदृशानां सर्वेषामुपलक्षणं विरुद्धसंबन्धस्य समानत्वात् । विरुद्धसंबन्धश्च नियोगादिना स्वयमुत्पादनायोग्यत्वम् । यथा विरुद्ध-**

---

पुत्रसादृश्याभावो बोध्यः । तथा हि-प्रतिग्रहीता भ्रातृपुत्रः । प्रतिग्राह्यश्च पितृव्य इत्येतादृशस्थले ग्राहकग्राह्यमात्रोर्मिथो रतिर्न संभवति । ग्राहकस्य भ्रातृपुत्रस्य ग्राह्यपितृव्यमातृनिरूपितपौत्रत्वाद्ग्राह्यमातुश्च ग्राहकनिरूपितपितामहीत्वात् । सोऽयं ग्राहकग्राह्यमात्रोः पौत्रपितामहीभावरूपः संबन्धो रतिविघटकत्वात्पुत्रोत्पत्तिप्रतिकूल इति तादृशविरुद्धसंबन्धाक्रान्तः पितृव्यः पुत्रीकरणानर्हो भ्रातृपुत्रस्य । तथा प्रतिग्रहीता भागिनेयः प्रतिग्राह्यश्च मातुलः । ईदृशस्थले ग्राहकग्राह्यमात्रोर्मिथो रतिर्न संभवति । ग्राहकस्य भागिनेयस्य ग्राह्यमातुलमातृनिरूपितदुहितृपुत्रत्वाद्ग्राह्यमातुश्च ग्राहकनिरूपितमातामहीत्वात् । सोऽयं ग्राहकग्राह्यमात्रोर्दौहित्रमातामहीभावसंबन्धो रतिविघटकत्वात्पुत्रोत्पत्तिप्रतिकूल इति तादृशविरुद्धसंबन्धाक्रान्तो मातुलः पुत्रीकरणानर्हो भागिनेयस्य । प्रतिग्रहीता मातुलः । प्रतिग्राह्यश्च भागिनेय इत्येवं वैपरीत्येन ग्राह्यग्राहकभावस्थले ग्राहकग्राह्यमात्रोः परस्परं रतिर्न संभवति । ग्राहकस्य मातुलस्य ग्राह्यभागिनेयमातृनिरूपितसोदरभ्रातृत्वाद्ग्राह्यमातुश्च ग्राहकनिरूपितसोदरभगिनीत्वात् । सोऽयं ग्राहकग्राह्यमात्रोः सोदरभ्रातृभगिनीभावरूपः संबन्धो रतिविघटकत्वात्पुत्रोत्पत्तिप्रतिकूल इति तादृशविरुद्धसंबन्धाक्रान्तो भागिनेयः पुत्रीकरणानर्हो मातुलस्येति ।

**एतदेवाभिप्रेत्येति** । नियोगादिना स्वयमुत्पादनायोग्यत्वरूपपुत्रसादृश्याभावमेवानुसंधायेत्यर्थः । **तेनैव**-वृद्धगौतमेनैवोक्तमग्रे । किमुक्तं तद्दर्शयति— **दौहित्रो भागिनेयश्चेत्यादि भागिनेयः सुतः क्वचिदित्यन्तम्** । अत्र वचने भागिनेयपदं पुत्रसादृश्याभाववतां सर्वेषामुपलक्षणविधया बोधकं बोध्यम् । यथा पुत्रत्वेन जिघृक्षिते भागिनेये नियोगादिसाधनकप्रतिग्रहीतृमातुलकर्तृकोत्पादनायोग्यत्वलक्षणः पुत्रसादृश्याभावोऽस्ति तथा जिघृक्षिते यत्र यत्र प्रतिग्रहीतृकर्तृकोत्पादनायोग्यत्वरूपः पुत्रसादृश्याभावः संभवेत्तेषां सर्वेषां भागिनेयपदमुपलक्षकमिति यावत् । भागिनेयपदस्याजहत्स्वार्थलक्षणयाऽर्थबोधकत्वे स्थिते लक्षणायाः स्वशक्यसंबन्धरूपत्वाच्छक्यलक्ष्यार्थयोः संबन्धं प्रदर्शयति-**विरुद्धसंबन्धस्य समानत्वादिति** । भागिनेय इव पितृव्यमातुलादावपि विरुद्धसंबन्धावस्थानस्य तुल्यत्वादित्यर्थः । विरुद्धसंबन्धं लक्षयति-**नियोगादिनेति** । 'अपुत्रां गुर्वनुज्ञातः' ( या० स्मृ० १ । ६८ ) इत्यादिनोक्तो नियोगः । 'बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यताम्' इति वचनेनोक्तं धनदानमादिशब्दग्राह्यम् । ततश्च

संबन्धो विवाहे गृह्यपरिशिष्टे पठितः—दंपत्योर्मिथः पितृमातृसाम्ये विरुद्धसंबन्धो भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति। अस्यार्थः—यत्र दंपत्योर्वधूवरयोः पितृमातृसाम्यं वध्वा वरः पितृस्थानीयो भवति वरस्य वा वधूर्मातृस्थानीया भवति तादृशो विवाहो विरुद्धसंबन्धः। तत्र यथाक्रममुदाहरणद्वयम्—भार्यास्वसुर्दुहिता श्यालिकापुत्री। पितृव्यपत्नीस्वसा—पितृव्यपत्न्या भगिनी चेति। तथा प्रकृते विरुद्धसंबन्धपुत्रो वर्जनीय इति, यतो रतियोगः संभवति तादृशः कार्य इति यावत्।

---

नियोगधनदानाभ्यां साधनाभ्यां यत्स्वयमुत्पादनं—प्रतिग्रहीतृकर्तृकं यज्जिघृक्षितपुत्रनिष्ठमुत्पादनं तदयोग्यत्वमुत्पादनयोग्यत्वाभावः। उत्पादनयोग्यत्वप्रतिबन्धकः संबन्धविशेषो विरुद्धसंबन्ध इति यावत्। उदाहरणदानपूर्वकं विरुद्धसंबन्धस्वरूपं प्रदर्श्य सोऽयं विरुद्धसंबन्धो विवाहगृह्यपरिशिष्टग्रन्थे निषिद्ध इत्याह—**यथा विरुद्धसंबन्ध इत्यादिना पितृव्यपत्नीस्वसा चेत्यन्तेन**। अस्यार्थं ग्रन्थकृत्स्वयमेव ब्रवीति—**यत्रेति। वधूवरयोः पितृमातृसाम्यमिति**। वरो वध्वाः पितृस्थानीयो भवति वधूर्वा वरस्य मातृस्थानीया यत्र विवाहे भवति तादृशो विवाहो विरुद्धसंबन्धः। सोऽयं विवाहो निषिद्धः परिशिष्टकारेण। वध्वाः पितृस्थानीयो वरो भवति वरस्य वा वधूर्मातृस्थानीया भवतीत्येतस्य विरुद्धसंबन्धद्वयस्य क्रमेणोदाहरणे प्रदर्शयति—**भार्यास्वसुर्दुहितेति**। भार्यायाः स्वसा भार्यास्वसा, भार्यास्वसुर्दुहिता कन्या। श्यालिकायाः कन्येत्यर्थः। अत्रोदाहरणम्—स्वः ( देवदत्तः ) तस्य भार्या ( लक्ष्मीः ) तस्या भगिनी ( गङ्गा ) तस्याः पुत्री ( कृष्णा )। अत्र वरः ( देवदत्तः ) वध्वाः ( कृष्णायाः ) पितृस्थानापन्नो भवति वधूश्चार्थाद्वरस्य पत्रीस्थानीया भवतीत्येवं वरस्य वधूपितृसाम्यं विरुद्धः संबन्धः। एवं वरस्य वधूपितृसाम्यमुदाहृत्य वध्वा वरमातृसाम्यमुदाहरति—**पितृव्यपत्नीति**। पितृव्यस्य पत्नी पितृव्यपत्नी, पितृव्यपत्न्याः स्वसा पितृव्यपत्नीस्वसा। उदा०—स्वः ( देवदत्तः ) तस्य पितृव्यः पितुर्भ्राता ( विष्णुः ), तस्य पत्नी भार्या ( लक्ष्मीः ), तस्याः स्वसा भगिनी ( रम्भा )। अत्र वधू रम्भा वरस्य ( देवदत्तस्य ) मातृस्थानापन्ना भवति। अर्थाद्वरो वध्वाः पुत्रस्थानीयो भवतीत्येवं वध्वा वरमातृसाम्यं सोऽयं विरुद्धः संबन्ध इति निरुक्तोदाहरणद्वये वधूवरयोर्विरुद्धसंबन्धाक्रान्तत्वाद्विवाहो न घटते। एवं यत्र यत्र वधूवरयोः पितृमातृसाम्यं संभवेत्तत्र तत्र विरुद्धसंबन्धो द्रष्टव्यः। उदाहरणद्वयप्रदर्शनं तु निदर्शनार्थमिति भावः। एवं प्रकृते पुत्रीकरणविषये विरुद्धसंबन्धाक्रान्तः पुत्रो वर्ज्यो भवति। किंतु यस्यै रतियोगः संभवति तस्याः पुत्रः पुत्रीकर्तव्य इति

नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम् ।
गृहमध्ये तमाधाय चरुं हुत्वा विधानतः ।
यस्त्वा हृदेत्यृचेनैव तुभ्यमग्नेत्यृचैकया ।
सोमो ददृदित्येताभिः प्रत्यृचं पञ्चभिस्तथा ।

एवं सप्तभिर्मन्त्रैः सप्त चर्वाहुतीर्हुत्वेत्यर्थः । वृद्धगौतमस्तु विशेषमाह—

पायसं तत्र साज्यं च शतसंख्यं तु हावयेत् ।
प्रजापते नत्वदेतामित्युद्दिश्य प्रजापतिम् ॥ इति ।

एतदनन्तरं ब्राह्मणानां सपिण्डेष्वित्यादयः पुत्रदानं प्रयत्नत इत्येतदन्ताः श्लोकाः पूर्वमेव व्याख्याताः । तदनन्तरम्—

दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः ।

द्विजोत्तमो ब्राह्मणः ।

नृपो राज्यार्धमेवाथ वैश्यो वित्तशतत्रयम् ।

राज्यार्धमर्धराज्योत्पन्नमेकवर्षीयं द्रव्यम् ।

---

निष्कृष्टोऽर्थः । यत इत्यत्र च सार्वविभक्तिकतसिना ' यस्यै ' इत्यर्थो व्याख्येयं इति भावः । **स्वस्तीति** । स्वस्त्यर्थकवेदमन्त्रपठनैः स्त्रीणां गीतादिध्वनिभिश्च । स्त्रीगीतध्वनीनां निरतिशयमङ्गलप्रयोजकत्वं विवाहे दृष्टमिति तत्प्रयोज्ये पुत्रोत्पत्तिकार्येऽपि तद्ध्वनीनां मङ्गलप्रयोजकत्वमित्याचार एव तत्र प्रमाणमिति भावः । **चरुं हुत्वेति** । चरुहोमे 'मन्त्रान्प्रदर्शयति—**यस्त्वेति** । यस्त्वा हृदा कीरिणा० इति ऋग्द्वयम् । तुभ्यमग्ने पर्यवहन्० इत्येकर्क् । सोमो ददद्गन्धर्वाय० इत्यादयः पञ्चर्चः मिलित्वा सप्त चर्वाहुतयो भवन्ति । ता हुत्वेत्यर्थः । अत्र वृद्धगौतमेन विशेष उक्तस्तं दर्शयति—**पायसं तत्रेति** । होमस्याऽऽचार्यकृत्यत्वादाचार्यः कर्ता, प्रतिग्रहीता यजमानस्तु तत्प्रयोजक इत्यभिप्रायेण हावयेदिति णिजुपात्तः । **पूर्वमेव व्याख्याता इति** । ब्राह्मणानामित्यारभ्य प्रयत्नत इत्येतदन्तानां वृद्धगौतमप्रोक्तश्लोकानां शौनकप्रोक्तश्लोकसमानत्वाच्छौनकोक्तश्लोकव्याख्यानेनैव गौतमोक्तश्लोका अपि व्याख्याता एवेत्याशयेन पूर्वमित्युक्तम् । **दक्षिणां गुरव इति** । गुरुरत्राऽऽचार्यः । आचार्यं धर्मसंयुक्तमिति वृद्धगौतमेनोपक्रम उक्तत्वात् । यद्यपि ' त्रयो वर्णा द्विजातयः ' इति स्मृतेर्ब्राह्मणः क्षत्रियो वैश्यश्चेत्येवं वर्णत्रयं द्विजशब्देनोच्यते तथाऽप्युत्तमपदप्रयोगात्तत्रोत्तमः श्रेष्ठ इति व्युत्पत्त्या द्विजोत्तम इत्यस्य ब्राह्मण इत्यर्थः सिध्यतीत्याह—**द्विजोत्तमो ब्राह्मण इति** । राज्यार्धमित्यस्यार्धरा-

प्रदद्यादर्धराज्योत्थमेकवर्षाहृतं धनम् ।

इति वृद्धगौतमस्मरणात् । इदं च महाराजाभिप्रायेण । वित्तानां नाणकानां शतत्रयम् । तच्च सौवर्णराजततास्राणामुत्तममध्यमाधमकल्पनया ज्ञेयम् ।

शतत्रयं नाणकानां सौवर्णमथ राजतम् ।
प्रदद्यात्ताम्रमथवा उत्तमादिव्यवस्थया ।

इति वृद्धगौतमस्मरणात् ।

शूद्रः सर्वस्वमेवापि अशक्तश्चेद्यथाबलम् ।

सर्वस्वमेकवर्षीयभृतिलब्धं द्रव्यम् । एकवर्षाहृतमिति स्मरणस्यात्राप्यविशेषात् । सर्वस्वं चान्वये सतीति निषेधाच्च ।

वसिष्ठस्तु प्रकारान्तरमाह—शुक्लशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य

---

ज्योत्पन्नमेकवर्षीयं द्रव्यमित्यर्थवर्णने वृद्धगौतमः प्रमाणमित्याह—' **प्रदद्यादर्धराज्योत्थमिति** ' । इदं चार्धराज्योत्थैकवर्षीयद्रव्यस्य दक्षिणात्वेन दानं महाराजविषयकमिति बोध्यम् । **नाणकानामिति** । राजमुद्राचिह्नितमशीतिगुञ्जापरिमितं रूपकादि । मुद्राङ्कितमशीतिगुञ्जामितं सुवर्ण ( मोहोर ) वा । तच्च सौवर्ण राजतं ताम्रमिति त्रिविधम । तत्रातिधनाढ्येन वैश्येन सौवर्णनाणकशतत्रयं गुरुवे दक्षिणा प्रदेया । धनाढ्येन वैश्येन राजतनाणकशतत्रयं गुरुदक्षिणा देया । यस्तु न धनाढ्यो नापि दरिद्रस्तादृशेन वैश्येन ताम्रनाणकशतत्रयं दक्षिणा देया भवतीत्यर्थः । अत्रार्थे वृद्धगौतमवचनं प्रमाणयति—**शतत्रयं नाणकानामिति** । **शूद्रः सर्वस्वमिति** । एकस्मिन्वत्सरे लब्धं भृतिद्रव्यमत्र सर्वस्वम् । एकवर्षाहृतमित्यस्याविशेषेण विशेषणादिति भावः । नन्वेकवर्षाहृतमिति संनिहितत्वादर्धराज्योत्थमित्यस्यैव विशेषणमिति युक्तं, तत्कथं सर्वस्वमित्यस्य निरुक्तार्थाङ्गीकरणमत आह—**निषेधाच्चेति** । ' सर्वस्वं चान्वये सति । आपत्स्वपि हि कष्टासु वर्तमानेन देहिना । अदेयान्याहुराचार्याः० ' ( या० स्मृ० २ । १७५ मिताक्षरा ) इति नारदेन पुत्रदाराद्यन्वये सति सर्वस्वदानस्य निषेधात्सर्वस्वशब्दस्य निरुक्तार्थोऽङ्गीकार्य इति भावः ।

वसिष्ठस्तु प्रकारान्तरेण पुत्रपरिग्रहविधिं व्याचष्टे—शुक्रशोणितसंभव इत्यादिना चतुर्थभागभागी स्याद्दत्तक इत्यन्तेन । शुक्रं पुरुषवीर्यम् । शोणितं स्त्रीवीर्यम् । ताभ्यां संभव उत्पत्तिर्यस्य तथा । मातापितरौ निमित्तकारणे यस्य तादृशः । पुत्रो भवतीति शेषः । तादृशस्य पुत्रस्य वंशादिप्रवृत्त्यर्थं परस्मै समर्पणं प्रदानं, मूल्यग्रहणेन दानं विक्रयः, मदीयताबुद्धिनिरासेन तदुपेक्षाकरणं परित्यागस्तेषु सर्वं वाक्यं सावधारणमिति न्यायेन मातापितरावेव प्रभवतः समर्थौ भवतः । यतो

प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतो न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषां न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः पुत्रं परिग्रहीष्यन्बन्धूनाहूय राजनि चाऽऽवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसंनिकृष्टमेव प्रतिगृह्णीयात् । संदेहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेद्धि-

---

मातापितृनिमित्तकारणकस्तच्छुक्रशोणितोपादानकः पुत्रस्ततो मातापितरावेव तस्य प्रदानादिषु प्रभवत इत्यर्थः । **न त्वेकं पुत्रं दद्यादिति** । अत्र दद्यादिति ददातिः प्रदर्शनार्थः । तेन क्रयादावप्ययं निषेधो भवति । तथा पुत्रं प्रतिग्रहीष्यन्नित्यस्यापि प्रदर्शनार्थत्वाद्बन्धूनाहूयेत्यादिधर्मजातं क्रयादावपि कार्यम् । न्यायसाम्यादिति भावः । यस्यैक एव पुत्रस्तेन स पुत्रो न दातव्यः प्रतिग्रहीत्राऽपि तादृशः पुत्रो न ग्राह्य इत्युभयोर्निषेधोऽयम् । तत्र कारणमाह स एव—**स हि संतानायेति** । यतः स एकः पुत्रः स्ववंशाविच्छेदकरोऽतो न देयो न ग्राह्यश्च । संतानाय पूर्वेषामित्यनेनैकस्य पुत्रस्य दातुः स्ववंशक्षयकरणेन वंशक्षयजन्यः प्रत्यवायः सूचितः । प्रतिग्रहं विना दानस्वरूपासिद्धेर्यस्तादृशं पुत्रं जिघृक्षति तस्य स्ववंशक्षयकारिणः सहकारित्वात्परम्परया तद्वंशक्षयकरत्वात्तस्यापि वंशक्षयजन्यः प्रत्यवायो भवतीत्याशयेन ' नैकः पुत्रो ग्राह्यः ' इत्युक्तम् । स्त्रिया स्वातन्त्र्येण नैव पुत्रो देयो नापि प्रतिग्राह्यः । स्त्रिया भर्तृपारतन्त्र्यावश्यंभावात् । तदेतदुक्तम्—' **अन्यत्रानुज्ञानाद्भर्तुः** ' **इति** । इत्येतदन्तं वसिष्ठवचनं तत्तत्प्रसङ्गेन प्राक् सविस्तरं व्याख्यातम् । अग्रिमं त्वधुना व्याख्यायते—पुत्रं जिघृक्षन्सन्बन्धून्–प्रत्यासत्त्या, प्रतिगृह्णीयादित्यनेन समानकर्तृकत्वाच्चाऽऽहूयेति ल्यबन्तस्याऽऽत्मपितृमातृबन्धून् पितृव्यमातुलापिष्ठादिस्वजनानित्यर्थः । **राजनीति** । राजाऽत्र ग्रामाधीशः ( मामलेदार-खोत पाटील कुलकर्णी, इत्यादि ) । आवेद्य–कथयित्वा । निवेशनं गृहम् । आज्यभागहोमानन्तरं व्यस्तसमस्तव्याहृभिराहुतीश्चतस्रो हुत्वा । **अदूरेति** । अदूरश्चासौ बान्धवश्च । अदूरः संनिहितः । बान्धवः पितृमातृसंबन्धी । सांनिध्यं च सगोत्रत्वेन स्वल्पपुरुषव्यवधानेन च । तथा चादूरबान्धव इत्यस्य सगोत्रः सपिण्ड इत्यर्थः पर्यवस्यति । स च प्रथमं ग्राह्य इति भावः । तदलाभ आह—**बन्धुसंनिकृष्टमिति** । बन्धूनां सपिण्डानां संनिकृष्टः सपिण्डः स्वस्यासपिण्डः सोदक इत्यर्थः । स्वस्यासपिण्डोऽपि सगोत्रः स्वल्पपुरुषव्यवहितश्चेत्यादि पूर्ववत् । सपिण्डालाभे सोदकः ( अष्टममारभ्य चतुर्दशावधिकः ) । प्रतिग्राह्य इत्यर्थः । **संदेहे चोत्पन्न इति** । दूरे बान्धवा यस्यासौ दूरबान्धवः । गोत्रसापिण्ड्याभ्यामसंनिहितः । तस्य चात्यन्तदेशभाषाविप्रकृष्टस्य परिग्रहे कुलशीलादिविषये संदेहे सति

ज्ञायते ह्येकेन बहूंस्त्रायत इति तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति । अत्र शुक्रशोणितसंभव इत्यारभ्यान्यत्रानुज्ञानाद्भर्तुरित्यन्तं व्याख्यातमेव प्राक् । बन्धूनात्मपितृमातृबन्धून् । राजनि ग्रामाधीशे । निवेशनं गृहम् । व्याहृतिभिर्व्यस्ताभिः समस्ताभिश्चाऽऽज्यभागान्त आहुतिचतुष्टयं हुत्वेत्यर्थः । अदूरबान्धवमिति व्याख्यातम् । संदेहे चोत्पन्न इति । दूरे बान्धवा यस्यासौ दूरबान्धवोऽत्यन्तदेशभाषाविप्रकृष्टस्तादृशस्य परिग्रहे कुलशीलादिविषये संदेहो भवत्येव । तस्मिन्सति तं शूद्रमिव स्थापयेद्यावन्निर्णयम् । न व्यवहरेदित्यर्थः । तत्र हेतुतया श्रुतिमाह—विज्ञायत इति । एकेन पुत्रेण बहवः पित्रादयस्त्रातव्या इत्येतदर्थं पुत्रप्रतिग्रहो न त्वेकेन बहवः पातनीयाः । संदेहे च पक्षे पातनस्यापि संभवात् । तस्मात्तं न व्यवहरेत्पाक्षिकस्यापि दोषस्य परिहार्यत्वात् । कल्पतरुस्त्वसंनिकृष्टमेव प्रतिगृह्णीयादिति पाठमभिप्रेत्याऽऽह—असंनिकृष्टमेव—अविज्ञातगुणदोषमपि । अप्यर्थ एवकारः । संदेह इति । बान्धवानामसंनिधाना-

---

शूद्रमिव स्थापयेत् । यावन्निर्णयं न व्यवहरेदित्यर्थः । संशयविषयस्य शूद्रवत्स्थापने हेतुभूतां श्रुतिं निर्दिशति—विज्ञायते हीति । एकेन हि पुत्रेण बहवः पितरः पुंनाम्नो नरकात्त्रातव्याः किलेति हि पुत्रपरिग्रहश्चिकीर्ष्यते न त्वेकेनानेकेऽधः पातनीया इति । संदिग्धस्य च परिग्रहे कदाचित्त्वेकेनानेकेषां पितॄणामधःपातोऽपि संभवेदित्यतस्तं न व्यवहरेत् । यद्यप्ययं दोषोऽधःपातात्मकः पाक्षिको न सार्वदिकस्तथाऽपि यावान् दोषः पाक्षिको वा सार्वदिको वा स सर्वथा परिहरणीय एव हितमिच्छता । दोषस्यानर्थपर्यवसायित्वावश्यंभावादिति भावः । कल्पतरुरेतन्नामा धर्मशास्त्रीयनिबन्धस्तत्कर्ताऽपि लक्षणया कल्पतरुशब्देनैवोच्यते । तेन कल्पतरुणा ‘ अदूरबान्धवं बन्धुसंनिकृष्टमेव ’ इति वसिष्ठवचने बन्धुसंनिकृष्टमित्यस्य स्थाने ‘ असंनिकृष्टं ’ इति पाठं गृहीत्वोक्तम्—असंनिकृष्टमेव—अविज्ञातगुणदोषमपीति । एवकारोऽप्यर्थक इति तद्भावः । संदेह इति । बान्धवानामसंनिधानाज्जातिसंदेहे सति शूद्रोऽयमित्यध्यवसायाध्यवसायेति ल्यबन्तम् । निश्चित्येत्यर्थः । संस्कारहीनमेव स्थापयेत् । द्विजोऽयं तदितरो वेति जातिविषये संशये समुत्पन्ने यदि शूद्रोऽयमिति निश्चितं सिध्येत्तदैनं संस्काररहितं स्थापयेत्तस्य संस्कारा न करणीया इति तदर्थः । अत्र शूद्रोऽयमिति निर्णीयापि न तादृशस्य परिग्रहं निषेधति किंतु तत्संस्कारकरणं निषेधति । निषेधस्य च प्राप्तिपूर्वकत्वाद्द्विजातीयकर्मकसंस्कारप्राप्तेश्च परिग्रहपूर्वकत्वेन शूद्रस्यापि पुत्रत्वेन परिग्रहः शास्त्रतः सिध्यति ।

तु जातिसंदेहे शूद्रत्वेनाध्यवसाय संस्कारहीनमेव स्थापयेत् । शूद्रोऽपि हि किल पुत्रो भवतीत्याभिप्राय इति । तदेतदभिप्रायविवरणमसंगतम् । विजातीयपरिग्रहनिषेधात् । तस्माद्यथाश्रुतमेव साधु । दत्तपरिग्रहानन्तरमौरसोत्पत्तौ विभागे विशेषमाह—तस्मिन्निति । तस्मिन्दत्तके प्रतिगृहीते यद्यौरस उत्पद्येत तदा दत्तकश्चतुर्थांशं लभते न समांशमित्यर्थः । अयमेव विधिः क्रीतादिष्वनुसंधेयः । तस्य प्रदानविक्रयपरित्यागेष्वित्युपक्रमभेदेन वा व्यवस्थेति ध्येयम् ।

तैत्तिरीयाणां तु विधिविशेषमाह बौधायनः । पुत्रपरिग्रहविधिं व्याख्यास्यामः । शुक्रशोणितेत्याद्यन्यत्रानुज्ञानाद्भर्तुरित्येतदन्तं वसिष्ठेन समानम् । प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकं चाऽऽचार्यं च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्ममित्यथ बन्धूनाहूय मध्ये राजनि चाऽऽवेद्य

---

अन्यथा शूद्रत्वेनाध्यवसितस्य संस्कारराहित्येन स्थापनविधानमनुपपन्नं स्यादित्याशयेनोक्तं कल्पतरौ—शूद्रोऽपि हि किल पुत्रो भवतीत्यभिप्राय इतीति । तदेतत्कल्पतरुकृतमभिप्रायविवरणमसंगतमिति परिहरति—विजातीयेति । सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः । जातिष्वेव न चान्यतः, इति याज्ञवल्क्यशौनकाभ्यां सजातीयपरिग्रहपूर्वकं विजातीयपरिग्रहस्य स्पष्टं निषिद्धत्वात् । तस्माद्यथोक्तं व्याख्यानमेव साधु । निरुक्तव्याख्यानस्य शब्दलभ्यत्वाद्विसंवादाभावाच्च साधुत्वम । कल्पतरुव्याख्यानस्य तु शब्दार्थत्वाभावाद्विरोधाच्चासाधुत्वमित्यर्थः । दत्तकपरिग्रहानन्तरमौरस उत्पन्ने विभागव्यवस्थार्थमाह—तस्मिंश्चेदित्यादि । औरसे जात दत्तकश्चतुर्थमंशं लभते समांशं नैव लभत इत्यर्थः । ‘ चतुर्थभागभागी स्याद्दत्तकः ’ इति वसिष्ठवचने दत्तकग्रहणं क्रीतकृत्रिमादीनां प्रदर्शनार्थम् । पुत्रीकरणाविशेषात् । अत एव कात्यायनः—उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः । सवर्णाः, असवर्णास्तु ग्रासाच्छादनभागिनः । इति वचनेन दत्तकक्षेत्रजादीनां चतुर्थांशभागित्वमुक्तवान् । सवर्णा दत्तकक्षेत्रजादयः । असवर्णाः पुनः कानीनगूढोत्पन्नसहोढजपौनर्भवाः । इति ‘ पिण्डदोंऽशहरः ’ ( या० स्मृ० २ । १३२ ) इति याज्ञवल्क्यवचनव्याख्यानावसरे मिताक्षरायां विशेषः । अत्र कानीनादीनां यदसवर्णत्वमुक्तं तद्बीजक्षेत्रयोः शुद्ध्याद्यभावाद्विति भाति । नतु क्षत्रियादिविजातीयोत्पन्नत्वेन । औरसादिद्वादशपुत्रलक्षणे ‘ सर्वत्र सवर्ण इत्येव ’ इति सवर्णपदसंबन्धस्य मिताक्षरायामुक्तत्वात् । अयमेव न्यायः क्रीतकृत्रिमस्वयंदत्तादिषु योज्यस्तुल्यन्यायात् । ‘ तस्य प्रदानविक्रयपरित्यागेषु ’ इति वसिष्ठवचनेन क्रीतादीनामप्युपक्रमादित्याशयः ।

तैत्तिरीयशाखिनां तु विशेषं प्रदर्शयति—पुत्रपरिग्रहविधिमित्यादिनाऽऽह स्म

परिषदि वाऽगारमध्ये ब्राह्मणानन्नेन परिविष्य ब्राह्मणवागालम्बेनोपविश्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा पुत्रं मे देहीति भिक्षेत दद्दामीतीतर आह तं परिगृह्णाति धर्माय त्वा गृह्णामि संतत्यै त्वा गृह्णामीत्यथैनं वस्त्रकुण्डलाभ्यामङ्गुलीयकेन चालंकृत्य परिधानप्रभृत्यग्निमुखं कृत्वा पक्त्वा जुहोति यस्त्वा हृदा कीरिणा मन्यमान इति पुरोनुवाक्यामनूद्य यस्मै त्वं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृती-र्हुत्वा स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानाद्दक्षिणां दद्यात्येते च वाससी एते कुण्डले एतच्चाङ्गुलीयकं यद्येवं कृत्वौरसपुत्र उत्पद्यते तुरीयभागे संभवती-त्याह स्म बौधायनः ।

यत्तु वृद्धगौतमीयम्—

दत्तपुत्रे यथाजाते कदाचित्त्वौरसो भवेत् ।
पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ ॥ इति ।

तदस्य गुणवत्त्व औरसस्य च निर्गुणत्वे वेदितव्यम् । यथाजात इति विशेष-णात् । यथा गुणानां जातं समूहो यस्मिन्निति यथाजातो गुणसमूहवानित्यर्थः । यथाशब्दस्य गुणयोगे सादृश्ये च शक्तत्वात् ।

---

बौधायन इत्यन्तेन । आ प्रणीताभ्य इति । प्रणीताख्यपात्रसंस्कारान्तं क्रियाकलाप कृत्वेत्यर्थः । याज्यया सामिधेन्यर्चेत्यर्थः । ऋत्विग्विशेषः प्रशास्ता ययर्चा हविर्ग्रहणार्थं देवतामाह्वयति सर्क् पुरः पठ्यमाना पुरोनुवाक्येत्युच्यते । प्रशास्त्राहूतां देवतां होता ययर्चा यजति सर्क् याज्या । स्विष्टकृदादि कृत्वाऽऽ-धेनुवरप्रदानादिदक्षिणां दद्यादित्यर्थः । धेनुः शङ्खस्तथाऽनड्वान् हेम वासो हयः क्रमात् । कृष्णा गौरायसश्छाग एता वै दक्षिणाः स्मृताः । इति वचनादिति भावः ।

यद्येवमिति । यो दत्तक एवं निरुक्तप्रकारेण गृहीतः पश्चात्त्वौरसः पुत्र उत्पद्यते चेत्तदा स दत्तकश्चतुर्थांशभाक् स्यादित्यर्थः । यत्तु वृद्धगौतमेन दत्तौरसौ समभागिनावित्युक्तं तद्व्यवस्थां दर्शयितुमाह—यत्त्विति । यदि दत्तको गुणाढ्य औरसस्तु निर्गुणस्तदा तावुभौ समांशभाजौ भवत इति वृद्धगौतमस्याऽऽशयः । अत्रार्थे प्रमाणं प्रदर्शयितुं यथाजातपदं विवृणोति—यथा गुणानामिति । गुणानां जातं समूहो यस्मिन्निति यथाजातः । तादृशे दत्तपुत्रे सतीति शेषः । यथा-शब्दः सादृश्यवद्गुणसमूहेऽपि शक्त इति भावः । तथा च दत्तकस्य गुणवत्त्वे प्रतिपादिते सत्यौरसस्य तत्समभिव्याहृतस्य विशेषानुपादानान्निर्गुणत्वं पर्यवस्यति । यथा परीक्षोपविष्टयोर्द्वयोर्मध्येऽयमेक उत्तीर्ण इत्युक्ते तदितरविषये वचनानुपादानं तदनुत्तीर्णतां गमयति तद्वत् । एवं च दत्तकस्य गुणवत्त्व औरसस्य च निर्गु-

अत एव मनुः—

उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः ।
स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ॥

इत्यौरसाभावे सर्वरिक्थग्रहणमुक्तवान् । तद्युक्तमेवौरसे सत्यर्धांशहरत्वम् । परिग्रहविध्यभावे विशेषमाह स एव—

अविधाय विधानं यः परिगृह्णाति पुत्रकम् ।
विवाहविधिभाजं तं कुर्यान्न धनभाजनम् ॥ इति ।

परिग्रहविधिं विना परिगृहीतस्य विवाहमात्रं कार्यं न धनदानमित्यर्थः ।

---

णत्वे समभागित्ववचनमिति भावः । अत एव—समभागित्ववचनस्यौरससहितातिशयितगुणवद्दत्तकविषयत्वादेवेत्यर्थः । **उपपन्न इति** । ( म० स्मृ० ९ । १४१ ) **यस्य** दत्तकः पुत्रो विद्याध्ययनव्यवहारचातुर्यादिसकलगुणगणमण्डितो भवति सोऽन्यगोत्रादागतोऽपि पितृरिक्थं हरेतैवेत्यौरसाभावे सर्वरिक्थग्रहणमत्यन्तगुणवद्दत्तकस्य यतोऽभिहितवांस्तत औरससद्भावेऽत्यन्तगुणवद्दत्तकस्य समभागित्वं यदुक्तं तद्युज्यत एवेत्यर्थः ।

अत्रेदं बोध्यम्—औरससत्त्वेऽत्यन्तगुणदत्तकस्य समांशभागित्वमौरसाभावे तु तादृशस्यैव दत्तकस्य सर्वद्रव्यभाक्त्वं यस्माद्वृद्धगौतममनुवचनाभ्यामुक्तं तस्मात 'यद्येवं कृत्वौरसः पुत्र उत्पद्यते' इति बौधायनेनोक्तस्यौरससद्भावे चतुर्थांशभागित्वस्य साधारणगुणवद्दत्तकविषयत्वमवशिष्यत इति । तथा चौरससमवाये निर्गुणदत्तकस्य पालकपितृरिक्थहरत्वमेव नास्ति । एतदनुसंधायैवोक्तं 'सवर्णजोऽप्यगुणवान्नार्हः स्यात्पैतृके धने' इति भावः । सगुणस्य दत्तकस्य त्वौरससद्भावाभावाभ्यां साधारणविशेषगुणवत्त्वाभ्यां च पितृरिक्थभागित्वव्यवस्थैवम्—औरससत्त्वे साधारणगुणवद्दत्तकस्य चतुर्थांशभागित्वम् । औरससत्त्वे विशेषगुणवद्दत्तकस्य समांशभागित्वम् । औरसाभावे साधारणविशेषगुणवद्दत्तकयोः सर्वद्रव्यांशभागित्वमिति बोध्यम् । शौनकाद्युक्तवैदिकपुत्रपरिग्रहविध्यननुष्ठाने दत्तकस्य कंचिद्विशेषमुक्तवान्मनुरेवेत्याह—**अविधायेति** । अस्यार्थं स्वयमेवाऽऽह-**परिग्रहविधिं विनेति** । **विवाहमात्रमिति** । मात्रपदेन धनांशदानस्य व्यावृत्तिः, न तु ग्रासाच्छादनस्य । सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा । ग्रासाच्छादनमत्यन्तं ह्यदद्त्पतितो भवेत् ( म० स्मृ० ९ । २०१ )। इति वचनाद्ग्रासाच्छादनदानस्याभिहितत्वादिति भावः । एवं च विवाहविधीत्युपलक्षणं ग्रासाच्छादनस्यापीति । ननु यदि विवाहेत्युपलक्षणं तदा किंचिद्धनभाक्त्वमपि स्यादत आह-**न धनभाजनमिति** । धनभाजननिषेधादेव विवाहभाजनविधेरुपलक्षणत्वं सिध्यति । यदि च विवाहमात्रभाजनत्वं विवक्षितं स्यात्तदा तु धनभाजनमिति न वदेद्विवाहभाजनविधिनैव धनभाजननिषेधसिद्धेरिति भावः ।

किंतु तत्र पत्न्यादय एव धनभाजः । विधिं विना तस्य पुत्रत्वानुत्पादनात् ।

ननु यदि विधिं विना परिगृहीतो न धनग्रहणाधिकारी तर्हि तस्य के धनग्राहिण इत्याकाङ्क्षायामाह—**पत्न्यादय इति** । 'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः ' ( या० स्मृ० व्यव० २ । १३५ )। इति द्वादशविधपुत्राभावे धनग्रहणाधिकारित्वेनोक्ताः पत्न्यादय एव क्रमेण धनाधिकारिण इत्यर्थः । ननु द्वादशविधपुत्राभावे भवन्तु पत्न्यादयो धनग्राहिणः प्रकृते तु दत्तकः परिगृहीतोऽस्तीत्याशङ्क्याऽऽह—**पुत्रत्वाभावादिति** । अविधाय विधानं यः परिगृह्णाति पुत्रकम् । विवाहविधिभाजं तं न कुर्याद्धनभाजनम् । इति वचनाद्विधिं विना गृहीतस्य ग्रहीतृनिरूपितपुत्रत्वानुत्पत्तेरित्यर्थः । जातकर्मादिसंस्कारवत्परिग्रहविधेरपि पुत्रत्वोत्पत्तिनिमित्तत्वादिति भावः । अत्र धनभाक्त्वनिषेधान्यथानुपपत्त्या पुत्रत्वाभावः कल्प्यते । स च विधिं विना परिग्रहीतस्य । अविधाय विधानमित्युक्तेः । एवं च विधानाभावे पुत्रत्वाभाव इति व्यतिरेकमुखेण विधानस्य पुत्रत्वोत्पत्तिहेतुत्वमुक्तं भवतीत्यर्थः । तथा च यथा दत्ताद्या अपीत्यादिवचनैर्जातकर्मादिसंस्काराणां पुत्रतोत्पत्तिनिमित्तत्वं प्राक्प्रतिपादितं तद्वदविधाय विधानमित्यनेन परिग्रहविध्यनुष्ठानस्य पुत्रत्वोत्पत्तिहेतुत्वं प्रतिपादितमिति यावत् ।

' परं त्वसगोत्रोऽप्युपनयनान्तसंस्कारोत्तरमपि परिणीतोऽप्युत्पन्नपुत्रोऽपि च दत्तको भवति । बाधकाभावात । ' शुनःशेपो विश्वामित्रपुत्रः स्वयमेवाभवत् ' इति बह्वृचब्राह्मणसंवादाच्च । शुनःशेपश्चोपनीतः । अनुपनीतस्य वेदाध्ययनासंभवेन वैदिकमन्त्रैः प्रजापत्यादिस्तुता इन्द्रदत्तहिरण्मयरथप्रतिग्रहे च प्रवृत्त्यनुपपत्तेः । न च स स्वयंदत्त इति वाच्यम् । ' दत्ताद्यास्तनयाः ' इत्यत्राऽऽद्यपदेन कृत्रिमादीनामपि ग्रहणेन भवन्मते तस्यापि निषेधात् । न च श्रुतिवशाज्जातोपनयनः स्वयंदत्त एव स्वीकार्य इति वाच्यम् । तर्हि जातोपनयनस्य दत्तकस्यापि दुर्वारत्वात् । श्रुत्या दत्ताद्या इत्यस्याप्रामाण्योन्नयनात् । ' पितुर्गोत्रेण ' इत्यादेश्च प्रायशः कालिकापुराणादावदर्शनाच्चेत्याहुः ' इति दत्तकविधिनिरूपणे निर्णयसिन्धुटीकायां ( ८९१ ) पृष्ठ उक्तम् । अत्र प्रसङ्गसंगत्या विचारान्तरं निरूप्यते—विधिं विना परिगृहीतस्य पालकपितृ रिक्थग्राहित्वं सर्वथा नास्ति, किंतु ग्रहीत्रा तस्य विवाहमात्रं कर्तव्यमित्युक्तम् । तत्र विवाहे पालकेन पित्रा स्वगोत्रमुल्लेखनीयमथवा जनकपितुर्गोत्रम् । तथा नान्दीश्राद्धे स्वपितरः पूज्या आहोस्विद्दातृपितरः । न प्रथमः । पुत्रत्वोत्पत्तिप्रयोजकविधानाभावेन परिगृहीते ग्रहीतृनिरूपितपुत्रत्वानुत्पत्तेः स्वगोत्रोल्लेखः स्वपितृपूजा च नोपपद्यते । नापि द्वितीयः । स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारस्य दानपदार्थत्वेन दानेन दातुः स्वत्वनिवृत्तेर्दातृगोत्रनिवृत्तेश्चो

अत एव वृद्धगौतमः—

स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः।

विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥ इति ।

विधिनैव गोत्रतां यान्तीति नियमः। दानादिविधीनां दत्तकादिलक्षणान्तर्ग-

---

मातृपितृपूजा च न संभवतीति चेन्मैवं वादीः। तत्र दातृगोत्राद्युल्लेख एव कार्यः। दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति। दत्ताप्रदानिकं नाम व्यवहारपदं हि तत्। असम्यगविहितमार्गाश्रयेण द्रव्यं दत्त्वा पुनरादातुमिच्छति यस्मिन् विवादपदे तद्दत्ताप्रदानिकं व्यवहारपदं दत्तस्याप्रदानं पुनर्हरणं यस्मिन्नदाने तादिति तदर्थः। इति याज्ञवल्क्यमिताक्षरायां दत्ताप्रदानिकप्रकरणे नारदवचनाद्दाने सत्यपि ग्रहीत्रा सम्यग्गृहीतत्वाभावेन पुनराहरणीयत्वात्तत्र दातुः स्वत्वं पुनरुत्पद्यत एव। नहि दास्य इत्येतावत्संकल्पमात्रेण परस्वत्वमुत्पद्यतेऽपि तु दीयमानं यदि ग्रहीता गृह्णाति तदपि सम्यक्—विहितमार्गेण स्वी करोति तदैव तन्निर्वहति। तथा चात्र स्थले प्रतिग्रहस्यानिष्पन्नप्रायत्वेन स्वत्वनिवृत्तेरप्यसंजातप्रायत्वात्तत्र दातुः स्वत्वं पुनरक्षुण्णमित्याशयात्। इतरथा दानेन दातुः स्वत्वनिवृत्तेः प्रतिग्रहीतुश्च पुत्रत्वानुत्पत्तेस्तस्य कस्यचिदपि पुत्रत्वाभावेन त्रिशङ्कोरिवान्तरालावस्थानापत्तेरिति केऽप्याहुः। अन्ये तु 'चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते' ॥ इति वचनात्प्रतिग्रहीतुर्दास एव स इति तस्य विवाहादिषु प्रतिग्रहीतृगोत्रोल्लेखः कार्यो भवति। कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयंदत्तश्च दासश्च षडिमे पुत्रपांसनाः। इति वचनोक्तदासस्यैव दातुर्दानेन स्वत्वनाशे प्रतिग्रहीतुर्विध्युक्तग्रहणाभावेऽपि 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु' परिग्रहात्स्वामी भवतीति गौतमवचनात्सामान्यतो ग्रहणसत्त्वात्परिग्रहीतुस्तत्र स्वत्वं भवत्येव। इतरथा दातुर्दानेन स्वत्वनाशेऽपि विध्युक्तपरिग्रहाभावेन पुनर्दातुः स्वत्वोत्पत्तौ तद्विवाहादौ जनकस्यैवाधिकारात्परिग्रहीतुस्तद्विवाहकरणविधानस्यासंगत्यापत्तेरिति ध्येयम्।

अत एव—परिग्रहविधानस्य पुत्रत्वोत्पत्तिनिमित्तत्वादेवेत्यर्थः। **स्वगोत्रेष्विति**। **विधिनैवेति**। सर्वं वाक्यमसति बाधके सावधारणमिति न्यायेन सावधारणपरत्वाद्विधिनैव गोत्रतां संततित्वं प्राप्नुवन्तीति नियमः परिदृश्यत इति शेषः। अनेन च परिग्रहविधेरावश्यकत्वं स्फोरितम्। तदेवोपपादयति-**दानादिविधीनामिति**। दानप्रतिग्रहादिविधीनां दत्तकलक्षणान्तर्गतत्वेन दत्तकलक्षणघटकत्वेन दत्तकस्वरूपनिष्पादकत्वा-

तत्वेन स्वरूपनिर्वाहकत्वात् । यथोक्तं यमद्भिः पुत्रमापदीति । अपपूर्वग्रहणं सकलदानविधेरुपलक्षणम् । तेन च प्रतिग्रहविधिरप्याक्षिप्तो भवति । संप्राप्तोऽप्यन्यगोत्रत इति मानवात् सम्यग्विधिना प्राप्त इत्यर्थः । क्रीतादय इत्यादिशब्देन कृत्रिमापविद्धस्वयंदत्तानां ग्रहणम् ।

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति मनुना यथोदितानित्यनेन तत्तल्लक्षणसूचितविधिविशिष्टानामेव पुत्रप्रतिनिधित्वाभिधानात् । अत एव कृत्रिमलक्षणे सदृशं तु प्रकुर्याद्यमिति प्रशब्देन,

दित्यर्थः । विधानपुरःसरदानविधिनैव दत्तकत्वं निष्पद्यत इति यावत् । विधानं प्रदर्शयितुमाह—यथोक्तमिति । यमाद्भिः पुत्रमापदि ( म० स्मृ० ९ । १६८ ) इति । अत्राद्भिरित्यपग्रहणं पुत्रं परिग्रहीष्यन्नित्यादिनोक्तसकलदानविधेरुपलक्षणम् । तेन च प्रतिग्रहविधिरप्याक्षिप्तो भवति । स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनस्य दानपदार्थत्वात्परस्वत्वापादनस्य च परप्रतिग्रहं विनाऽनुपपत्तेः प्रतिग्रहविधिरप्याक्षिप्यत इत्यर्थः । संप्राप्तोऽन्यगोत्रतः ( म० स्मृ० ९ । १४१ ) इत्यस्य सम्यक् विधिना प्राप्त इत्यर्थः । तथा च विधिरावश्यक इति भावः । अन्यथाऽद्भिरित्यनुक्त्वा दद्याता-मित्येव वक्तव्यं स्यादिति भावः । क्रीतादय इत्यत्राऽऽदिशब्देन के ग्राह्यास्तद्दर्शयति—कृत्रिमापविद्धेति । तथा च दत्तकक्रीतकृत्रिमापविद्धस्वयंदत्तानां पञ्चानां परिग्रहविधिरावश्यकः । तेषु पञ्चस्वेव 'शुक्रशोणितसंभवः पुत्रः' इत्युक्तदानविक्रयपरित्यागानां संभवात् । क्षेत्रजगूढकानीनसहोढपौनर्भवशौद्रेषु क्षेत्रपुनर्भूशूद्र्यादिषु जायमानत्वेन स्वत्वस्य सद्भावेन परिग्रहासंभवात् । क्षेत्रजादीन सुतान्० ( म० स्मृ० ९ । १८० ) इति वचनेन मनुना यथोदितानित्यनेन तेन तेन लक्षणेन सूचितो यो विधिस्तद्विशिष्टानां विधिपूर्वकं परिगृहीतानामेव तेषां पुत्रप्रतिनिधित्वस्य प्रतिपादितत्वादित्यर्थः । अत एव—विधिविशिष्टानामेव प्रतिनिधित्वाङ्गीकारादेव । सदृशं तु प्रकुर्याद्यम्० ( म० स्मृ० ९ । १६९ ) इत्यत्र प्रशब्देन, यं पुत्रं परिगृह्णीयात्० ( म० स्मृ० ९ । १७१ ) इति वचने परिशब्देन, आत्मानं स्पर्शयेत्० ( म० स्मृ० ९ । १७७ ) इति लक्षणे 'स्पर्शनं प्रतिपादनम्' इति त्रिकाण्डीस्मरणाद्दानपर्यायस्पर्शनशब्देन च विधेरुपादानमेव कृतमित्यभिप्रायेणैव वसिष्ठेनापि 'तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ' इत्येवमारम्भं कृत्वा पुत्रपरिग्रहविधिः प्रतिपादितः । पुत्रं परिग्रहीष्यन्नित्येवं परिग्रहवचनेन च कृत्रिमस्वयंदत्तपरिग्रहेऽप्येष विधिर्बोध्य इत्येवं मनुना तत्तदुपसर्गशब्दोपादानेन सूचितत्वात् ।

अपविद्धलक्षणे यं पुत्रं परिगृह्णीयादिति परिशब्देन, स्वयंदत्तलक्षणे चाऽस्मानं स्पर्शयेद्ध इति दानापरपर्यायस्पर्शनशब्देन विधिपरिग्रह एव कृतः । तदभिप्रेत्यैव वसिष्ठेनापि तस्य दानविक्रयपरित्यागेषु मातापितरौ प्रभवत इत्युपक्रम्य परिग्रहविधिरभिहितः । पुत्रं परिग्रहीष्यन्निति परिग्रहवचनेन च कृत्रिमस्वयंदत्तपरिग्रहेऽप्येष विधिरनुसंधेयः । मनुना तत्तदुपसर्गेण सूचनात् । तस्मादेषां पञ्चानां पुत्राणां शौनकवसिष्ठाद्यन्यतमविधिपरिग्रहेणैव पुत्रत्वं नान्यथा । यथा क्षेत्रज उपपादितं मनुयाज्ञवल्क्याभ्याम् ।

नियुक्तायामपुत्रायां पुत्रो जातोऽविधानतः ।
नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः (म०स्मृ०९।१४४)।
नियुक्तौ यौ विधिं हित्वा वर्तेयातां तु कामतः ।
तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥ (म० स्मृ० ९।६३)

---

अत एवैषां दत्तक्रीतकृत्रिमापविद्धस्वयंदत्ताख्यानां पञ्चानां पुत्राणां शौनकाद्युक्तविधिपूर्वकपरिग्रहेणैव पुत्रत्वं सिध्यति नेतरथा । विधिपूर्वकप्रतिग्रहेणैव पुत्रत्वसिद्धिरित्येतदेव दृष्टान्तप्रदर्शनेन दृढीकरोति–**यथेति** । नियुक्तायामपुत्रायामिति ( म० स्मृ० ९ । १४४ ) । पुत्रोत्पादनार्थं गुर्वादिना नियुक्तायामपि विधवायां ‘ विधवायां नियुक्तस्तु० ( म० स्मृ० ९ । ६० ) इत्युक्तघृताभ्यक्तत्वादिनियोगेतिकर्तव्यतां विना जातः पुत्रः स क्षेत्रिकस्य पितुर्धनं लब्धुं नार्हति यस्मादसौ घृताक्तत्वादिनियमोल्लङ्घनात्पतितेनोत्पादित इति तदर्थः । घृताक्तत्वादिनियमपरित्यागो नियुक्तस्य पातित्यापादक इत्याह–**नियुक्तौ यावित्यादि** ( म० स्मृ० ९ । ६३ ) । ‘ ज्येष्ठकनिष्ठभ्रातरौ यौ परस्परभार्यायां नियुक्तौ घृताक्तादिविधानं त्यक्त्वा स्वेच्छातो वर्तेयातां तौ स्नुषागगुरुदारगौ पतितौ भवेताम् ’ इति तदर्थ इति मन्वर्थमुक्तावली । अत्र क्षेत्रिकपितृरिक्थलाभार्हतानिषेधेन क्षेत्रजस्य पुत्रत्वाभावः प्रतिपादितः । तत्र हेतुः पतितोत्पादितत्वम् । पातित्ये च घृताक्तत्वादिविधानराहित्यं हेतुः । तथा च घृताक्तत्वादिविधानाभावात्क्षेत्रजस्य पुत्रत्वाभाव इति व्यतिरेकोक्त्या घृताक्तत्वादिविधानसत्त्वे क्षेत्रजस्य पुत्रत्वसत्त्वमित्यन्वयः सिध्यति । एवं च विधानान्वयव्यतिरेकानुसारेण मनुयाज्ञवल्क्याभ्यां यथा घृताक्तत्वादिविधानपूर्वकेणैव नियोगेन क्षेत्रजे पुत्रत्वमुपपादितं तद्वद्दत्तक्रीतादिषु पञ्चसु शौनकाद्युक्तविधिपूर्वकेणैव परिग्रहेण पुत्रत्वं भवतीत्यर्थः । अनेन क्षेत्रजादिषु यत्र शौनकवसिष्ठाद्यन्यतमोक्तं विधानं नास्ति तत्र मनुयाज्ञवल्क्याभ्यामिदं विध्यन्तरं प्रतिपादितमिति बोध्यम् । नियोगेतिकर्तव्यतामाह मनुः—**यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः । यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथो**

इत्यादिविध्यन्वयव्यतिरेकानुसरणात् ।

यत्तु मिताक्षराटीकायां सुबोधिन्यां तच्च स्वत्वं पुत्रत्वादिवल्लौकिकं मन्यन्ते वृद्धा इत्यभिहितं तदुक्तविरोधात्, ‘ अथ दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरि-

---

भजेताऽऽप्रसवात्सकृत्सकृदृतावृतौ ( म० स्मृ० ९ । ६९-७० ) इति । अस्य श्लोकद्वयस्य व्याख्यानं याज्ञवल्क्यटीकायां वीरमित्रोदये त्वित्थम्—यस्याः कन्याया वाचा सत्ये कृते वाग्दाने कृते सति पतिः म्रियेत । अत्र यस्मै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेव वचनादवगम्यते । तस्मिन्पत्यौ प्रेते तां ज्येष्ठः कनिष्ठो वा देवरः स च पत्युः सोदरभ्रातैव वक्ष्यमाणेन प्रकारेण विन्देत परिणयेत् । यथाविधि यथाशास्त्रं विवाहविधिनैनां परिणीय ‘ विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि । एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचन । ( म० स्मृ० ९ । ६० ) इत्युक्तघृताभ्यङ्गवाङ्नियमादियतां शुक्लवस्त्रां मनोवाक्कायशौचशालिनीं मिथो रहस्यागर्भग्रहणात्प्रत्यृत्वेकवारं गच्छेत् । अयं च विवाहो वाचनिको घृताभ्यङ्गादिनियमवन्नियुक्ताभिगमनाङ्गमिति न देवरस्य भार्यात्वमापादयति । अतस्तस्मादुत्पन्नमपत्यं क्षेत्रस्वामिन एव भवति न देवरस्य । संविदा तूभयोरपीति ।

याज्ञवल्क्यस्मृतिव्याख्या मिताक्षरा नाम । तस्या मिताक्षराया व्याख्या सुबोधिनी । तेन सुबोधिनीकारेणोक्तं ‘ तच्च स्वत्वं पुत्रत्वादिवल्लौकिकं मन्यन्ते वृद्धाः ’ इति । तत्र स्वत्वं लोकसिद्धमेव न शास्त्रसमधिगम्यमिति महता प्रबन्धेन मिताक्षरायामभिधायानुमानेनापि स्वत्वस्य लौकिकत्वं साधितम् । अनुमानप्रयोगश्चेत्थम्—स्वत्वं लौकिकं लौकिकार्थक्रियासाधनत्वात् । व्रीह्यादिवत् । अत्र स्वत्वं पक्षः । लौकिकत्वं साध्यम । लौकिकार्थक्रियासाधनत्वादिति हेतुः । अन्वयव्याप्तौ दृष्टान्तो व्रीह्यादिवदिति । तथा च यद्यल्लौकिकार्थक्रियासाधनं तत्तल्लौकिकम् । यथा व्रीह्यादिस्वरूपम् । तथा चेदम् । तस्माल्लौकिकम् । लौकिकी—अर्थक्रिया क्रयविक्रयादिव्यवहारस्तत्साधनं तस्मात् । यथा व्रीह्यादि क्रयविक्रयादिलौकिकव्यवहारसाधनं तथा स्वत्वमपि क्रयादिलौकिकव्यवहारसाधनं भवति । नहि यस्य यत्स्वं न भवति तत्तस्य क्रयाद्यर्थक्रियां साधयति । यद्यल्लौकिकं न भवति तत्तल्लौकिकार्थक्रियासाधनमपि न भवति यथाऽऽहवनीयादिरिति व्यतिरेकव्याप्तिरपि । एवं स्वत्वस्य लौकिकत्वं प्रसाध्य तत्र दृष्टान्तत्वेन पुत्रत्वादिपदमुक्तम् । यथा पुत्रत्वं न शास्त्रगम्यं किंतु लोकप्रसिद्धं तद्वत्स्वत्वमित्यर्थः । इत्येवं यत्सुबोधिनीकारेण पुत्रत्वस्य लौकिकत्वमुक्तं तत् ‘ अविधाय विधानं यः ’ इति वचनविरुद्धम् । तेन हि विधानस्य पुत्रत्वोत्पत्तिनिमित्तत्वावगमात् । पैठीनसिवचनविरोधमपि दर्शयति—अथेत्यादि । आर्षेणेति । शौनका-

ग्रहेणाऽऽर्षेण येऽत्र जातास्तेऽसंगतकुलीनाद्व्यामुष्यायणा भवन्तीति पैठीनसिनाऽऽर्षेण ऋष्युक्तेनैव परपरिग्रहेण पुत्रत्वाभिधानाच्च विरुद्धमित्युपेक्षणीयम्। न संगताः कुलीना जनककुलीना येषां ते, ते च तेऽव्यामुष्यायणाश्चेति। य आर्षेण विधिना परिगृहीतास्ते जनककुलीनासंबद्धाः, अत एवाव्यामुष्यायणा मनुष्याणां भवन्तीत्यर्थः। यद्वा जनकपरिग्रहीत्रोर्द्वयोरपि संस्कारकत्वे व्यामुष्यायणत्वमित्यग्रे वक्ष्यमाणत्वाद्व्यामुष्यायणा इत्येव पाठोऽस्तु। मेधातिथिरपि दत्तकादिषु संस्कारनिमित्तमेव पुत्रत्वमाह—सत्यपि प्रयोग इन्द्रादिशब्दवल्लोक-

---

षृषिप्रोक्तेनैव परपरिग्रहेण दत्तकादीनां तेन पुत्रत्वमुक्तम्। **असंगतकुलीनेति**। न संगता असंगताः। असंबद्धा इत्यर्थः। असंगताः कुलीना जनककुलीना येषां तेऽसंगतकुलीनाः। जनककुले संबन्धरहिता इत्यर्थः। असंगतकुलीनाश्च तेऽत एवाव्यामुष्यायणाश्चासंगतकुलीनाव्यामुष्यायणाः। जनककुले संबन्धाभावादेव च व्यामुष्यायणा न भवन्ति, किंतु प्रतिग्रहीतृकुलीना एव भवन्ति। के इत्याकाङ्क्षायामाह—**य आर्षेणेति**। य ऋष्युक्तेन विधिना परिगृहीतास्ते दत्तकादय इति तदर्थः। तथा च यदुक्तं सुबोधिनीकारेण पुत्रत्वस्य लौकिकत्वं तदृषिवचनविसंवादीत्यनादरणीयमेवेति भावः। पक्षान्तरमाह—**यद्वेति**। **व्यामुष्यायणा इत्येव पाठ इति**। इदमुपलक्षणम्। असंगतकुलीना इत्यत्र संगतकुलीना इत्येव पाठोऽस्त्वित्यस्यापि। व्यामुष्यायणत्वस्य दातृप्रतिग्रहीत्रुभयकुलसंबन्धप्रयोज्यत्वात्। अत्रैवार्थे मेधातिथिं प्रमाणी करोति—**मेधातिथिरपीति**। अपिना प्रागुक्तमनुपैठीनस्योर्ग्रहणम्। **दत्तकादिष्विति**। दत्तक्रीतकृत्रिमापविद्धस्वयंदत्तेषु। **संस्कारनिमित्तमेवेति**। संस्कारो जातकर्मादिः। स निमित्तं हेतुर्यस्य पुत्रत्वस्य तत्तादृशमित्यर्थः। जातकर्मादिसंस्कारेणैव हेतुना पुत्रत्वं जायत इत्याहेति यावत्। एवकारेण स्वायोगो व्यवच्छिद्यते न त्वन्ययोगः। स्वस्य जातकर्मादेः संस्कारस्यायोगोऽसंबन्धो व्यावर्त्यते। जातकर्मादिसंस्कारावश्यकत्वं प्रतिपाद्यत इति यावत्। 'दत्ताद्या अपि तनयाः' 'चूडाद्या यदि संस्काराः' इति पुत्रत्वोत्पत्तौ जातकर्मादिसंस्कारावश्यकत्वाभिधानादिति भावः। अन्यस्य जातकर्मादेरन्यस्य परिग्रहविधानस्य योगः संबन्धो न व्यवच्छिद्यते न व्यावर्त्यते। 'अविधाय विधानं यः' इत्यनेन दत्तकादिषु पुत्रत्वोत्पत्तौ परिग्रहविधेरावश्यकत्वाभिधानात्। एवं च 'संस्कानिमित्तमेव' इति मेधातिथिग्रन्थ एवशब्दोऽयोगव्यवच्छेदार्थको न त्वन्ययोगव्यवच्छेदार्थक इत्याशयः। **सत्यपीति**। वैदिकविधिमन्तरेण जातकर्मादिसंस्कारमन्तरेण च दातृप्रतिग्रहीत्रोः संमत्यादिलौकिकव्यापारेण परिगृहीते मातापितृवचनसेवादिपुत्रकार्यकरत्वेन पुत्रव्यवहारे लोके

तोऽर्थातिशयाच्छास्त्रे चोत्पत्तिविधानाद्भार्यादिव्यवहारवत्पुत्रव्यवहारोऽवगन्तव्य इत्यादिग्रन्थसंदर्भेण । तस्माद्दत्तकादिषु संस्कारनिमित्तमेव पुत्रत्वमिति सिद्धम् । दानप्रतिग्रहहोमाद्यन्यतमाभावे तु पुत्रत्वाभाव एवेति ।

इदानीमौरसदत्तकयोर्दत्तकाकृतविध्योश्च समवाये धनग्रहणमाह स एव—

तस्मिञ्जाते सुते दत्ते न कृते च विधानके ।
तत्स्वं तस्यैव वित्तस्य यः स्वामी पितुरञ्जसा ॥ इति ।

तस्मिन्नौरसे सति यः सुतो जायते परिग्रहादिना तयोर्मध्ये तस्यैव तत्स्वं यः पितुर्वित्तस्याञ्जसा स्वभावेन स्वामी भवति नान्यस्य । सत्यौरसे परिगृहीतस्य न धनभाक्त्वमित्यर्थः । पुत्रोत्पत्तावौरसाभावस्यापि विशेषणत्वात् । तथा दत्ते

---

सत्यपीत्यर्थः । इन्द्रादिशब्दवत् । ‘ इदि परमैश्वर्ये ’ इति धातो रन्प्रत्ययेनेन्द्र-शब्दस्य निष्पन्नत्वादिन्द्रव्यवहारस्य परमैश्वर्ययुक्ते सिद्धत्वेऽपि ‘ योगाद्रूढिर्बलीयसी ’ इति न्यायेन यौगिकार्थापेक्षया रूढ्यर्थस्य प्राबल्येन तादृशार्थस्यावश्यं स्वीकार्यत्वा-त्सहस्राक्ष एवेन्द्रशब्दस्तद्वच्छास्त्रे ‘ पुत्रं प्रतिग्रहीष्यन ’ इत्याद्युत्पत्तिविधानाद्विधा-नार्थस्याप्यवश्यं ग्राह्यत्वाद्विवाहसंस्कारसंस्कृतस्त्रियामेव न तु केवलपाकनिष्पत्त्यादि-भार्याकार्यकारिण्यां भार्याव्यवहार इव, वैदिकविधिसहकृत एव दत्तके पुत्रव्यवहा-रोऽवगन्तव्यो न तु वैदिकविधिरहिते पुत्रकार्यकारिणीति तदर्थः । तस्मान्मेधातिथि-संवादाद्धेतोर्दत्तकादिषु पर्वोक्तेषु पञ्चसु संस्कारनिमित्तकमेव पुत्रत्वम । दानप्रतिग्रह-तदङ्गहोमादीनामन्यतमाविरहे तु न पुत्रत्वमिति सिद्धमिति भावः ।

अथौरसदत्तकयोः समवाये कृतविधानाकृतविधानयोर्दत्तकयोः समवाये च धनग्रहणाधिकारं वृद्धगौतम एवाऽऽह—**तस्मिञ्जात इति** । तच्छब्देन प्रागुक्तस्यौ-रसस्य परामर्शः । तस्मिन्नौरसे सति परिग्रहादिना दत्तपुत्रे जाते सति तयोर्मध्ये पितुर्धनहार्यौरस एव न दत्तकः । तथा कृतविधानके दत्तके सति यद्यकृतवि-धानको दत्तकः स्यात्तयोर्मध्ये कृतविधानक एव दत्तकः प्रतिग्रहीतृपितुर्धनहारी नाकृ-तविधानको दत्तक इति तदर्थः । तत्रौरसे सति दत्तकस्य धनहारित्वाभावे हेतुं वदन्नाह—**पुत्रोत्पत्ताविति** । अयं भावः—न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ( म० स्मृ० ९ । १८५ ) इति पितृरिक्थहरत्वं यत्पुत्राणामुक्तं तत्क्षे-त्रजादिगौणपुत्राणामेवोक्तम् । तत्राप्यौरसाभाव एव न त्वौरससमवाये । औरससमवायश्च द्वेधा—क्षेत्रजादिगौणपुत्रग्रहणात्प्रागौरससत्त्वं पश्चाद्वा तत्सत्त्वं चेति । तत्र प्रागौरस-सत्त्वे क्षेत्रजादीनां पुत्रीकरणमेव न संभवति । ‘ अपुत्रेणैव कर्तव्यः पुत्रप्रति-

यथाविधिपरिगृहीते सति योऽकृतविधानकः पुत्रस्तयोश्च दत्त एव धनभाङ् नाकृतविधानक इत्यर्थः। विधानस्यैव पुत्रत्वोत्पादकत्वात्।

---

निधिः सदा ' इत्यत्रिणौरसपुत्राभाववत एव पुत्रग्रहणाधिकारोक्तेः। पुत्रोत्पत्तिविधायकेऽस्मिन्वचनेऽपुत्रेणेत्यत्रत्यः पुत्रशब्द औरसपर एवेति तदर्थनिरूपणावसरे प्रागुनिरूपितमेव। तदेतदुक्तम्-पुत्रोत्पत्तावौरसाभावस्यापि विशेषणत्वादिति। तत-श्चौरसपुत्रसत्त्वे पुत्रग्रहणाधिकाराभावेन विधिना गृहीतेष्वपि क्षेत्रजादिषु पुत्रत्वमेव नोत्पद्यत इति कुतस्तेषां प्रतिग्रहीतृपितृधनग्राहित्वम्। अथ पश्चात्तत्सत्त्वमिति द्वितीयपक्षे प्रतिबन्धकाभावाद्गृहीतेषु क्षेत्रजादिषु पुत्रत्वोत्पत्तेरक्षत्यौरससत्त्वेऽपि गौणपुत्राणां प्रतिग्रहीतृपितृधनग्राहित्वं स्यादिति चेत्तदपि नेत्याह—' एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ' ( म० स्मृ० ९। १६३ ) इति मनुनौरसस्यैव धनग्राहित्वोक्तेः। इदं च क्षेत्रजादिग्रहणानन्तरमौरसोत्पत्तावेव प्रवर्तते। यत्रौरस एव एकलः क्षेत्रजादयः पुत्रा न सन्त्येव तत्रौरस एव धनग्राहीति निर्विवादम्। यत्राप्यौरसोत्पत्त्यनन्तरं क्षेत्रजादयो गृहीतास्तत्र गृहीतेषु तेषु पुत्रत्वोत्पादाभावादेव न तेषां प्रतिग्रहीतृधनग्राहित्वप्रसक्तिः। किंतु तत्राप्यौरस एव पितृधनग्राही। निरुक्ते स्थलद्वये नास्य वचनस्यापेक्षेति नात्र वचनस्य चारितार्थ्यं वक्तुं शक्यम्। किंतु यत्र क्षेत्रजादिग्रहणानन्तरमौरसोत्पत्तिस्तत्रैवास्य वचनस्य चारितार्थ्यं वक्तव्यं भवतीत्यत्रैव स्थल इदं प्रवर्तते। तदुक्तमेतच्छ्लोकस्य व्याख्याकर्त्रा मन्वर्थमुक्तावलीकारेण—' व्याध्यादिना प्रथममौरसपुत्राभावे क्षेत्रजादिषु कृतेषु पश्चादौषधादिना विगतव्याधेरौरस उत्पन्ने सतीदमुच्यते ' इति। एवं च ' पुत्रा रिक्थहराः पितुः ' ( म० स्मृ० ९। १८५ ) इत्यनेन यत्पुत्राणां पितृधनग्राहित्वमुक्तं तदौरसाभावे क्षेत्रजपुत्राणामिति पर्यवस्यति। तदेतन्मनसि निधायाऽऽह-**सत्यौरसे परिगृहीतस्य न धनभाक्त्वमित्यर्थ इति**। तथा कृतविधानाकृतविधानयोर्दत्तपुत्रयोर्मध्ये कृतविधानदत्तस्यैव प्रतिग्रहीतृधनहारित्वे हेतुं प्रदर्शयन्नाह—**विधानस्यैवेति**। ' अविधाय विधानं यः परिगृह्णाति पुत्रकम्। विवाहविधिभाजं तं न कुर्याद्धनभाजनम् ' इति मनूक्तेः। अत्र धनभागित्वनिषेधस्याकारणिकस्यासंभवात्परिगृहीते पुत्रत्वोत्पत्तेरभावः सूचितः। पुत्रत्वोत्पत्त्यभावस्य चाकारणिकस्यासंभवं मन्वानेन तत्र ' अविधाय विधानम् ' इति विधानाभावो हेतुत्वेन निर्दिष्ट इति विधानस्य पुत्रोत्पत्तिहेतुत्वं स्पष्टमेवोक्तं भवतीत्यर्थः। तदेतत्सर्वमनुसंधायैव ' तस्मिञ्जाते सुते दत्तो० ' इति वचनं प्रणीतवानिति तात्पर्यम्।

अथ दत्तकग्रहणानन्तरमौरस उत्पन्ने दत्तकस्य ज्येष्ठत्वेऽपि न स ज्येष्ठांश-

इत्थौरससमवाये न दत्तो ज्येष्ठांशभागित्याह स एव—

जातेष्वन्येषु पुत्रेषु दत्तपुत्रपरिग्रहात्।
पिता चेद्विभजेद्वित्तं नैव ज्येष्ठांशभाग्भवेत्॥ इति।

दत्तपरिग्रहानन्तरमौरसोत्पत्तावपि न दत्तो ज्येष्ठांशभागित्यर्थः।

धर्मान्तरमप्याह मनुः—

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥ इति।

दत्रिमः सुतो जनयितुर्गोत्ररिक्थे न भजेत्। तथा पुत्रं ददतः स्वधा दत्तपुत्रकर्तृकं श्राद्धं व्यपैति, यतो गोत्ररिक्थानुगः पिण्ड इति। एतेन पुत्रत्वापादक-

---

भागित्याह—जातेष्वन्येष्विति। 'विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान्। ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः' (या० स्मृ० २। ११४) इत्यनेन ज्येष्ठस्य यच्छ्रेष्ठांशभागित्वमुक्तं तत्र यदि दत्तको ज्येष्ठः स्यात्तर्हि स नैव श्रेष्ठांशभाग्भवतीत्याह—दत्तपरिग्रहानन्तरमिति। दत्तपुत्रपरिग्रहादनन्तरमौरसेषूत्पन्नेषु दत्तको ज्येष्ठांशं न लभत इति वचनार्थः। अत्र पिता चेद्विभजेदिति पितृग्रहणमुपलक्षणं पित्रभावस्यापि। तथा च पितुरूर्ध्वं विभागेऽपि दत्तको ज्येष्ठांशं न लभत इति भावः। ज्येष्ठादिविभागो मनुना प्रदर्शितः—'ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्। ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः' (म० स्मृ० ९। ११२) इति।

दत्तकस्यान्यं धर्मं कथयति—गोत्ररिक्थे (म० स्मृ० ९। १४२) इति। अत्र दत्रिमग्रहणं पुत्रप्रतिनिधिप्रदर्शनार्थम्। तेन क्षेत्रजादावप्ययं धर्मो भवति। दत्तकः सुतो जनकपितृसंबन्धि गोत्रं धनं च न कदाचिदपि प्राप्नोति। पिण्डश्च गोत्ररिक्थानुगामी यस्य गोत्ररिक्थे भजते तस्मै पिण्डो दीयते। तस्मात्पुत्रं ददतो जनकस्य स्वधा पिण्डश्राद्धादि तत्पुत्रकर्तृकं निवर्तते। दत्तः पुत्रो जनकस्य पितुः श्राद्धादि न कुर्यादिति यावत्। दत्तकः प्रतिग्रहीतृधनं प्रतिग्रहीतृगोत्रं च भजतेऽथ च जनकस्य पितुर्धनाद्गोत्राच्च निवर्तत इति 'गोत्ररिक्थे' इति वचनेनोच्यते। तत्र हेतुं प्रदर्शयन्नाह—पुत्रत्वापादकेत्यादि। प्रतिग्रहीतृनिरूपितं यद्दत्तके पुत्रत्वं तदुत्पादिका या स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारात्मिका जनकपितृकर्तृका दानक्रिया तयैवेत्यर्थः। तत्र स्वस्वत्वनिवृत्तिरूपेणांशेन पुत्रत्वनिवृत्त्या दत्तकस्य जनकपितृधनस्वत्वनिवृत्तिर्जनकपितृगोत्रनिवृत्तिश्च भवति। अथ च परस्व-

क्रिययैव दत्रिमस्य प्रतिग्रहीतृधने स्वत्वं तत्सगोत्रत्वं च भवति । दातृधने तु दानादेव पुत्रत्वनिवृत्तिद्वारा दत्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यत इति चन्द्रिकाकारः ।

ननु मनुवचनाज्जनकगोत्रनिवृत्तावपि प्रतिग्रहीतृगोत्रप्राप्तौ किं मानमित्यत आह बृहन्मनुः—

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥ इति ।

दत्तकक्रीतादिपुत्राणां बीजवप्तुर्जनकस्य सपिण्डताऽस्त्येव दानादिनाऽपि सा न निवर्तते । तस्या अवयवान्वयरूपतया यावच्छरीरं दुरपनेयत्वात् । अनेनावयवान्वय एव सापिण्ड्यं न पिण्डान्वय इत्युक्तं भवति । पिण्डान्वयस्य व्यपैति ददतः स्वधेत्यपगमावगमात् । सा च सपिण्डता कियतीत्यपेक्षायामाह—

---

त्वोत्पत्तिरूपेणांशेन दत्तकस्य प्रतिग्रहीतृपितृधने स्वत्वं प्रतिग्रहीतृगोत्रप्राप्तिश्च भवतीति दत्तकचन्द्रिकाकार आहेति यावत् । यद्यप्युक्तमनुवचने दत्तकस्य प्रतिग्रहीतृगोत्ररिक्थभागित्वं स्पष्टतया नोक्तं तथाऽपि जनकपितुर्गोत्ररिक्थभागित्वनिषेधात्तच्छ्राद्धादिकरणनिषेधाच्च दत्तकस्य प्रतिग्रहीतृपितृगोत्ररिक्थभागित्वं प्रतीतं भवतीत्यनेनैव मनुवचनेन दत्तकस्य प्रतिग्रहीतृगोत्रं प्राप्यत इति चन्द्रिकाकाराशयः ।

दत्तकमीमांसाकारस्तु दत्तकस्य प्रतिग्रहीतृगोत्रप्राप्तिर्वचनप्रामाण्यादिति प्रतिपादयितुं शङ्कते—**ननु मन्विति** । 'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः' इति निरुक्तमनुवचनेन जनकगोत्रनिवृत्तौ प्रतिपादितायामपि दत्तकस्य प्रतिग्रहीतृगोत्रप्राप्तिविषये किं प्रमाणमित्याक्षिप्य तत्र प्रमाणभूतं वचनं दर्शयति—**दत्तक्रीतादीति** । मनुना औरसादयो द्वादश पुत्रा उक्ताः । तेषां मध्ये औरसव्यतिरिक्तक्षेत्रजाद्येकादशानां पुत्राणां बीजवप्तुर्जनकपितुः सापिण्ड्यं पितृपक्षे सप्तपुरुषपर्यन्तं मातृपक्षे पञ्चपुरुषपर्यन्तं भवति तद्वद्गोत्रं च पालकपितुर्यद्गोत्रं तदेव तेषां गोत्रं भवतीति तदर्थाद् दत्तकस्य प्रतिग्रहीतृगोत्रं प्राप्यत इति भावः । दत्तकादिपुत्राणां जनकपितृनिरूपितं सापिण्ड्यं वर्तत एव । तस्य सापिण्ड्यस्य मूलपुरुषैकशरीरावयवान्वयात्मकत्वेन यावदस्मदादिकस्य शरीरमवस्थितं भवति तावत्कालपर्यन्तं तज्जनकपितृनिरूपितं सापिण्ड्यं सर्वथाऽपनेतुमशक्यमेव । यतस्तच्छरीरावयवान्वयरूपं भवतीत्यर्थः । तथा च दत्तकमीमांसाकारस्यात्रावयवान्वयरूपमेव सापिण्ड्यमभिप्रेतं न तु पिण्डान्वयरूपं निर्वाप्यसापिण्ड्यमित्यवगम्यते । पिण्डान्वयापरपर्यायस्य निर्वा-

पञ्चमी सप्तमीति। पञ्चानां पूरणी पञ्चमी। पञ्चपुरुषव्याप्तेत्यर्थः। एवं सप्तमी। गौतमोऽपि—ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमादिति। अत्र बीजिग्रहणं दत्तकाद्युत्पादकानां सर्वेषामपि संग्रहाय न केवलं क्षेत्रजोत्पादकस्यैव।

> य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः।
> यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु॥ (म०स्मृ०९।१८१)

---

प्यसापिण्ड्यस्य 'व्यपैति ददतः स्वधा' इत्यनेनापगमप्रतिपादनात्। स्वधा श्राद्धम्। 'स्वधा वै पितॄणामन्नम्' इति श्रवणात्। ददतो दातुपितुर्जनकपितुरिति यावत्। स्वधा श्राद्धं व्यपैति निवर्तते। दत्तकपुत्रकर्तृकमिति शेषः। दत्तकः सुतो जनकपितुः श्राद्धं न करोतीति तदर्थः पूर्वमुक्त एव। अयं भावः—एकस्यां पिण्डदानक्रियायां पिण्डदातृत्वपिण्डभाक्त्वलेपभाक्त्वान्यतमसंबन्धेन प्रवेशो हि पिण्डान्वयसापिण्ड्यं निर्वाप्यसापिण्ड्यमिति चोच्यते। तत्र जनकपित्रुद्देश्यकपिण्डदानक्रियायां दत्तकस्य पिण्डदातृत्वेन संबन्धेन प्रवेशो न घटते। दत्तकस्य जनकपितृश्राद्धकरणानिषेधात्। तथा च दत्तकस्य जनककुले पिण्डान्वयरूपं सापिण्ड्यं नैव संभवति। अयमेव हि पिण्डान्वयसापिण्ड्यापगम इति। किंत्ववयवान्वयरूपमेव सापिण्ड्यं दत्तकस्य जनककुलेऽस्तीति भावः। तच्च कियत्पुरुषपर्यन्तं भवतीति जिज्ञासायामुक्तं **पञ्चमी सप्तमीति**। पञ्चानां पूरणी पञ्चमीति व्युत्पत्तेः पञ्चपुरुषपर्यन्तेत्यर्थः। सपिण्डतेत्यस्य शब्दस्य तल्प्रत्ययान्तत्वेन स्त्रीत्वात्पञ्चमीति स्त्रीलिङ्गनिर्देशः। एवं सप्तमीत्यत्रापि बोध्यम्। एवं च दत्तकस्य जनककुलेऽवयवान्वयरूपा सपिण्डता मातृपक्षे पञ्चपुरुषपर्यन्ता, पितृपक्षे तु सप्तपुरुषपर्यन्तेति भावः।

अमुमेवार्थं गौतमोऽप्याहेति तद्वचनमालिखति—**ऊर्ध्वं सप्तमादित्यादि**। अत्र बीजिशब्देन दत्तककृत्रिमगूढादीनां पुत्राणां ये जनका उत्पादयितारस्ते सर्वे गृह्यन्ते नतु क्षेत्रजपुत्रस्योत्पादक एव गृह्यते। बहुत्र बीजिशब्दः क्षेत्रजपुत्रस्योत्पादयितरि प्रयुक्तो दृश्यत इत्यत्रापि तादृशार्थक एवेत्याशङ्का स्यात्तदर्थमिदमुक्तम्। एवं चात्र वचने बीजिशब्दो यौगिक एव नतु योगरूढ इत्याशयः। तत्र प्रमाणं कथयन्नाह—**य एतेऽभिहिता०** (म० स्मृ० ९। १८१) इति। अस्यार्थः—औरसपुत्रलक्षणकथनप्रसङ्गेन ये क्षेत्रजदत्तककृत्रिमगूढापविद्धकानीनसहोढक्रीतकपौनर्भवस्वयंदत्तपारशवाख्या एकादश पुत्रा उक्तास्तेषां मध्ये पौनर्भवपारशवौ वर्जयित्वाऽन्ये

इति स्मरणात् । तस्य ते पुत्रा इति पुत्रत्वप्रतिपादनं सापिण्ड्यप्रतिपादनार्थं नतु पुत्रत्वोत्पादनार्थम् । पुत्रान्द्वादश यानाहेत्यादिप्रतिग्रहीतृपुत्रत्वप्रतिपादनविरोधात् । नेतरस्य प्रतिग्रहीतुरित्यर्थः ।

---

नवान्यबीजसमुत्पन्नाः सन्त्यतस्ते नव पुत्रा यस्य बीजाद्वीर्यात्समुत्पन्नास्तस्यैव ते भवन्ति नेतरस्य । यस्य क्षेत्रं येन वा क्रयणादि कृतं तस्य क्षेत्रिकादेस्ते पुत्रा न भवन्ति । यथा प्रसवविरोधिव्याध्याद्युपेतस्य देवदत्तस्य भार्यायां गुरुनियुक्तेन यज्ञदत्तेनोत्पादितः सुतः क्षेत्रस्वामिनो देवदत्तस्य भवति । यतो देवदत्तस्य क्षेत्र उत्पादितोऽतः स देवदत्तस्य क्षेत्रजः पुत्रो भवतीत्युक्तं, किंतु स देवदत्तस्य नापि तु यस्य यज्ञदत्तस्य बीजात्समुद्भूतस्तस्यैव स पुत्रो वेदितव्य इति । तस्मादौरसे सति क्षेत्रजादयः पुत्रा न पुत्रीकर्तव्या इत्यनेन वचनेन प्रतिपाद्यते । क्षेत्रजादिषु नवान्यबीजजाः सन्ति । पौनर्भवपारशवौ तु नान्यबीजजौ किंतु स्वबीजजाविति तत्तत्स्वरूपप्रतिपादकवचनादेवावगतं भवति । तथा चौरसे सति नव पुत्रा न पुत्रीकर्तव्या इत्यर्थादौरसे सत्यपि स्वबीजजयोः पौनर्भवपारशवयोः पुत्रीकरणं प्राप्नोति । तच्च नेष्टम् । अपुत्रेणैवेत्युक्तेः । अतोऽत्रान्यबीजजा इति यदुक्तं तदेकादशपुत्रोपलक्षणं स्वीकार्यं भवति । तस्मादौरसे सति क्षेत्रजादय एकादशापि पुत्रा नैव पुत्रप्रतिनिधीकरणीया इति सिध्यति । उपलक्षणत्वे प्रमाणं तु 'आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः । तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना । इति वृद्धबृहस्पतिवचनमेवेति बोध्यम् । अत्रौरसमन्तरेणैकादशानां पुत्राणां पुत्रप्रतिनिधित्वस्य स्पष्टमुक्तत्वेनार्थादौरसे सत्येषां पुत्रप्रतिनिधित्वं नास्तीति प्रतीयत इति भावः । अत्र 'तस्य ते' इत्यनेन यत्क्षेत्रजादीनां बीजिनिरूपितं पुत्रत्वमुक्तं तत्सापिण्ड्यप्रतिपादनार्थं नतु पुत्रत्वोत्पत्तिं प्रतिपादयितुम् । तथा सति 'पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः' ( म० स्मृ० ९ । १५८ ) इति वचनविरोधः स्यात् । तेन हि क्षेत्रजादीनां प्रतिग्रहीतृपुत्रत्वस्य पूर्वमुक्तत्वात् । अनेन बीजिपुत्रत्व उच्यमाने तद्विरोधः स्पष्ट एव । तस्माद्बीजिनिरूपितसापिण्ड्यं प्रतिपादयितुमेव बीजिपुत्रत्वमुक्तमित्यवश्यमङ्गीकार्यम् । अन्यथा मूलभूतश्रुत्यन्तरकल्पनया गौरवापत्तेः । तथाऽङ्गीकृते तदेकवाक्यत्वाय गौतमवाक्येऽपि बीजिग्रहणस्य दत्तकाद्युत्पादकसर्वसंग्रहार्थताऽर्थादेवाऽऽयाता भवति । ततश्च बीजिनः पितृबन्धुभ्यः सप्तमान्मातृबन्धुभ्यश्च पञ्चमादूर्ध्वमित्यन्वयेन जनकपितृकुले पितृपक्षे सप्तमादूर्ध्वं मातृपक्षे च पञ्चमादूर्ध्वं कन्या विवाह्या भवति । तत्र सापिण्ड्यस्य निवृत्तत्वादिति गौतमवचनस्यार्थः ।

नन्वेवं कन्यावदुभयत्रापि सापिण्ड्यमास्तां प्रतिग्रहेण गोत्रवत्सापिण्ड्य-स्याप्युत्पत्तेरिति चेत् । मैवम् ।

स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥

इति वृद्धगौतमस्मरणविरोधात् । ये दत्तादयः सुताः स्वगोत्रेषु स्वगोत्रमध्ये कृतास्ते विधिना गोत्रतां संततित्वं यान्ति, परंतु तैः सह विधिना सापिण्ड्यं न विधीयते नोत्पद्यत इत्यर्थः । स्वगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रे सुतरां सापिण्ड्यानुत्पत्तिरुक्ता । युक्तं चैतत् । पित्रारब्धत्वेन भर्त्रा सहैकशरीरारम्भ-

---

शङ्कते नन्विति । एवमिति । 'तस्य ते' ( म० स्मृ० ९।१८१ ) इत्यनेनोक्तस्य क्षेत्रजादीनां बीजिपुत्रत्वस्य बीजिनिरूपितसापिण्ड्यप्रतिपादनतात्पर्यकत्वे सति । यथा विवाहितायाः कन्याया भर्तृकुले जनककुले चेत्युभयत्र सापिण्ड्यं विवाहप्रतिबन्धकं वर्तते । आशौचप्रयोजकं सापिण्ड्यं त्वस्या उभयकुले नास्ति । 'एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके' इति स्मृत्या भर्तृकुल एव सापिण्ड्योक्तेः । तद्वद्दत्तकादीनामपि जनककुले पालककुले चेत्युभयत्र सापिण्ड्यं भवतु ।

ननु क्षेत्रजादीनां बीजिनिरूपितसापिण्ड्योक्तेस्तदस्तु नाम । किंतु पालकपितृनिरूपितसापिण्ड्यसत्त्वे प्रमाणाभावेन कथमिव दृष्टान्तितकन्यावद्दत्तकादेरुभयत्र सापिण्ड्यसत्त्वशङ्काऽपीत्यत आह--प्रतिग्रहेणेत्यादि । यथा प्रतिगृह्णामीति संकल्प्य स्वीकृतायां भार्यायां जनकगोत्रनिवृत्तिपुरःसरं भर्तृगोत्रमुत्पद्यते तद्वत्तथा प्रतिज्ञाय स्वीकृतायां भार्यायां भर्तृनिरूपितसापिण्ड्योत्पत्तिसंभवात्संभवति दत्तकादीनामुभयत्र सापिण्ड्यमिति चेन्नेत्युद्गमित्याह—स्वगोत्रेषु कृता इत्यादि । स्वगोत्रमध्ये ये सुता दत्तकादयः कृतास्ते दत्तकपरिग्रहविध्यनुष्ठानेन गोत्रतां संततित्वं प्राप्नुवन्ति । संततिर्गोत्रजननकुलानि त्रिकाण्डीस्मरणात् । किंतु तैर्दत्तकादिभिः सह प्रतिग्रहीतुः सापिण्ड्यं नोत्पद्यत इति तदर्थः । यदा हि स्वगोत्रेऽपि सापिण्ड्यं नोत्पद्यते तदा परगोत्रे सापिण्ड्यं नोत्पद्यत इति किमु वक्तव्यमिति कैमुतिकन्यायेन परगोत्रीये दत्तके सुतरां प्रतिग्रहीतृनिरूपितं सापिण्ड्यं नास्ति । युज्यते चेदम्—दत्तकादिषु सापिण्ड्यं एकशरीरावयवान्वयरूपमेव संभवति न पिण्डान्वयरूपम् । 'व्यपैति दद्तः स्वधा' ( म० स्मृ० ९ । १४२ ) इति वचनेन दत्तकादिषु तस्य निवृत्तेरुक्तत्वात् । एकशरीरावयवान्वयो ह्यारभ्यारम्भकभावेन विवक्षितः । यथा पुत्रस्य मातापितृशुक्रशोणितसंभूयमानत्वेनाऽऽरभ्यैकपुत्रशरीर आरम्भकयोर्मातापित्रोः शरीरावयवान्वय-



**कत्वेन च यथोभयत्रापि साविण्डयं सिध्यति न तथा दत्तके पित्रारब्धत्वेऽपि प्रतिग्रहीत्रा सहैकशरीरारम्भकत्वाभावात् ।**

---

सत्त्वात्पुत्र एकशरीरावयवान्वयरूपं मातापितृनिरूपितं साविण्ड्यं भवति । पितृद्वारा पितामहशरीरान्वयोऽप्यस्ति । स्वपितामहशरीरान्वयः साक्षात्स्वपितरि स्वपितुः शरीरान्वयश्च स्वस्मिन्निति परम्परया पितामहशरीरान्वयसत्त्वात्पितामहसाविण्ड्यमपि पौत्रेऽस्तीत्यर्थः । नन्वेतदेकशरीरान्वयरूपं साविण्ड्यं भर्तृभार्ययोः परस्परं न संभवति । आरभ्ययोर्भर्तृभार्ययोरारम्भकशरीरस्य भिन्नत्वादिति चेदत्रोच्यते । ज्येष्ठाख्यः कश्चित्पुत्रः । तत्पिता वैशाखः । वैशाखस्य च पिता चैत्रः । एवं स्थितौ पितामहचैत्रशरीरान्वयविशिष्टज्येष्ठाख्यपुत्रशरीरारम्भकयोर्वैशाखवैशाख्योर्भर्तृभार्ययोर्ज्येष्ठमातापित्रोरुभयोरपि चैत्रशरीरान्वयः संभवति । तत्र वैशाखशरीरे चैत्रशरीरान्वयः स्पष्ट एव । वैशाखस्य चैत्रपितृकत्वात् । स एव वैशाखशरीरगतश्चैत्रशरीरान्वयो वैशाखभार्यायां वैशाख्यामपि वर्तते । स च यथा वैशाखेन हि चैत्रशरीरावयवान्वितः स्वशरीरावयवः स्वभार्यायां वैशाख्यां शुक्ररूपेण निहितः । तेन सह भार्यावयवानां तादात्म्यं संपन्नम् । तेन ते उभे अपि भर्तृभार्ये वैशाखो वैशाखी च चैत्ररूपैकशरीरावयवान्विते संपन्ने । तादृशैकशरीरावयवान्वितयोस्तयोर्ज्येष्ठाख्यपुत्रैकशरीरारम्भकत्वाद्भर्तृभार्ययोर्वैशाखस्य वैशाख्याश्च ज्येष्ठपितामहचैत्रैकशरीरावयवान्वयसत्त्वात्तयोर्भर्तृभार्ययोरप्येकशरीरावयवान्वयरूपं साविण्डयं भवत्येव । भर्तुः शुक्ररूपेण भार्यायां प्रवेशो मनुनैवोक्तः–'पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते' ( म० स्मृ० ९ । ८ ) इति । पतिः शुक्ररूपेण भार्यां संप्रविश्य गर्भमापाद्य तस्यां भार्यायां पुत्ररूपेण जायत इति कुल्लूककृता तद्व्याख्या । 'पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते' इति बह्वृचब्राह्मणात् । तथा चैकशरीरारभ्यारभ्यारम्भकत्वाद्भर्तृभार्ययोः परस्परं साविण्डयमवयवान्वयरूपं सिध्यति । अत्रैकशरीरशब्दः पितामहशरीरपरः । तथा च चैत्रपितामहैकशरीरेणाऽऽरभ्यो यो वैशाखस्तदारभ्यो यो ज्येष्ठाख्यः पुत्रस्तदारम्भको वैशाख इति तदारभ्यस्यैव तदारभ्यारभ्यारम्भकत्वमिति नियमः सिध्यति । तदारभ्यश्चैत्रारभ्यो वैशाखः । स एव चैत्रारभ्यवैशाखारभ्यज्येष्ठारम्भकोऽस्ति । तद्वद्वैशाख्यपि ज्येष्ठारम्भिकेति स्पष्टमेव दृश्यते । तत्र च यदि वैशाखी चैत्रशरीरारभ्या न स्यात्तर्हि ज्येष्ठारम्भिकाऽपि न स्यात् । यस्मात्तु ज्येष्ठारम्भिका भवति तस्मात्सा वैशाख इव चैत्रशरीरारभ्याऽपि भवति । अन्यथा चैत्रारभ्यारभ्यारम्भकत्वानुपपत्तेः । वैशाख्याश्चैत्रशरीरारभ्यत्वं तु प्राग्दर्शितरीत्याऽवसेयम् । एतदनुसंधायाऽऽह–**पित्रारब्धत्वे-**

अत एव देवलः—

धर्मार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् ।
अंशपिण्डविभागित्वं तेषु केवलमीरितम् ॥ इति ।

केवलशब्देन सापिण्ड्यमेव निरस्तवान् । गोत्रांशपिण्डानां विधानात् । नन्वेतत्प्रकृतार्थानुपयोगि । धर्मपुत्रविषयत्वात् । तथा हि—तत्तद्गोत्रेण तस्य तस्यैव गोत्रेण ये पुत्रवद्धर्मार्थं वर्धितास्तेषु पुत्रेषु केवलमंशपिण्डविभागित्वमेव न वर्धकसापिण्ड्यमित्यर्थः। तेनैतद्धर्मपुत्रस्यैव वर्धकसापिण्ड्याभावं बोधयति

---

**नेत्यादि** । पित्रा वैशाखेनाऽऽरब्धो यो ज्येष्ठाख्यः पुत्रः स पित्रारब्धः । **तस्य** भावस्तत्त्वम् । तेन हेतुनेत्यर्थः । अथ च भर्त्रा वैशाखेन सह **भर्तृसाहित्येने**त्यर्थः । वैशाख्या ज्येष्ठाख्यपुत्ररूपैकशरीरस्याऽऽरम्भकत्वेन हेतुना चेत्यर्थः । **यथौ**रसपुत्रस्य पितृकुले मातामहकुले चेत्युभयत्रापि सापिण्ड्यं सिध्यति न **तद्वद्दत्तकस्य** जनककुले प्रतिग्रहीतृकुले चेत्युभयत्र सापिण्ड्यमेकशरीरावयवान्वयरूपं सिध्यति । पित्रारब्धत्वेन दत्तकस्य जनकपितृकुले सापिण्ड्यसत्त्वेऽपि प्रतिग्रहीत्रा सह **प्रतिग्रहीतृसाहित्येन** स्वस्य, पुत्ररूपैकशरीरारम्भकत्वप्रतिपादकवचनाभावान्न दत्तके शरीरावयवान्वयरूपं प्रतिग्रहीतृनिरूपितं सापिण्ड्यम् । एवं चैकसत्त्वेऽपि द्वयं नास्तीति न्यायेन दत्तकस्य जनकपालकोभयकुले सापिण्ड्यं नास्तीत्युक्तमिति भावः । **अत एवेति** । दत्तके प्रतिग्रहीतृसापिण्ड्याभावादेवेत्यर्थः । **धर्मार्थं वर्धिता इति** । ये पुत्राः पुत्रवद्धर्मार्थं पिण्डोदकादिधर्मार्थं वर्धितास्तेषु तत्तद्गोत्रेण **प्रतिग्रहीतृ**गोत्रेण सह केवलमंशपिण्डभागित्वं कथितमिति तदर्थः । अत्र देवलेन **केवलशब्देन** सापिण्ड्यमेव निषिद्धम् । गोत्रांशपिण्डानां विहितत्वात्तन्निषेधस्य सुतरां **वक्तुमशक्य**त्वादिति भावः ।

शङ्कते—**नन्वेतदिति** । निरुक्तं देवलवचनं दत्तकस्य **प्रतिग्रहीतृकुले सापि**ण्ड्यानुत्पत्तिविषये नोपयुज्यते । तद्वचनस्य धर्मपुत्रमुद्दिश्य **प्रवृत्तत्वात्** । **तदेव** प्रतिपादयितुं प्रतिजानीते—**तथा हीति** । **तस्य तस्यैवेति** । प्रतिग्रहीतुस्तस्य **तस्यैव गोत्रेण** सह तत्तद्गोत्रमपरित्यज्यैवेत्यर्थः । ये पुत्रवत्पुत्रसदृशं यथा स्यात्तथा **धर्मार्थं** तद्विवाहादिकरणजन्यपुण्योत्पत्त्यर्थं वर्धितास्तेषु पुत्रेषु केवलमंशपिण्डभागित्वमेव **न वर्धकसापिण्ड्यं** न पालकसापिण्ड्यमिति तदर्थः । तेन कारणेन **धर्मपुत्रस्यैवेदं** पालकसापिण्ड्याभावं प्रतिपादयति न दत्तकस्य वर्धकसापिण्ड्याभावमभिधत्त **इत्याश**यात् । **अत्रेदं बोध्यम्**—सोऽयं धर्मपुत्रः पुत्रापुत्रविलक्षणः । **यद्यसावपुत्र इति मन्येत** **तद्व्यतिरिक्तस्यास्य** गोत्ररिक्थांशभागित्वविधानासंभवः ।

न दत्तकस्येति चेत् । नैवम् । पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुरिति संख्याविरोधेन धर्मपुत्रानभ्युपगमात् । अभ्युपगमेऽपि वा पत्न्यादिष्वगणनेनांशभागित्वासंभवादप्रसक्त्या सापिण्ड्यनिषेधासंगतेश्च । तस्माद्दत्तपुत्रविषयमेवैतत् । अंशभागित्वप्रदर्शनात् । तत्र चायमर्थः—धर्मार्थं स्वस्यालोकतापरिहारकधर्मसंप-

---

ननु मुख्यगौणपुत्राभावे धनहारित्वेनोक्तेषु पत्न्यादिष्वन्तर्गतः कश्चित्स्यात् । तथा सति रिक्थांशभागित्वविधानसंभवेऽपि गोत्रभागित्वविधानासंभवस्तदवस्थ एव । 'धनभागुत्तरोत्तरः' ( या० स्मृ० २ । १३६ ) इति तेषां धनभागित्वस्यैव प्रतिपादनात् । वस्तुतस्त्वस्य धनभागित्वमपि नास्ति । पत्न्यादिष्वपरिगणितत्वात् । अथैवं पुत्र इति मन्येत तर्हि मनुनोक्तद्वादशविधपुत्रत्वान्यतमलक्षणाक्रान्तत्वमपि नास्ति । तस्मादयं पुत्रापुत्रविलक्षण एवेति । तदेतद्दूषयति—**नैवमिति** । मनुना हि गौणमुख्यभेदेन धर्मार्थमौरसः क्षेत्रजश्चैवेति द्वादशैव पुत्रा अभिहिताः । तदतिरेकेण धर्मपुत्रस्याभ्युपगमे 'पुत्रान्द्वादश यानाह' इति पुत्रगतद्वादशसंख्याविरोधः स्पष्ट एव । ततश्चातिरिक्तस्य त्रयोदशस्य धर्मपुत्रस्याङ्गीकर्तुमशक्यत्वेन धर्मपुत्रविषयत्वेन देवलवचनस्य व्यवस्थापनं सर्वथाऽनुचितमेवेति दत्तकविषयत्वेनैव तद्वचनव्यवस्था युक्ता । अथ मनूक्तद्वादशसंख्याविरोधपरिजिहीर्षया सोऽयं धर्मपुत्रो दत्तकेऽन्तर्भाव्यते । 'औरसः क्षेत्रजश्चैव दत्तः' ( म० स्मृ० ९ । १५९ ) इति मनुवचने दत्तशब्दो दत्तकत्वसादृश्यादजहल्लक्षणया धर्मपुत्रपरोऽपि । अर्थाद्दत्तशब्दः केवलयौगिको न तु योगरूढ इति भावः । तथा चातिरिक्तस्य धर्मपुत्रस्याभ्युपगमे न किंचित्प्रतिबन्धकमित्याशयेनाऽऽह—**अभ्युपगमेऽपि वेति** । धर्मपुत्रस्याङ्गीकारे 'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः । एषामभावे पूर्वस्य धनभागुत्तरोत्तरः । स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः' ( या० स्मृ० २ । १३५-१३६ ) इति याज्ञवल्क्येन मृतस्यापुत्रस्य धनहारित्वेन परिगणितेषु पत्न्यादिष्वस्य धर्मपुत्रस्यासंख्यातत्वेन धनहारित्वासंभवेन 'गोत्ररिक्थानुगः पिण्डः' ( म० स्मृ० ९ । १४२ ) इत्युक्तस्यांशभागिन एव सापिण्ड्यस्य धर्मपुत्रे सुतरामसंभवेन तदप्राप्त्या तन्निषेधात्यन्तानुपपत्तेश्च नोक्तदेवलवचनस्य धर्मपुत्रविषयत्वेन व्यवस्थापनं युक्तम् । तदप्राप्त्या तन्निषेधेत्युभयत्र तच्छब्दः सापिण्ड्यपरामर्शको बोध्यः । तस्माद्दत्तकपुत्रमुद्दिश्यैवेदं देवलवचनं प्रवृत्तम् । अंशपिण्डविभागित्वमित्यंशभागित्वप्रतिपादनादिति ज्ञेयम् । तदयं तस्य देवलवचनस्य परमार्थः—**धर्मार्थं स्वेति** । स्वस्य नाम प्रतिग्रहीतुर्या पुत्राभावनिमित्तिकाऽलोकता स्वर्गादिलोकाप्राप्तिस्तत्परिहारजनको यो धर्मः पुण्यं तत्संपत्त्य-

स्यर्थं तत्तद्गोत्रेण जनकापेक्षया भिन्नगोत्रेणापि परिग्रहीत्रा पुत्रवत्पुत्रप्रतिनिधि-तया परिगृह्य ये पुत्रा वर्धितास्तेषु केवलं परिग्रहीत्रंशपिण्डविभागित्वमेव न साविण्ड्यमिति । तस्मादेव दत्तके न परिग्रहीतृसापिण्ड्यं किंतु जनककुल एव साप्तपौरुषं सापिण्ड्यमिति सिद्धम् ।

ननु तच्छब्देन संनिधानाद्वीप्सापेक्षितश्रुतबहुत्वानां पुत्राणामेव परामर्शो गम्यते न वर्धकानां पुत्रिणां व्यवहितत्वात्, संदिग्धबहुत्वानां वीप्सान्वयायो-ग्यत्वात्, आत्मनि परोक्षवन्निर्देशकतच्छब्दान्वयानुपपत्तेरपरोक्षनिर्देशकस्व-शब्दस्यैवौचित्याच्चेति चेन्मैवं वादीः । तदादिसर्वनाम्नां बुद्धिस्थे शक्तिरिति

---

र्थमित्यर्थः । जनकगोत्रापेक्षया तत्तद्भिन्नमिति यावत् । गोत्रं यस्य तादृशेनापि प्रतिग्राहकेण पुत्रवत् पुत्रप्रतिनिधित्वेन परिगृह्य ये पुत्रा लालनपालनादिना परिपो-षितास्तेषु केवलमेकं प्रतिग्रहीतृपितृरिक्थांशपिण्डभागित्वमेव न सापिण्ड्यमिति । तस्मा-द्दत्तकपुत्रे नैव शरीरान्वयरूपं प्रतिग्रहीतृनिरूपितं सापिण्ड्यमपि तु जनकपितृनिरूपि-तमेव सप्तपुरुषपर्यन्तं तादृशं सापिण्ड्यमिति सिध्यतीत्यर्थः ।

निरुक्तदेवलवचने तत्तद्गोत्रेणेत्यत्रत्यतच्छब्दविषये शङ्कते—**नन्विति** । तच्छब्देन पुत्राणामेव परामर्शो न्याय्यः । पुत्रास्तत्तद्गोत्रेणेति तेषामेव संनिधानस्य श्रवणात् तत्तदिति वीप्साया उपपादकं यद्बहुत्वं तस्य पुत्रा इति पुत्रगतत्वेन श्रवणाच्च तदन्वयस्य सुगमतया पुत्राणां तत्तद्गोत्रेणेत्येवान्वय उचितः । नतु वर्धकानां पाल-कानां परामर्शो न्याय्यः । तेषां, केन वर्धिता इति कर्तृगकाङ्क्षायां वर्धकेन, इत्यध्याहारादध्याहृतस्य च कर्तुः 'आदौ कर्तृपदं वाच्यम्' इत्यन्वयनियमा-द्वर्धिता इत्यस्मात्प्राक् प्रयोक्तव्यत्वेन व्यवहितत्वात्सुदूरत्वाद्वीप्सया स्वोपपत्त्यर्थमपेक्षितं यद्बहुत्वं तस्य वर्धकैरिति साक्षाद्वर्धकपितृगतत्वेनाश्रवणादध्याहारस्याऽऽकाङ्क्षितैकदे-शपूरणस्वरूपत्वात्कर्त्राकाङ्क्षाया वर्धकेनेत्येकवचनान्तनिर्देशेनापि पूरयितुं शक्य-त्वात्संदिग्धं संशयास्पदं बहुत्वं येषां तेषां वर्धकानां वीप्सयाऽन्वेतुमयोग्यत्वादात्मनि स्वस्वरूपविषय आत्मस्वरूप उपस्थित इति यावत् । प्रत्यक्षवन्निर्देशकेन स्वीय-प्रत्यक्षत्वद्योतकेन स्वशब्देन 'स्वस्वगोत्रेण' वर्धकगोत्रेणेत्यर्थः । इत्येवं निर्देश उचितत्वात्कर्तव्ये सति परोक्षत्वद्योतकेन 'तत्तद्गोत्रेण' इत्येवं तच्छब्देन निर्दे-शकरणादपरोक्षाणां वर्धकानां परोक्षत्वद्योतकतच्छब्देनान्वयानुपपत्तेश्च न 'वर्धकानां तत्तद्गोत्रेण' इत्येवमन्वयः समञ्जस इत्याशङ्क्य तद्दूषयति—**मैवमिति** । शब्द-शक्तिस्वभावात्सर्वनामसंज्ञकशब्दानां बुद्धिस्थपरामर्शकत्वनियमेन बुद्धिस्थत्वस्य च वर्ण्य-मानानामनेकार्थानां मध्ये प्रधानस्यैव बुद्ध्यारूढत्वेनानुभवात्प्राधान्याधीनत्वेन

न्यायेन बुद्धिस्थतायाः प्राधान्यायत्तत्वात्प्राधान्यस्य च संस्कार्यत्वेन फलान्वयेन वा संभवात्

पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया '

इत्यादिवचनपर्यालोचनया पुत्रकर्तृकपिण्डदानादिक्रियया पितुः संस्कार्यत्वावगमात् । पुत्रेण लोकाञ्जयतीत्यादिवचनबलात्पितुरेव पुत्रकरणकभावनाभाव्यलोकरूपफलयोगितया प्राधान्यात्तच्छब्देन परामर्शो युज्यते । यथा तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेत्यत्राऽऽमिक्षायाः संसृष्टदधिपयोरूपत्वेन सांनाय्य-

---

प्राधान्यस्य च संस्काराश्रयत्वेन फलान्वयित्वेन वा वक्तुं शक्यत्वेन ' पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ' इति वचनार्थपर्यालोचनेन पुत्रकर्तृकपिण्डदानादिक्रियया-पुत्रेण कृताऽनुष्ठिता या पिण्डदानादिक्रिया तया पितुरेवाऽऽत्मनि कश्चिदतिशयो जायत इति हेतोः पितुः संस्कार्यत्वावगमेन ' पुत्रेण लोकाञ्जयति ' ( म० स्मृ० ९ । १३७ ) इत्यादिवचनस्य ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इत्यादिर्ज्योतिष्टोमेन स्वर्गं भावयेदित्यादिवत्पुत्रेण लोकान्भावयेदित्यर्थपर्यवसानात्पुत्रः करणं यस्यास्तादृश्या भावनया भाव्याः संपाद्या ये लोकास्तद्रूपफलेन पितुरेव संबन्धाच्च पितुः प्राधान्येन तच्छब्देन तत्परामर्श उपपद्यते । एतदेव दृष्टान्तेन द्रढयितुं तत्रत्यौ पूर्वपक्षसिद्धान्तौ प्रदर्शयति—**यथा तप्त इति**। **सेति** । ' उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम तदन्यतरलिङ्गभाक् ' इति न्यायेन, अत्रोद्देश्यं संसृष्टे दधिपयसी, प्रतिनिर्देश्यं ह्यामिक्षा, अनयोर्द्वयोरैक्यद्योतकस्य सर्वनाम्नस्तच्छब्दस्य प्रतिनिर्देश्यामिक्षागतलिङ्गभाक्त्वेन सेति स्त्रीलिङ्गनिर्देशः । आमिक्षायाश्च मिश्रितदधिपयोरूपत्वेन सांनाय्यविकारत्वं प्राप्तम् । सानाय्यं च सम्यङ्नीयते होमार्थमग्निं प्रतीति संसृष्टं दधि पयश्चोच्यते । तदुक्तम्—' आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ' ( जै० सू० ८ । २ । १९ ) इति । आमिक्षा द्रव्यं दधिपयसोरुभयोर्विकारः स्यात्पयोदध्युभयजन्यत्वादिति तदर्थः । तथा चाऽऽमिक्षायाः सांनाय्यविकारत्वे प्राप्ते पूर्वपक्षिणा पयसि दध्यानयतीति वाक्ये पयसीति सप्तमीश्रवणेन पयसो दध्याधारत्वेन गुणत्वाद्दध्नश्चाऽऽनयनक्रियाजन्यफलाश्रयत्वेनोद्देश्यत्वात्प्राधान्येन सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वस्वाभाव्यात्सेति तच्छब्देन प्रधानस्य दध्न एव परामर्शस्तस्यैव च विश्वेदेवसंबन्धादामिक्षायाः पयउपसर्जनकदधिविकारत्वेन सायंदोहविकारत्वमित्युक्तम् । ततः सिद्धान्ती ब्रूते—दध्यानयतीति यद्दध्यानीयते तत्पयसः संस्कारद्वारेणाऽऽमिक्षामुत्पादयितुं तत्सहकारित्वेनाऽऽनीयते । लोकेऽपि हि पयसः संस्कारद्वारेण घनीभावार्थं दध्याद्यातञ्चनं क्रियते । तथा च

विकारत्वे स्थिते पूर्वपक्षिणा सप्तमीनिर्दिष्टस्य पयसो गुणत्वेन द्वितीयानिर्दिष्टस्य दध्नः प्रधानत्वात्तस्यैव तच्छब्देन परामृष्टस्य देवतासंबन्धात्सायंदोहविकारत्व-मित्युक्ते सिद्धान्तिना कर्मीभूतेनापि दध्ना पयसो व्याप्यमानत्वेन दध्ना पयः संस्कुर्यादिति वाक्यार्थपर्यवसानेन पयस एव प्रधानत्वं तस्यैव तच्छब्देन परा-मृष्टस्य देवतासंबन्ध इति प्रातर्दोहविकारत्वं साधितम्। तद्वत्प्रकृतेऽपि पितुः संस्कार्यत्वेन प्रधानत्वात्तच्छब्देन तस्यैव परामर्श इति युक्तम्।

नन्वेवं दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्याभावे कथं विवाहो न स्यादिति चेत्। सत्यम्। सगोत्रत्वादिति ब्रूमः। तर्हि तद्भगिन्यादिसंततौ विवाहोऽस्तु,

---

तण्डुलान्पचतीत्यादौ यथा फूत्कारादिव्यापारजन्यफलेन विक्लित्त्या यः संबन्धस्तदु-द्देश्यत्वेन विक्लित्त्याख्यफलेन तण्डुलान्संस्करोतीत्येवं वाक्यार्थात्तण्डुलानां प्राधान्यमव-गम्यते, तद्वत्प्रकृतेऽप्यानयनक्रियाकर्मीभूतेनापि दध्ना यः संबन्धस्तदुद्देश्यत्वेन दध्या-नयनेन पयः संस्कुर्यादित्यर्थपरत्वेन 'तप्ते पयसि दध्यानयति' इति वाक्यस्य पर्य-न्तेऽवस्थितत्वेन पयस एव प्राधान्यं भवतीति तस्यैव 'सा वैश्वदेवी' इति तच्छ-ब्देन परामर्शो विश्वदेवदेवतासंबन्धश्चेति कृत्वाऽऽमिक्षायाः प्रातर्दोहविकारत्वं सिध्य-तीति। अत एव जैमिनिना 'पयो वा तत्प्रधानत्वाल्लोकवद्दध्नस्तदर्थत्वात्' (जै० सू० ८।२।२२) इत्यामिक्षायां पयोधर्मातिदेश उक्तः संगच्छते। पयः पयोधर्मः स्यात्। आमिक्षायामिति शेषः। तत्प्रधानत्वात्पयसः प्राधान्यात्। **लोकवत्**—लोके पयसः संस्कारद्वारेण घनीभावार्थमातञ्चनं क्रियते तद्वद्दधिनिक्षेपस्य तदर्थत्वात्पयसो घनीभावार्थ-त्वादिति तदर्थात्। एवं प्रकृतस्थले 'पितुः पुत्रेण कर्तव्या०' इत्यादेः, पिण्डदानादिक्रियया पितरं संस्कुर्यादित्यर्थपर्यवसानात्पितुः संस्कार्यत्वेन प्राधान्यावग-मात्तत्तद्गोत्रेणेति तच्छब्देन पितुः परामर्शो योग्य एवेत्याशयः।

उक्तरीत्या दत्तकस्य पालककुले सर्वथा सापिण्ड्याभावे तत्कुलीयकन्याभिः सह विवाहः प्रसज्येतेत्याशङ्क्य समाधत्ते--**सगोत्रत्वादिति**। अयं भावः—अस-पिण्डा च या मातुरसगोत्रा च या पितुः। (म० स्मृ० ३।५) या पितुः सगोत्रा न भवति तादृशी कन्या परिणेयेति मनुनोक्तत्वात्तादृशकन्यायां स्वनि-रूपितसापिण्ड्याभावेऽपि स्वपालकपितृनिरूपितसगोत्रत्वस्य विद्यमानत्वेन पालकपितृ-गोत्रजाभिः कन्याभिः सह दत्तकस्य विवाहो न भवतीत्यर्थः। अत्र स्वपदं बुद्धिस्थदत्तकप-रामर्शकम्। असपिण्डा च या मातुः (म० स्मृ० ३।५) प्रसङ्गादस्य मनुवचनस्य यथामति व्याख्यानं क्रियते। मद्वर्णित एवार्थः प्रामाणिक इति न मन्तव्यम्। जिज्ञा-सार्थं लिखित इत्यत्र यत्स्खलितं तदावेदनेनानुग्राह्योऽयं जिज्ञासुरित्यभ्यर्थये। वोढ-

व्यया कन्यया कीदृश्या भाव्यमित्याकाङ्क्षायामाह—असपिण्डा चेत्यादि । अत्र मातृनिरूपितसपिण्डानिषेधकेऽस्मिन्मातृपदं गौणमातृपरं पालकमातृपरमिति यावत् । सोऽयं पालकमातृनिरूपितसपिण्डानिषेधो यन्निरूपितं पालकमातृत्वं तं प्रत्येवेति प्रत्यासत्त्या लभ्यते । तेन पालकमातुर्या सपिण्डा न भवति तादृशी कन्या दत्तकेन परिणेयेत्यर्थात्स्वपालकमातामहकुलजा कन्या स्वस्यासपिण्डाऽपि स्वपालकमातुः सपिण्डेति त्त्वस्य भार्या न भवति । अत्र स्वपदं बुद्धिस्थदत्तकपुत्ररूपपरिणेतृपरामर्शकम् । दत्तकमीमांसाकारमतेऽवयवसापिण्ड्यस्यैव सत्त्वेन दत्तकस्य पालकपितृकुले तादृशसापिण्ड्यस्य सुतरामसंभवेनार्थात्पालकमातामहकुलेऽपि तत्सापिण्ड्याभावात्तादृशमातामहकुलजा कन्या परिणेयेत्यापद्येत । तन्निवृत्त्यर्थं 'असपिण्डा च या मातुः' इत्युक्तम् ।

नन्वेवं जनकमातामहकुलजा कन्या दत्तकस्य भार्या स्यात्, तस्याः स्वजनकमातृनिरूपितसपिण्डत्वेऽपि निषेधो न स्यात् । अत्र मातृपदेन पालकमातुर्ग्रहणात् । अथैतद्दोषपरिहारार्थं मातृपदेन मुख्यत्वाज्जननी माता गृह्येत तदा जनकमातुर्या सपिण्डा न भवति तादृशी कन्या परिणेया । परिणेता च दत्तकोऽस्त्वदत्तको ( औरसो ) वा भवत्वित्यर्थः स्यात् । तेन भारद्वाजगोत्रोद्भवयोश्चैत्रमैत्रयोर्मध्ये मैत्रोऽत्रिगोत्रे दत्तकत्वेन गतः । तयोर्जनकमातामहः काश्यपगोत्रो विष्णुः । तादृशमातामहकुलजा कन्या दत्तकादत्तकयोर्मैत्रचैत्रयोरुभयोरपि भार्या न भवेत् । तस्याश्चैत्रमैत्रजनकमातुः सपिण्डत्वात् । परंतु पालकमातामहकुलजा कन्या दत्तकस्य भार्या भवेत । तस्याः पालकमातुः सपिण्डत्वेऽपि निषेधो न स्यात् । मातृपदेन मुख्यत्वाज्जनन्या मातुर्ग्रहणात् । तथा चोभयतस्पाशा रज्जुः संप्राप्नोति । न च मातृपदे युगपदभिधावृत्तिलक्षणावृत्त्योः स्वीकारेण नोभयतस्पाशा रज्जुरिति वाच्यम् । गङ्गायां मीनघोषौ स्त इति वाक्ये मीनपदं गङ्गाशब्दस्याभिधावृत्तौ तात्पर्यग्राहकं घोषपदं च लक्षणावृत्तौ तात्पर्यग्राहकमस्तीति गङ्गापदे युगपन्मुख्यगौणवृत्तिद्वयमङ्गी क्रियते तद्वत्प्रकृतस्थले मातृपदे युगपद्वृत्तिद्वयाङ्गीकारे प्रमाणाभावात् । किंच या स्वजनन्या मातुः सपिण्डा भवति सा स्वस्यापि सपिण्डा भवत्येवेति 'असपिण्डा च याऽऽत्मनः' इत्येव वक्तव्ये यन्मातुरित्युच्यते तेन मातृपदेन गौणमातुर्ग्रहणं विज्ञायते । तथा च गौणमातुर्ग्रहणे जनकमातामहकुलजा कन्या सपिण्डाऽपि दत्तकौरसयोर्भार्या स्यात् । मातृग्रहणेन पालकमातुर्ग्रहणान्निषेधाप्रवृत्तेरिति चेन्न । 'असपिण्डा च' इति चकारेण 'असगोत्रा च या पितुः' इत्यग्रिमवाक्यस्थासगोत्रापदमपकृष्य या मातुः सगोत्रा न भवति तादृशी कन्या परिणेयेति व्याख्येयम् । अत्र मातृपदं मुख्यमातृपरं जननीपरमिति यावत् । तेन जनकमातामहकुलजा कन्या दत्तकौरसयोर्भार्या न भवति ।

नन्विदं मातामहगोत्रपरिपालनं बह्वृचादिभिर्न क्रियते तदाह स्मृतितत्त्वे नारदः—आ सप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः । अविवाह्या सगोत्रा च समानप्रवरा तथा ॥ इति मातृबन्धूनां मध्ये पञ्चमपर्यन्तमविवाह्यत्वं प्रतिपादयता नारदेन मातृतः पञ्चमादूर्ध्वं विवाह्यत्वस्य सूचनात । किंतु माध्यंदिनैरेव मातामहगोत्रं परिपाल्यते । तत्रापि मातृवंशपरम्पराजन्मनाम्नोः प्रत्यभिज्ञाने सत्येव मातामहगोत्रं परिपालनीयम् । जन्मनाम्नोरविज्ञाने तु मातामहगोत्रीयाऽपि विवाह्यैव । तदुक्तम्—सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञान उद्वहेदविशङ्कितः । इति व्यासवचनात् । तेषां तथैवाऽऽचारदर्शनात् । तथा च माध्यंदिनानां मातामहगोत्रजा कन्या ' असगोत्रा च या मातुः ' इति वचनादविवाह्या भवतु नाम । परंतु बह्वृचादीनां मातृतः पञ्चमपर्यन्तं कथमविवाह्यत्वं शास्त्रीयं भवेत् । न च तत्र ' असपिण्डा च या मातुः ' इति निषेधः स्यादिति वाच्यम् । मातृपदेन पालकमातुस्तत्र ग्रहणस्योक्तत्वात् । किंच ' असपिण्डा च या मातुः ' इत्यत्र मातृपदेन मुख्यमातुर्ग्रहणे जनकमातामहकुले पञ्चमीपर्यन्तायाः कन्याया अविवाह्यत्वे सिद्धेऽपि पालकमातामहकुलीयकन्याया निषेधो न स्यात् । न च पालकमातामहकुलीयकन्यायां ' असगोत्रा च या मातुः ' इति निषेधः स्यादिति वाच्यम् । ' असगोत्रा च या मातुः ' इत्यत्र मातृपदेन मुख्यमातुर्ग्रहणात् । गौणमातुर्ग्रहणे हि पालकमातामहगोत्रपरिपालनमनिष्टमापद्येत । वाजसनेयिष्वपि पालकमातामहगोत्रपरिपालनाचारस्यादर्शनात् । तथा च ' असगोत्रा च या मातुः ' इत्यत्र मातुर्मुख्याया एव ग्रहणमुचितम् । किंतु ' असपिण्डा च या मातुः ' इत्यत्र मातृपदं गौणमुख्यमात्रोरुपलक्षणमित्यनायत्या स्वीकार्यं भवति । तेन जनकमातामहकुले पालकमातामहकुले चोभयविधमातुः सपिण्डा कन्या दत्तकस्याविवाह्या भवतीति सिद्धम् ।

तथा पितृनिरूपितसगोत्रानिषेधके ' असगोत्रा च या पितुः ' इत्यत्र पितृपदं न पालकपितृपरं किंतु जनकपितृपरम् । तत्रैव पितृशब्दस्य मुख्यत्वात् । मुख्यवृत्तिपरित्यागेन जघन्यवृत्तिसमाश्रयणे प्रमाणाभावाच्च । सोऽयं जनकपितृनिरूपितसगोत्रानिषेधश्च यन्निरूपितं यस्य जनकपितृत्वं तादृशपितुः प्रतिसंबन्धिनमौरसपुत्रं प्रत्येवेति प्रत्यासत्त्या लभ्यते । तेन या जनकपितुः सगोत्रा न भवति तादृशी कन्या मुख्यपुत्रेण परिणेयेत्यर्थस्य संपन्नत्वात्स्वजनकपितृगोत्रजा कन्या स्वस्य भार्या न भवति । ननु तादृशकन्याया यथा स्वजनकपितृनिरूपितं सगोत्रत्वं भवति तद्वत्स्वनिरूपितमपि सगोत्रत्वमस्त्येव । तथा च ' या स्वनिरूपितसगोत्रा न भवति ' इत्यर्थके ' असगोत्रा च याऽऽत्मनः ' इत्येव वक्तव्ये ' असगोत्रा च या पितुः ' इत्ये-

तादृशं किमर्थमुक्तमिति चेद् भ्रान्तोऽसि । तथा हि-भारद्वाजगोत्रोद्भवौ विष्णोः पुत्रौ चैत्रमैत्रौ सोदरौ स्तः । तयोर्मध्ये मैत्रोऽत्रिगोत्रं दत्तकत्वेन गतः । तत्र तत्पितृगोत्रभारद्वाजगोत्रोद्भवायाः कन्यायाः पितृवच्चैत्रनिरूपितसगोत्रत्वे विद्यमानेऽपि मैत्रनिरूपितं सगोत्रत्वं नास्ति । मैत्रस्य केवलदत्तकत्वात् । केवलदत्तकत्वं नाम जातमात्रं पुत्रं परिगृह्य प्रतिग्रहीत्रा जातकर्माद्यखिलसंस्कारैश्चूडादिसंस्कारैर्वा संस्कृतत्वम् । केवलदत्तकस्य च 'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः' ( म० स्मृ० ९ । १४२ ) 'गोत्रं तत्पालकस्य च' इति वचनाभ्यां जनकपितृगोत्रनिषेधपूर्वकं प्रतिग्रहीतृगोत्रसंबन्धाभिधानात् । तथा च भारद्वाजीयायाः कन्यायाः स्वनिरूपितसगोत्रत्वेन 'असगोत्रा च याऽऽत्मनः' इत्युक्त्या चैत्रं प्रति निषेधे सिद्धेऽपि मैत्रं प्रति निषेधो न स्यात् । तादृशकन्याया मैत्रनिरूपितसगोत्रत्वाभावात् । ततश्च केवलदत्तकस्य स्वजनकपितृगोत्रीया कन्या विवाह्या स्यादित्यनिष्टमापद्येत । पितुरित्युक्तौ तु स्वस्यासगोत्रत्वेऽपि तस्याः स्वजनकपितुः सगोत्रत्वान्नानिष्टप्रसङ्गः । एवं च दत्तकौरसयोरुभयोरपि स्वजनकपितृगोत्रोद्भवा कन्या भार्या न भवति । नन्वेवं केवलदत्तकस्य जनकपितृगोत्रजायाः कन्याया व्यावृत्तावपि पालकपितृगोत्रजा कन्या भार्या स्यात् । सगोत्रत्वेऽपि तस्यां 'असगोत्रा च या पितुः' इति निषेधाप्रवृत्तेः । अत्र पितृपदेन मुख्यत्वाज्जनकपितुरेव ग्रहणमित्युक्तत्वात् । एतद्दोषपरिहारार्थं यदि चात्र लक्षणया गौणः पालकपिता गृह्येत तदा जनकपितृगोत्रजा कन्या केवलदत्तकस्य भार्या स्यादित्यापद्येत । तस्या जनकपितृसगोत्रत्वेऽपि निषेधो न स्यात् । पितृपदेन पालकपितुरेव गृहीतत्वात् । तथा चोभयतस्पाशा रज्जुः संप्राप्नोति । न च पितृपदे युगपदभिधावृत्तिलक्षणावृत्त्योः स्वीकारेणोभयविधपित्रोर्ग्रहणान्नोभयतस्पाशा रज्जुरिति वाच्यम् । यथा 'गङ्गायां मीनघोषौ स्तः' इत्यत्र मीनपदं गङ्गाशब्दस्याभिधावृत्तौ तात्पर्यग्राहकं घोषपदं च लक्षणावृत्तौ तात्पर्यग्राहकमस्तीति गङ्गापदे युगपद्वृत्तिद्वयं स्वी क्रियते तद्वत्प्रकृतस्थले पितृपदे युगपद् वृत्तिद्वयस्वीकारे प्रमाणाभावात् । तथा च मुख्यपितृग्रहणे केवलदत्तकस्य पालकपितृगोत्रजा कन्या भार्या स्यादित्यनिष्टं प्रसज्येतेति चेन्न । एतद्दोषपरिहारार्थं 'असगोत्रा च' इति चकारेण 'असपिण्डा च या मातुः' इति पूर्ववाक्यस्थमसपिण्डापदमनुकृष्य 'या पितुः सपिण्डा न भवति तादृशी कन्या परिणेया' इति व्याख्येयम् । अत्र पितृपदं गौणपितृपरं पालकपितृपरमिति यावत् । तेन पालकपितृवंशजा कन्या स्वस्यासपिण्डाऽपि स्वपालकपितुः सपिण्डेति केवलदत्तकस्य न भार्या भवितुमर्हति । यद्यत्र पितृपदेन मुख्यत्वाज्जनकपितैव गृह्येत तर्हि या जनकपितुः सपिण्डा न

सगोत्रत्वसपिण्डत्वयोरभावात् । न चाऽऽहत्य निषेधकं वचनमुपलभामहे । प्रत्युत

सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ।
तद्गोत्रे तत्कुले चापि विवाहो नैव दोषकृत् ॥

---

भवति तादृशी कन्या वरेण परिणेया । परिणेता च दत्तको वा भवत्वदत्तको ( औरसो ) वा भवत्वित्यर्थः स्यात् । तथा च पालकपितृवंशजा कन्या पालकपितुः सपिण्डाऽपि न दत्तकस्य निषिद्धा स्यात् । पितृपदेन मुख्यस्यैव पितुर्गृहीतत्वात् । किंतु जनकपितृवंशजैव कन्या जनकपितुः सपिण्डत्वान्निषिद्धा स्यात् ।

ननु जनकपितृवंशजा कन्या यथा जनकपितुः सपिण्डा भवति तथा दत्तकादत्तकपुत्रयोरपि सपिण्डा भवति । दत्तकस्यापि जनकपितृकुले सापिण्ड्यस्य सप्तपुरुषावधेरुक्तत्वात् । ततश्च ' असपिण्डा च या पितुः ' इत्यत्र पितुरित्यनुक्त्वा तत्स्थान आत्मशब्दप्रयोगेण ' असपिण्डा च याऽऽत्मनः ' इत्येव वक्तव्ये सति यत्पितुरित्युच्यते तव्द्यर्थम् । तत्सामर्थ्यादत्र वाक्ये गौणः पिता गृह्यत इति पितृशब्दप्रयोग एव पालकपितृग्रहणे प्रमाणम् । एवं च पितृपक्षेऽपि सपिण्डानिषेधः सगोत्रानिषेधश्चेति निषेधद्वयमप्यावश्यकमेवेति बोध्यम् ।

नन्वेवं दत्तकस्य प्रतिग्रहीतृपितृगोत्रोद्भवया कन्यया विवाहो मा भून्नाम, किंतु पालकपितुर्या भगिनी तस्याः संतत्या स्त्र्यपत्येन सह दत्तकस्य विवाहः स्यादेव । पालकपितृभगिन्या दत्तकेन सह सगोत्रत्वसपिण्डत्वयोः सुतरामभावात् । ' स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ' ' एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ' इति स्त्रियाः स्वगोत्रभ्रंशपूर्वकभर्त्रेकगोत्रत्वनियमाद्दत्तकस्य पालककुले सापिण्ड्याभावस्योक्तत्वाच्च । न च तादृशविवाहनिषेधकं स्पष्टं वचनमुपलभ्यते । नैतावदेव । प्रत्युत तादृशविवाहानुकूलमेव वचनं संदृश्यत इत्याह—**सावित्रीमिति** । यः पुरुषः प्रतिग्रहीता चैत्रादिर्यस्य प्रतिगृहीतस्य मैत्रादेर्दत्तकस्येति यावत् । सावित्रीं गायत्रीमन्त्रं ब्रूयादुपदिशेत्स तस्य कन्यां न परिणयेत् । अत्र प्रथमान्ततच्छब्देन षष्ठ्यन्तयच्छब्दप्रतिपाद्यस्य परामर्शः षष्ठ्यन्ततच्छब्देन च प्रथमान्तयच्छब्दप्रतिपाद्यस्य परामर्श इति बोध्यम् । परंतु तद्गोत्रे गायत्र्या उपदेष्टुर्गोत्रे सपिण्डसोदकादिसाधारणे, तथा तत्कुले प्रतिग्रहीतुर्दौहित्रादिरूपे कुले दत्तकस्य विवाहो नैव दोषावह इति तदर्थादित्यर्थः । प्रतिग्रहीतुर्दत्तकपुत्रनिरूपितपितृत्वसत्त्वेन दत्तकं प्रति गायत्र्युपदेशाधिकारप्राप्तेर्दत्तकस्य तादृशविवाहेऽनुकूलमेवेदं वचनमित्याशयः । दौहित्रादीत्यादिशब्देन भागिनेयसंग्रहः । न चैवं दत्तकस्य प्रतिग्रहीतृपितृभगिनीदुहितृसंतत्या सह विवाह इष्ट एवेति वाच्यम् ।

इत्याद्यनुकूलमेव वचनमस्ति । न चेष्टापत्तिः । अविच्छिन्नाविगीतसकल-देशीयशिष्टाचारविरोधात् । तस्मात्किं तत्राविवाहनिमित्तमिति । अत्र केश्चि-दुच्यते—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

इत्यत्र मनुवाक्ये स्वस्यासपिण्डेति वक्तव्ये यत्पितुरसपिण्डेति वचनं तद्दत्त-कस्य प्रतिग्रहीतृसपिण्डया विवाहो मा प्रसाङ्क्षीदित्येवमर्थम् । अन्यथा पितृ-

---

तादृशविवाहानिष्टत्वे हेतुमाह-**अविच्छिन्नेत्यादि**। अविच्छिन्नोऽखण्डितः । अविगीतो लोकतः शास्त्रतो वाऽनिन्दितः । यः सकलदेशवर्तिनां शिष्टानामाचार उपर्युक्तवि-वाहाकरणरूप आचारस्तद्विरोधादित्यर्थः । तथा च तादृशविवाहाभावे किं कारणमिति चेत्पृच्छसि तत्रैवमाहुः केचित्—**असपिण्डा चेति** ( म० स्मृ० ३ । ५ )। **दारकर्मणीति** । भार्यात्वोत्पादकविधाविति तदर्थः । **मैथुन इति** । स्त्रीपुंसरूप-मिथुनसाध्याग्न्याधानपुत्रोत्पत्त्यादौ कर्मणीति तदर्थः । प्रशस्तेत्यस्य कर्तव्येत्यर्थः । प्रशस्तेत्यस्य प्रशंसार्थकत्वे गृहीते सति या मातुः सपिण्डा न भवति पितुश्च या सगोत्रा न भवति तादृशी कन्या प्रशस्ता, अर्थात्सपिण्डा सगोत्रा च प्रशस्ता नेत्येव, नत्वविवाह्येत्यर्थः स्यात् । तथा च सपिण्डाया सगोत्रायाश्च विवाहे भार्यात्वोत्पत्त्यापत्तेः । तच्चायुक्तम् । सपिण्डाया सगोत्रायाश्च विवाहे तत्र भार्यात्वा-नुत्पत्तेर्व्यवस्थापितत्वात् । तस्मात्प्रशस्तेत्यस्य कार्या—विवाह्येत्येवंपरतया व्याख्या-नमवश्यमङ्गीकार्यमिति भावः । असपिण्डा चेति मनुवाक्ये 'असगोत्रा च या पितुः' इत्यत्रत्यचकारेणासपिण्डापदमनुकृष्य संपादितस्य 'असपिण्डा च या पितुः' इत्यस्य स्थाने वरनिरूपितसापिण्ड्यरहितामित्यर्थकं 'असपिण्डा च याऽऽत्मनः' इति वक्तव्यम् । तथोक्ते केवलदत्तकस्य जनकगोत्रसंबन्धाभावेनासगोत्रत्वेऽपि जन-ककुलेऽवयवान्वयरूपसापिण्ड्यस्य सप्तपुरुषावधेः सत्त्वेन जनकगोत्रोद्भवया कन्यया सह दत्तकस्य विवाहनिषेधे सिद्धे सति यत् 'असपिण्डा च या पितुः' इति पितुर्या सपिण्डा न भवतीत्युच्यते तद्दत्तकस्य प्रतिग्रहीतृपितुर्या सपिण्डा कन्या तया विवाहो मा प्रसजत्वित्येतदर्थमुक्तमिति । एवं च 'असपिण्डा च या पितुः' इत्यत्र पितृशब्दो गौणपितृपर एवेति दत्तकविषयत्वमेवास्येति भावः । नतु साक्षाज्जनकपर इति नास्यौरसविषयत्वमिति भावः । **अन्यथेति** । उक्तवैपरीत्ये 'असपिण्डा च या पितुः' इत्यत्रत्यपितृशब्दस्य साक्षाज्जनकपितृपरत्वे सतीत्यर्थः । पितृशब्दस्य साक्षाज्जनकपितृपरत्वं दूषयितुमाह—**पितृद्वारक इत्यादि** । पितृद्वार-

द्वारके साविण्ड्ये मूलपुरुषादष्टमस्य वरस्य मातृद्वारके साविण्ड्ये मूलपुरुषात्षष्ठ्याः कन्याया विवाहो न स्यात्। पितुः सपिण्डत्वेनासपिण्डताभावात्। नचेष्टापत्तिः।

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा,

इत्यादिसकलस्मृतिनिबन्धशिष्टाचारविरोधात्। न चेदं दूषणं दत्तकेऽपि समानम्। अष्टमस्य तस्य षष्ठ्याः कन्यायाः पितुः साविण्ड्येनाविवाह्यत्वप्रसङ्गादिति वाच्यम्।

'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते'

इति वक्ष्यमाणवाक्येन सप्तमस्य दत्तकपितुर्मूलपुरुषासपिण्डत्वेन षष्ठ्याः कन्यायास्तदसापिण्ड्येन षष्ठ्याः सप्तमस्य च पितुः सपिण्डत्वाभावादित्युक्तमेव।

---

कसापिण्ड्ये पितरमादाय गणने सप्तमे मूलपुरुषे सतीत्यर्थः। **मूलपुरुषादष्टमस्य वरस्येति**। मूलपुरुषात्सप्तमं पितरमपेक्ष्याधस्तनस्य वरस्याष्टमत्वादित्यर्थः। मातृद्वारकसापिण्ड्ये च मातरमादाय गणनायामुपरिस्थे मूलपुरुषे पञ्चमे सति चेत्यर्थः। षष्ठ्याः कन्याया विवाहो न स्यात्। यथा विष्णुर्मूलभूतः। तस्य पुत्रश्चैत्रः। मैत्रः। बुधः। हरः। शिवः। भूपः। अच्युतः। अत्र सर्वत्र तस्येत्यनुवर्तते। तथा विष्णुर्मूलभूतः। दत्तः। सोमः। सुधीः। तत्कन्या नर्मदा। तत्कन्या श्यामा। अत्र पितृद्वारकसापिण्ड्ये मूलाद्विष्णोरष्टमोऽच्युतः। तथा मातृद्वारकसापिण्ड्ये मूलाद्विष्णोः षष्ठी श्यामा। अत्र 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति वचनाच्छामाया अच्युतनिरूपितसपिण्डत्वाभावेऽप्यच्युतपितृभूपनिरूपितसापिण्डत्वादसपिण्डताभावेन श्यामाच्युतयोरिष्टो विवाहो न स्यादित्यर्थः। तस्मादसपिण्डा च या पितुः, इत्यत्र पितृपदं गौणपितृपरमित्यवश्यं वक्तव्यमिति भावः। नन्वेवं पितृपदेन गौणपितृग्रहणेऽधुना यत्रमूलपुरुषादष्टमोऽच्युतो दत्तको वर्तते तस्याष्टमस्य दत्तकस्य मूलपुरुषात्षष्ठ्या कन्यया श्यामया सह विवाहो न स्यात्। दत्तकस्य प्रतिग्रहीतृकुले सर्वथा साविण्ड्याभावेन षष्ठी श्यामा दत्तकनिरूपितासपिण्डाऽपि दत्तकपितृभूपनिरूपितसपिण्डा भवत्येवेत्यसपिण्डताभावात्। ततश्चाष्टमस्य षष्ठ्या कन्यया साकमविवाहरूपं दूषणमौरसवद्दत्तकेऽपि तुल्यं प्रसज्यत इति वाच्यमिति चेन्नेत्याह—**सपिण्डता त्विति**। मूलपुरुषात्सप्तमे पुरुषे सपिण्डता निवर्तते, न तु सप्तमेऽतीतेऽष्टमे पुरुषे सा निवर्तते, इति तदर्थः। इदमेव दत्तकसापिण्ड्यनिर्णायकम्। दत्तकसापिण्ड्ये षट् पुरुषाः सपिण्डाः। सप्तमे साविण्ड्यनिवृत्तिः। औरससापिण्ड्ये तु सप्त पुरुषाः सपिण्डाः। अष्टमे साविण्ड्यनिवृत्तिरिति दत्तकौरसयोः साविण्ड्यभेदः। तथा च

तस्माद्दत्तकसापिण्ड्यनिर्णायकमिदमेव वचनमिति काऽनुपपत्तिः। तदतिभ्रान्त-प्रलपितम्। विकल्पासहत्वात्। तथा हि—किमिदं दत्तकस्यैव सापिण्ड्यनिर्णायकमुत दत्तकौरसयोरुभयोरिति। नाऽऽद्यः। द्वेधा ह्यस्य वचनस्य दत्तकविषयता संभवेत्। दत्तकप्रक्रमाद्वा दत्तकसापिण्ड्यनिर्णायकविशेषवचनैकवाक्यत्वाद्वा। न चेहोभयमप्यस्ति। अनुपलम्भात्। किंचास्य दत्तकपरत्वेऽन्त्यं पितृपदं गौण्या प्रतिग्रहीतृपितृपरं स्यात्। तच्चानिष्टम्। 'न विधौ परः शब्दार्थः' इति न्यायविरोधात्। नाप्यन्त्यः। पितृपदे युगपद्वृत्तिद्वयनिषेधात्। न च गङ्गायां मीनघोषावित्यत्रेव वृत्त्यन्तरतात्पर्यग्राहकं प्रमाणमस्ति। तस्मादौरसवि-

---

सप्तमस्य दत्तकपितुर्भूपस्य मूलपुरुषनिरूपितसापिण्डत्वाभावेन षष्ठ्याः कन्यायाः श्यामायाः सप्तमदत्तकपितृभूपनिरूपितसापिण्ड्याभावेन नाष्टमस्य दत्तकस्य षष्ठ्या साकमविवाहप्रसङ्ग इति भावः। तस्माद्दत्तकसापिण्ड्यनिर्णायकम् 'असपिण्डा च या मातुः' इत्यादिवचनमेवेति न काऽप्यनुपपत्तिरिति। तदतिभ्रान्तिविजृम्भितम्। कस्मात्? यतस्तद्वचनं विकल्पं न सहते तस्मात्। **तथा हीति**। विकल्पप्रदर्शनपूर्वकं तदसहत्वमुपपादयतीत्यर्थः। 'असपिण्डा च या मातुः' इत्यादिमनुवचनं किं दत्तकस्यैव सापिण्ड्यं निर्णयत्यथवा दत्तकौरसयोरुभयोरपि सापिण्ड्यं निश्चिनोति? **नाऽऽद्य इति**। दत्तकस्यैव सापिण्ड्यं निर्णयतीति प्रथमः कल्पो न संभवतीत्यर्थः। पूर्वोक्तमनुवचनस्य दत्तकप्रकरणानुरोधाद्दत्तकसापिण्ड्यप्रतिपादकविशेषवचनेन सहैकवाक्यत्वाद्वेति प्रकारद्वयेन दत्तकविषयतासंभवं प्रदर्श्य तदुभयमप्यत्र नास्तीति दत्तकस्यैव सापिण्ड्यं निर्णयतीति प्रथमकल्पात्यन्तासंभवं प्रदर्शयन्नाह—**द्वेधा ह्यस्येति**। **अनुपलम्भादिति**। नेदं वचनं दत्तकप्रकरणपठितं नापि दत्तकसापिण्ड्यप्रतिपादकविशेषवचनेनैकवाक्यतापन्नमित्यस्य वचनस्य दत्तकविषयता कथमपि नोपलभ्यत इति भावः। किंच यद्यस्य 'असपिण्डा च या मातुः' इत्यादिमनुवचनस्य दत्तकसापिण्ड्यप्रतिपादकत्वमिष्येत तदा 'असपिण्डा च या पितुः' इत्यत्रत्यः पितृशब्दो गौण्या वृत्त्या पालकपितृपरो ग्रहीतव्यः स्यात्। स च तथा ग्रहीतुं न शक्यः। **न विधौ परः शब्दार्थ इति**। विधिविषये शब्दे परो वाच्यार्थादन्यो लक्षणादिबोध्योऽर्थो न ग्रहीतव्य इति न विधाविति न्यायस्यार्थात्। तथा च यदि पितृशब्देन पालकपिता गृह्येत तर्हि न विधाविति विरोधः स्यादिति भावः।

**नाप्यन्त्य इति**। दत्तकौरसयोरुभयोरपि सापिण्ड्यप्रतिपादकमिदं वचनमिति द्वितीयः कल्पोऽपि न वक्तुं शक्य इत्यर्थः। गङ्गायां मीनघोषौ स्त इत्यत्र यथा मीनपदं गङ्गाशब्दस्याभिधावृत्तौ तात्पर्यग्राहकं घोषपदं च लक्षणावृत्तौ तात्पर्यग्राहकं

षयमेवेदं वचनम्। गर्भाधानादिप्रक्रमात्पञ्चमात्सप्तमादूर्ध्वमितिवचनान्तरैकवाक्यत्वाच्च। न चास्यौरसपरत्वे कूटस्थादष्टमस्य वरस्य षष्ठ्याः कन्याया असपिण्डात्वप्रसङ्गः। पितुरसपिण्डत्वाभावादित्युक्तमेव दूषणमिति वाच्यम्। तस्य पितुरिति पञ्चम्यां षष्ठीभ्रमनिबन्धनत्वेनादूषणत्वात्। अत एव योगीश्वरेण मातृतः पितृतस्तथेत्यत्र पञ्चमीत्वनिर्णायकतसिल्प्रयोग आदृतः। तत्रापि सार्वविभक्तिकत्वशङ्कायाम् 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति गौतमवाक्ये पञ्चम्या निर्णय इति न किंचित्समाधानमिति समाधानन्तरं वक्तव्यम्। तदपर आहुः—

---

प्रमाणं समस्तीति गङ्गापदे युगपद्वृत्तिद्वयं स्वी क्रियते तद्वत्प्रकृतस्थले युगपद्वृत्तिद्वयस्वीकारे यदि किंचित्प्रमाणमुपलभ्येत तदैवास्य वचनस्य युगपद्दत्तकौरसोभयविषयत्वं स्यात्। न चात्र पितृशब्दस्य गौणवृत्त्या पालकपितृपरत्वस्वीकारे किंचित्प्रमाणमुपलभ्यते। तस्मान्मुख्ययाऽभिधावृत्त्या जनकपितृपरत्वमेवेति नास्य वचनस्य दत्तकौरसोभयविषयत्वं वक्तुं शक्यम्। अपि तु 'ऋतुकालाभिगामी स्यात्' (म० स्मृ० ३। ४५) इति गर्भाधानादिप्रक्रमात् 'पञ्चमात्सप्तमाद्धीमान्' इत्यादिवचनान्तरेणैकवाक्यत्वाच्चौरसविषयमेवेदं 'असपिण्डा च या मातुः' इत्यादिवचनमिति ज्ञेयम्। न चास्य वचनस्यौरसविषयत्वे मूलपुरुषादष्टमस्य वरस्य षष्ठ्याः कन्यायाश्च मिथो विवाहो न स्यादिति दूषणमुक्तमेवेति वाच्यम्। असपिण्डा च येत्यत्र मातुः पितुरिति षष्ठ्यन्तामिति भ्रमाद्गृहीत्वा दूषणदानेनादूषणात्। अयं भावः—मातुः पितुरिति षष्ठीति न भ्रमितव्यम्। किंत्वियं पञ्चमी। अत एव 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' (या० स्मृ० १। ५३) इति याज्ञवल्क्येन पञ्चमीनिर्णायकस्तसिल्प्रत्यय उपात्तः। यदि मातृतः पितृत इत्यत्राऽऽशङ्केथा नायं पञ्चम्यास्तसिल् किंतु सार्वविभक्तिकस्तसिरिति तर्हि 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति गौतमवाक्ये निःसंदेहं पञ्चमीश्रवणात्तदेकवाक्यतया 'असपिण्डा च या मातुः' इत्यादिमनुवचने मातुः पितुरिति पञ्चम्येवेति निर्णेयम्। तथा चायमर्थः सिध्यति—पितुः सकाशादूर्ध्वं सप्तममूलपुरुषपर्यन्तं या वंशपरम्परा तदन्तर्गता सपिण्डा, तथा मातुः सकाशादूर्ध्वं पञ्चममूलपुरुषपर्यन्तं या वंशपरम्परा तदन्तर्गता सपिण्डा तादृशी न भवतीत्यसपिण्डा सा दारकर्मणि प्रशस्तेत्यर्थः। ननु पितुरसपिण्डा—पितृनिरूपितसापिण्ड्याभाववतीति। तथा च मूलपुरुषादष्टमो वरः षष्ठी च कन्याऽनयोः पितुर्मातुः सकाशात्सप्तमपञ्चममूलपुरुषपर्यन्तपरम्परानन्तर्गतत्वेनासपिण्डत्वाद्विवाहो भवत्येवेत्याचार्यन्ययोः पक्षयोर्न किंचित्समाधानमिति, समाधानान्तरमपर आहुः—

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ इति ।

अत्र वाक्ये क्षेत्रजादीनां पुत्रप्रतिनिधित्वाभिधानात् ' प्रतिनिधिस्तद्धर्मा स्यात् ' इति न्यायेन सकलौरसधर्मप्राप्त्या प्रतिग्रहीत्रादिपितृसपिण्डावर्जनं सेत्स्यतीति तत्र ' न सापिण्ड्यं विधीयते ' इत्यनेन निषिद्धस्य सापिण्ड्यस्यातिदेशासंभवेनाप्राप्त्या तद्वर्जनासंभवात् । एतेन पुत्रनाम्नौरसधर्मातिदेशात् प्रतिग्रहीत्रादिपितृसपिण्डावर्जनसिद्धिरित्यपास्तम् । ' न तौ पशौ करोति ' इतिवन्निषिद्धस्य सापिण्ड्यस्यातिदेशासंभवेन वर्जनासंभवात् । तस्मादनन्यगत्या वाचनिकमेव प्रतिग्रहीतृकुले सापिण्ड्यमभ्युपगन्तव्यमिति । तदुच्यते । द्विविधं हि सापिण्ड्यमवयवान्वयेन पिण्डान्वयेन चेति । तत्रावयवान्वयसापिण्ड्यस्य

---

**क्षेत्रजादीन् सुतानिति** ( म० स्मृ० ९ । १८० )। इति वचने मनुना क्षेत्रजादीनामेकादशानां पुत्राणां मुख्यपुत्रप्रतिनिधित्वोक्तेः ' प्रतिनिधिश्च तद्धर्मा स्यात् ' तस्य मुख्यपुत्रस्य धर्मा इव धर्मा यस्येति व्युत्पत्तेः सकलौरसधर्माणां क्षेत्रजादिष्वतिदेशात्प्राप्तौ सत्यां यथौरसस्य स्वजनकपित्रादिसापिण्ड्यवर्जनं तद्वद्दत्तकस्य स्वप्रतिग्रहीत्रादिपितृसापिण्ड्यवर्जनं भविष्यतीति । तदेतद्दूषयति—**तत्रेत्यादि** । सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥ इति वृद्धगौतमेन निषिद्धस्य सापिण्ड्यस्यातिदेशासंभवेन प्रतिग्रहीतृपितृसपिण्डावर्जनस्य सुतरामसंभवादिति भावः । क्षेत्रजादीनां पुत्रशब्देन व्यवहारात्पुत्रशब्दस्य चौरसे मुख्यत्वात्क्षेत्रजादिष्वेकादशस्वौरसधर्माणामारोपाद्दत्तकस्यौरसवत्प्रतिग्रहीत्रादिपितृसपिण्डावर्जनं सिध्यतीति ये केचनाऽऽहुस्तत्पूर्वोक्तापरमतनिरसनप्रकारेणैव निरस्तम् । निषिद्धस्य विधानासंभवं दृष्टान्तेन स्पष्टीकर्तुमाह—**न तौ पशाविति** । दर्शपूर्णमासप्रकरणे ' आज्यभागौ जुहोति ' इति सामान्यतश्चक्षुष्याख्याज्यभागावग्नीषोमाभ्यां विधायोक्तम्—' न तौ पशौ करोति ' । तावाज्यभागौ पशुयागे न कुर्यादिति तदर्थः । सामान्येन विहितयोरप्याज्यभागयोर्निषेधात्पशुयागे प्रकृतिवद्विकृतिरिति न्यायेन प्राप्तयोर्यथा पुनर्विधानासंभवस्तद्वत्प्रकृते निषिद्धस्य सापिण्ड्यस्य पुनर्विधानासंभवेन निषेधस्य च प्राप्तिपूर्वकत्वेन प्राप्तेश्च विधानाभावादसंभवेन ' असपिण्डा च या मातुः ' इत्यत्र सपिण्डावर्जनं न सिध्यतीत्यर्थः । तस्मादगत्या वचनेन पठितमेव सापिण्ड्यं प्रतिग्रहीतकुले स्वीकर्तव्यमित्याशयेनाऽऽह—**द्विविधं हि सापिण्ड्यमिति** । समान एकः पिण्डः सपिण्डः । पिण्डशब्देन पिण्डदानक्रिया मूलपुरुषशरीरं वोच्यते । लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभा-

दृष्टत्वे प्रत्यक्षबाधितत्वेन हेमाद्रिः पिण्डान्वयमेवोपादाय दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषमेव सापिण्ड्यं व्यतिष्ठिपत्। तथा च काष्र्णाजिनिः—

यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः।
प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह॥
द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम्।
चतुर्थपुरुषे छेदं तस्मादेषा त्रिपौरुषी॥ इति।

अस्यार्थः—दत्तकादयः पुत्राः प्रेतानां प्रतिग्रहीत्रादीनां पितॄणामौरसत्वे शुद्ध-

---

गिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥ इति मात्स्योक्तेरेकस्यां पिण्डदानक्रियायां पिण्डदातृत्वपिण्डभाक्त्वलेपभाक्त्वान्यतमसंबन्धेन प्रवेशो निर्वाप्यसापिण्ड्यमेकम्। मूलपुरुषैकशरीरावयवान्वयेनावयवसापिण्ड्यं द्वितीयम्। तत्रावयवान्वयरूपसापिण्ड्यस्य दत्तकपुत्रे प्रत्यक्षं बाधाद्धेमाद्रिणा पिण्डान्वयरूपं निर्वाप्यसापिण्ड्यमुपादाय दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषपर्यन्तमेव सापिण्ड्यमङ्गीकृतम्। अत्रार्थे काष्र्णाजिनिवचनं प्रमाणत्वेनोल्लिखति—**यावन्त** इति। अस्यार्थो मूलकृतैव प्रदर्शितो दत्तकादयः पुत्रा इत्यादिना। दत्तकादिः पुत्रः प्रतिग्रहीतुः स्वपितुरौरसत्वे प्रतिग्रहीतुः पितृपितामहप्रपितामहैः सपिण्डनं कुर्यात्। यथा—चै० (कश्चित्पुरुषः)। तस्य पुत्रः वै०। त० पु० ज्ये०। त० पु० आ०। त० पु० श्रा० (दत्तकः) इति। अत्र दत्तकः श्रासंज्ञकः प्रतिग्रहीतुः स्वपितुरौरसस्य आ०संज्ञकस्य सपिण्डनं कुर्वन् स्वप्रतिग्रहीतुरासंज्ञकस्य पितृपितामहप्रपितामहैः ज्ये० वै० चै० संज्ञकैः सह सपिण्डनं कुर्यादिति। प्रतिग्रहीतुः स्वपितुः केवलदत्तकत्वे तत्परिग्रहीतृपितामहप्रपितामहैः सपिण्डनं कुर्यात्। यथा—चै० वै० ज्ये० इत्युत्तरोत्तरं त्रय औरसाः। ज्ये० पुत्रः० आ० (केवलदत्तकः)। तत्पुत्रः श्रा० (दत्तकः)। अत्र दत्तकः श्रा०संज्ञकः प्रतिग्रहीतुः स्वपितुः केवलदत्तकस्य सपिण्डनं चिकीर्षुः स्वपितुर्दत्तकस्य आसंज्ञकस्य परिग्रहीतृपितामहप्रपितामहैः ज्ये० वै० चै० संज्ञकैः सह सपिण्डनं कुर्यादिति। प्रतिग्रहीतुः स्वपितुर्व्यामुष्यायणत्वे तु तज्जनकादिभिस्त्रिभिस्तथा तत्प्रतिग्रहीत्रादिभिश्चेति मिलित्वा षड्भिः सह सपिण्डनं कुर्यात्। यथा—चै० वै० ज्ये० त्रय औरसाः। तत्र ज्ये० पुत्र आ० (व्यामुष्यायणः) आ० पुत्रः श्रा० (दत्तकः)। अत्र दत्तकः श्रा०संज्ञकः स्वपितुर्व्यामुष्यायणस्य आ०नामकस्य सपिण्डं चिकीर्षुः स्वपितुर्व्यामुष्यायणस्य जनकपितृपितामहप्रपितामहैस्तथा स्वपितुः आ०संज्ञकस्य प्रतिग्रहीतृपितृपितामहप्रपितामहैर्ज्ये० वै० चै० संज्ञकैश्चेति मिलित्वा षड्भिः सह सपिण्डनं कुर्यादिति।

दत्तकत्वे व्यामुष्यायणत्वे वा यावन्तः पितृवर्गास्त्रयः षड्वा, तत्राऽऽद्ये पितृपितामहप्रपितामहास्त्रयः, द्वितीये प्रतिग्रहीतृपितामहप्रपितामहास्त्रयः, तृतीये प्रतिग्रहीत्रादयस्त्रयो जनकादयश्च त्रय इति षट्, तावद्भिस्त्रिभिस्त्रिभिः षड्भिर्वा सह प्रतिग्रहीत्रादीनां योजनं कुर्युः। प्रतिग्रहीतुः पितुर्ये यावन्तः पितृवर्गास्त्रयः षड्वा तेषां सर्वेषां स्वपुत्रकर्तृके दत्तकसपिण्डीकरणे देवतात्वबोधनाय स्वकीयत्वविशेषणोपादानम्। ततश्च प्रतिग्रहीतृपितॄणां मध्ये त्रयाणां षण्णां वा दत्तकसपिण्डीकरणे देवतात्वप्राप्तौ विशेषमाह—द्वाभ्यामिति। त्रिषु पितृषु द्वाभ्यां षट्सु चतुर्भिः। एवं दत्तकपौत्राः स्वपितृसापिण्डीकरणं स्वपितामहप्रतिग्रहीतु-

---

ततश्च दत्तकस्य स्वकर्तृके पार्वणे येषां देवतात्वं दत्तकपुत्रकर्तृके सपिण्डीकरणेऽपि तेषामेव देवतात्वमित्युक्तं भवति। यथा—चै० (कश्चित्)। तस्य पुत्रः वै०। त० पु० ज्ये०। त० पु० आ० (दत्तकः)। अत्र दत्तक 'आ०'-कर्तृके पार्वणश्राद्धे ज्ये० वै० चै० इति त्रयाणां दत्तकस्य पालकपितृपितामहप्रपितामहानां देवतात्वं भवति। आ०संज्ञकस्य दत्तकस्य पुत्रः श्रा० इति। अत्रश्रा० संज्ञकेन दत्तकपुत्रेण स्वपितुः आ०संज्ञकस्य दत्तकस्य सपिण्डीकरणे कर्तव्ये आ०संज्ञकस्य दत्तकस्य पालकपितृपितामहप्रपितामहैः ज्ये० वै० चै० संज्ञकैर्दत्तककर्तृकपार्वणदैवतैः सह कर्तव्यं भवतीति। आद्य इति। प्रेतानां प्रतिग्रहीत्रादीनां पितॄणामौरसत्व इत्यर्थः। द्वितीय इति। प्रतिग्रहीतुः शुद्धदत्तकत्व इत्यर्थः। तृतीय इति। प्रतिग्रहीतुर्व्यामुष्यायणत्व इत्यर्थः। त्रयः षड्वेति। प्रतिग्रहीतुः शुद्धदत्तकत्वे तत्सपिण्डीकरणस्य तत्पालकपितृपितामहप्रपितामहैस्त्रिभिरभिधानात्त्रयः पितृवर्गा इत्यर्थः। प्रतिग्रहीतुर्व्यामुष्यायणत्वे तत्सपिण्डीकरणस्य तज्जनकादिभिस्त्रिभिस्तत्प्रतिग्रहीत्रादिभिस्त्रिभिश्चोक्तत्वात्पितृवर्गाः षडित्यर्थः। दत्तकपुत्रकर्तृके दत्तकसपिण्डीकरणे त्रयाणां षण्णां वा पितृवर्गाणां देवतात्वबोधनाय 'स्वकीयैः' इत्येवं स्वकीयत्वं विशेषणमुपात्तम्। स्वस्येमे स्वकीयास्तैः पितृभिरित्यर्थः। स्वपदेन यस्य सपिण्डीकरणं स दत्तकः परामृश्यते' नतु सपिण्डीकर्ता दत्तकपुत्रः। तेन प्रतिग्रहीतुर्व्यामुष्यायणत्वे षट्पितृवर्गाः संपद्यन्ते। एवं च दत्तककर्तृके सपिण्डीकरणे प्रतिग्रहीतुरौरसत्वे शुद्धदत्तकत्वे च तत्पालकपित्रादित्रयाणां ज्ये० वै० चै० संज्ञाकानां, प्रतिग्रहीतुर्व्यामुष्यायणत्वे तत्पालकपित्रादित्रयाणां तज्जनकपित्रादित्रयाणां चेति षण्णां देवतात्वप्राप्तौ विशेषं ब्रूते—द्वाभ्यां सहेति। दत्तकपुत्रः (औरसदत्तकान्यतरः) स्वपितुर्दत्तकस्य शुद्धस्य सपिण्डीकरणं कुर्वन् दत्तकस्य यः प्रतिग्रहीता तदपेक्षया पूर्वे ये त्रयः पितरस्तेषां त्रयाणां मध्ये द्वाभ्यां तृतीयेन प्रतिग्रहीत्रा च सहेति

त्रयाणां पितृणां मध्य एकेन प्रतिग्रहीतुः पित्रा, व्यामुष्यायणत्वे द्वाभ्यां वा, पितामहप्रपितामहाभ्यां च सह कुर्युः। अमुमेव न्यायं दत्तकतत्पुत्रयोरप्यतिदि-

---

त्रिभिः सपिण्डनं कुर्यात्। तथा तादृशो दत्तकपुत्रः स्वपितुर्दत्तकस्य व्यामुष्यायणस्य सपिण्डनं कुर्वन् व्यामुष्यायणस्य यः प्रतिग्रहीता यश्च जनकस्तदपेक्षया पूर्वे ये पालककुले जनककुले च त्रयस्त्रयः पितरस्तेषां मध्ये द्वाभ्यां द्वाभ्यामिति कृत्वा षण्णां मध्ये चतुर्भिस्तथा तृतीयेन परिग्रहीत्रा तृतीयेन जनकेन सहेति षड्भिः सपिण्डनं कुर्यादित्यर्थः। अत्रोदाहरणं यथा—चै० (कश्चित्)। तस्य पुत्रः—वै०। त० पु० ज्ये०। त० पु० आ०। त० पु० श्रा० (शुद्धदत्तकः)। दत्तकपु० भा० इति। अत्र दत्तकपुत्रेण भा० नामकेन स्वपितुर्दत्तकस्य श्रा० नामकस्य सपिण्डीकरणे कर्तव्ये सति दत्तकस्य प्रतिग्रहीता य आ० संज्ञकस्तदपेक्षया पूर्वे ये त्रयः पितरः ज्ये० वै० चै० इत्याकारकास्तेषां मध्ये द्वाभ्यां ज्ये० वै० इत्याभ्यां प्रतिग्रहीतुः पितृपितामहाभ्यां, प्रतिग्रहीत्रा आ० नामकेन चेति त्रिभिः सपिण्डनं कार्यम्। तथाऽत्रैव श्रा० दत्तकस्य व्यामुष्यायणत्वे सति प्रतिग्रहीतुः पितृपितामहाभ्यां ज्ये० वै० इत्याभ्यां प्रतिग्रहीत्रा आ०नामकेन च, तथा जनकस्य पितृपितामहाभ्यां मा० का० इत्याभ्यां जनकेन पौ० नामकेन चेति षड्भिः सपिण्डनं कार्यम्। मा० नामा कश्चित्। तत्पुत्रः का०। तत्पुत्रः मा०। तत्पुत्रः पौ०। अयमेव श्रा०संज्ञकव्यामुष्यायणस्य जनकः पिता बोध्यः। तथा दत्तकपौत्र आ०नामकः स्वपितुर्दत्तकपुत्रस्य भा०संज्ञकस्य सपिण्डनं कुर्वन्स्वपितामहस्य श्रा० संज्ञकस्य यः प्रतिग्रहीता आ० संज्ञस्तस्य ये पित्रादित्रयः पितरः ज्ये० वै० चै० संज्ञकास्तेषां मध्य एकेन प्रतिग्रहीतुः पित्रा ज्ये०संज्ञकेन स्वपितामहप्रपितामहाभ्यां श्रा० आ० इत्याभ्यां च सहेति त्रिभिः सपिण्डनं कुर्यात्। दत्तकपौत्रकर्तृके सपिण्डने स्वपितामहप्रपितामहवृद्धप्रपितामहानां देवतात्वमिति भावः। दत्तकस्य व्यामुष्यायणत्वे तु प्रतिग्रहीतुः आ०संज्ञकस्य पित्रा ज्ये० संज्ञकेन स्वपितामहप्रपितामहाभ्यां श्रा० आ० इत्याभ्यां, तथा व्यामुष्यायणस्य जनककुलीयैः पितृपितामहप्रपितामहैः पौ० मा० का० संज्ञकैश्च सहेति षड्भिः सपिण्डनं कुर्यादिति। व्यामुष्यायणपौत्रकर्तृके सपिण्डीकरणे स्वपितामहप्रपितामहवृद्धप्रपितामहानां तथा व्यामुष्यायणस्य जनकपितृपितामहप्रपितामहानां चेति षण्णां देवतात्वमिति भावः। दत्तकपुत्रपौत्रयोः क्रमेण व्यामुष्यायणत्वदत्तकत्वयोः सतोर्दत्तकपौत्र आ० नामको दत्तकः स्वपितुर्भा०संज्ञकस्य व्यामुष्यायणस्य सपिण्डनं कुर्वंस्तत्प्रतिग्रहीतृपितृपि-

शति—तत्सममिति । तत्सपिण्डीकरणं दत्तकतत्पुत्रयोरपि व्यामुष्यायणत्वे समं पितृवर्गद्वयेन कार्यम् । नन्वेवं दत्तकप्रपौत्रेण स्वपितुर्दत्तकपौत्रस्य सपिण्डीकरणे दत्तकपुत्रदत्तकतत्प्रतिग्रहीतृभिस्त्रिभिः सह क्रियमाणे प्रतिग्रहीतृपितॄणां त्रयाणामन्यतमस्याप्यनुप्रवेशाभावेन सापिण्ड्यं न स्यादित्यत आह—चतुर्थपुरुषे छेदमिति । यो यदा स्वपितुः सपिण्डीकरणं करोति स तत्पित्रादिभिस्त्रिभिरेव

---

तामहप्रपितामहैः श्रा० आ० ज्ये० नामकैस्त्रिभिस्तथा भा० नामकस्य व्यामुष्यायणस्य जनकपितृपितामहप्रपितामहैस्त्रिभिश्चेति षड्भिः सपिण्डनं कुर्यात् । ननु दत्तकस्यौरसपुत्रपौत्रवत् श्रा० संज्ञकस्य व्यामुष्यायणस्य जनकपितृपितामहप्रपितामहैः पौ० मा० का० संज्ञकैः सह सपिण्डनं कुर्यादित्यर्थः । श्रा०संज्ञकस्य व्यामुष्यायणदत्तकस्य पुत्रपौत्रयोरौरसत्वे दत्तकपौत्रकर्तृकसपिण्डनस्योदाहरणं पूर्वमुक्तमत्रानुसंधेयम् । तेनात्रत्यो विशेषः स्फुटो भविष्यतीति ।

ननु प्रतिग्रहीतुरौरसत्वे शुद्धदत्तकत्वे व्यामुष्यायणत्वे वा सति दत्तककर्तृके सपिण्डीकरण औरसत्वदत्तकत्वव्यामुष्यायणत्वनिबन्धनं त्रयाणां षण्णां वा पितृवर्गाणां देवतात्वं युज्यते, परंतु दत्तकपुत्रपौत्रकर्तृके स्वस्वपितुः सपिण्डने षण्णां देवतात्वं न युज्यते । तयोः पितुर्व्यामुष्यायणत्वाभावात् । अतो दत्तकतत्पुत्रयोरप्ययमुं न्यायमतिदिशन्नाह—तत्सममिति । तत्सपिण्डीकरणं दत्तकतत्पुत्रयोर्द्वयोरपि व्यामुष्यायणत्वे पितृवर्गद्वयेन प्रतिग्रहीतृपितृवर्गेण जनकपितृवर्गेण च समं कार्यमित्यर्थः ।

शङ्कते—नन्वेवमिति । उक्तप्रकारेण दत्तकप्रपौत्रः स्वपितुर्दत्तकपौत्रस्य सपिण्डनं चिकीर्षुर्दत्तकपुत्र—दत्तक—तत्प्रतिग्रहीतृभिः सह सपिण्डनं कुर्यात् । ततश्च प्रतिग्रहीतुः पितॄणां त्रयाणां मध्य एकस्यापि दत्तकप्रपौत्रकर्तृके सपिण्डने प्रवेशाभावाद्दत्तकप्रपौत्रस्य सापिण्ड्यं न स्यात् । यथा—चै० वै० ज्ये० आ० श्रा० ( दत्तकः ) । द० पु० भा० । द० पौत्रः—आश्वि० । द० प्रपौत्रः—का० । अत्र दत्तकस्य श्रा० नामकस्य प्रपौत्रः का० नामकः स्वपितुर्दत्तकपौत्रस्य आश्वि० नामकस्य सपिण्डनं कुर्वन्दत्तकपुत्र—दत्तक—तत्प्रतिग्रहीतृभिर्भा० श्रा० आ० संज्ञकैः सहैव कुर्यात् । तत्र प्रतिग्रहीतुरा० संज्ञकात्प्राचीना ये त्रयः पितरः—ज्ये० वै० चै० संज्ञकास्तेषां मध्य एकस्यापि तादृशे सपिण्डने प्रवेशाभावेन दत्तकप्रपौत्रस्य पिण्डान्वयरूपं निर्वाप्यसापिण्ड्यं न भवेदिति । अत आह—चतुर्थपुरुष इति । यः स्वपितुः सपिण्डीं चिकीर्षति स स्वपितुः पितृपितामहप्रपितामहैस्त्रिभिरेव कुर्यान्न चतुर्थेनेति चतुर्थे विरामः सिद्ध एव । सिद्धे सत्यारम्भो नियमार्थ इति न्यायेन लेपिनां लेपनिराकरणेन सापिण्ड्यनिषेधार्थः । एवं च दत्तकविषये लेपिनां साापिण्ड्यविच्छेदात्त्रिपौरुषमेव सापि-

कुर्यान्न चतुर्थेनेत्यर्थः। नन्वेवमौरसस्थलेऽपि सपिण्डीकरणं त्रिभिरेव शास्त्रे सिद्धं तेनैव सिद्धौ वचनान्तरारम्भक्लेशः किमर्थं इत्यत आह—तस्मादिति। दत्तकानामेषा पिण्डान्वयरूपाऽशौचाविवाह्यत्वप्रयोजिका त्रिपुरुष्येव सपिण्डता, न—

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥

इति मात्स्याभिहिता साप्तपौरुषी। तस्याः सामान्यरूपतया विशेषेणापवादात्।

एतदेवाभिप्रेत्योक्तं संग्रहकारेण—

दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात्त्रिपौरुषम्।
जनकस्य कुले तद्वद्ग्रहीतुरिति धारणा॥ इति।

यदिदमुभयत्र त्रिपुरुषसापिण्ड्याभिधानं तद्व्यामुष्यायणाभिप्रायेण। तस्य त्रिकद्वयेन सपिण्डीकरणाभिधानात्। शुद्धदत्तकस्य तु प्रतिग्रहीतृकुले त्रिपुरुषं पिण्डान्वयरूपं सापिण्ड्यं जनककुले साप्तपौरुषमवयवान्वयरूपमेवेत्यलं प्रपञ्चेन।

तद्वद्गोत्रमिति। तद्वत्सापिण्डनावत्, गोत्रमपि बीजवप्तुर्जनकस्य, न केवलं

---

ण्ड्यमित्युक्तम्। तदेतदाह—तस्मादेवेति। दत्तकानामेषा पिण्डान्वयरूपाऽशौचाविवाह्यत्वादिप्रयोजिका त्रिपुरुष्येव सपिण्डता, न 'लेपभाजश्चतुर्थाद्याः' इति मात्स्योक्तासाप्तपौरुषी सपिण्डता। मात्स्योक्तायाः सप्तपुरुषावधिकायाः सपिण्डतायाः सामान्यरूपत्वेन विशेषयाऽनया त्रिपुरुषसपिण्डतयाऽपवादत्वेन बाधितत्वादिति बोध्यम्।

एतदभिप्रायमनुसंधायैव संग्रहकार उक्तवान्—दत्तकानां त्विति। मुनिवचनसिद्धार्थस्य संग्राहकत्वात्फक्किकेयं न मुनिवचनमिति तात्पर्यम्। दत्तकानां पुत्राणां जनककुले प्रतिग्रहीतृकुले चेत्युभयत्रापि त्रिपौरुषं सापिण्ड्यमिति तदर्थः। तदिदमुभयत्र कुले सापिण्ड्याभिधानं व्यामुष्यायणदत्तकाभिप्रायेण। तस्य सपिण्डनं जनकपितृत्रयेण प्रतिग्रहीतुः पितृत्रयेण च कर्तव्यमित्युक्तत्वात। केवलदत्तकस्य तु प्रतिग्रहीतृकुले पिण्डान्वयरूपं त्रिपुरुषं सापिण्ड्यं जनककुलेऽवयवान्वयरूपं तत्साप्तपौरुषमित्यलं विस्तरेण।

तद्वद्गोत्रमिति। दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता। पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च॥ इति पूर्वप्रक्रान्तबृहन्मनुवचनस्थं प्रतीकमिदम्। तद्वत्सपिण्डतावद्गोत्रमपि बीजवप्तुर्जनकस्य, न केवलं जनकस्यापि तु तत्पालकस्य च

जनकस्यापि तु तत्पालकस्य च दत्तकादेर्यः पालकस्तस्य च गोत्रं दत्तकादीनां भवतीति। अनेन सपिण्डतावैलक्षण्यं गोत्रेऽभिहितम्। यथा सपिण्डता जनकस्यैव न तथा गोत्रं किंतूभयोरपि तदिति। न चेदमपि दत्तकमात्रे किंतु व्यामुष्यायणे दत्तकविशेषे। तथा हि—द्विविधा दत्तकादयो नित्यवद्व्यामुष्यायणा अनित्यवद्व्यामुष्यायणाश्चेति। तत्र नित्यव्यामुष्यायणा नाम ये जनकप्रतिग्रहीतृभ्यामावयोरयं पुत्र इति संप्रतिपन्नाः। अनित्यव्यामुष्यायणास्तु ये चूडान्तैः संस्कारैर्जनकेन संस्कृता उपनयनादिभिश्च प्रतिग्रहीत्रा, तेषां गोत्रद्वयेनापि संस्कृतत्वाद्व्यामुष्यायणत्वं परं त्वनित्यम्। जातमात्रस्यैव परिग्रहे गोत्रद्वयेन संस्काराभावात्तस्य परिग्रहीतृगोत्रमेव।

---

तस्य दत्तकादेर्यः पालकस्तस्य च गोत्रं दत्तकादीनां भवतीति। यथा सपिण्डताऽवयवान्वयरूपा जनकस्यैव, न तथा गोत्रं किंतूभयोरपि तदिति सपिण्डतापेक्षया गोत्रे वैलक्षण्यमुक्तं भवति। इदं च गोत्रवैलक्षण्यं न दत्तकमात्रे। मात्रशब्दः कात्स्न्र्ये। मात्रं कात्स्न्र्येऽवधारणे, इति कोशात्। सर्वविधेषु दत्तकेष्विदं न, किंतु दत्तकविशेषे व्यामुष्यायणे। द्विविधे व्यामुष्यायण इदं गोत्रद्वयसंबन्धनं बोध्यमित्यर्थः। व्यामुष्यायणस्वरूपं प्रतिपादयितुमाह—**तथा हीति**। आवयोरयं पुत्र इति संकल्प्य जातमात्र एव जनकेन प्रतिग्रहीत्रे दत्तो नित्यव्यामुष्यायणः। अनित्यव्यामुष्यायणस्तु यश्चूडान्तैः संस्कारैर्जनकेन संस्कृत्य पश्चाद्दत्तः। अर्थात्प्रतिग्रहीत्रोपनयनादिभिः संस्कृत इत्यर्थः। तत्र प्रथमव्यामुष्यायणस्थल आवयोरयमिति संकल्पबलाद्दाने न ममेति त्यागाभावाच्चोभयगोत्रसंबन्धोऽस्त्येव। तथा च गोत्रद्वयसंबन्धादस्य द्व्यामुष्यायणत्वम्। गोत्रद्वयसंबन्धभागित्वं हि व्यामुष्यायणत्वमिति भावः। अस्य च जातमात्रस्यैव परिग्रह इति प्रतिग्रहीतृगोत्रेण जातकर्मादिकाः सर्वे संस्काराः प्रवर्तन्ते। एवं चास्य जन्मन आरभ्यैव गोत्रद्वयसंबन्धान्नित्यव्यामुष्यायणत्वेन शास्त्रे व्यवहारः कृतः। द्वितीयव्यामुष्यायणस्थले तु संकल्पाभावान्न ममेति त्यागाच्च जनकगोत्रसंबन्धो यद्यपि दुर्वचस्तथाऽपि कतिपयसंस्कारोत्तरं दानात्प्रतिग्रहीत्रोपनयनादिभिः संस्कृतत्वाच्च गोत्रद्वयेन संस्काराद्गोत्रद्वयसंबन्धः सुवचः। अत एव चास्य न जातमात्रस्य परिग्रहः। एवं चास्य जन्मन आरभ्य गोत्रद्वयसंबन्धाभावादनित्यव्यामुष्यायणत्वेन व्यवहारः कृतः। प्रथमव्यामुष्यायणस्थले जनकगोत्रसंबन्धो वर्तत एवेति तस्यात्र विचारो न कृतः। द्वितीयव्यामुष्यायणस्थले दानेन स्वत्वनिवृत्तिदर्शनाज्जनकगोत्रसंबन्धो दुर्घट इति तं प्रतिपादयितुमाह—**तेषां गोत्रद्वयेनापीति**। जनकगोत्रेण चूडान्तसंस्कारैः, प्रतिग्रहीतृगोत्रेणोपनयनादिभिश्च संस्कृतत्वाद्गोत्रद्वयभा-

तदिदं सर्वमभिप्रेत्याऽऽह सत्याषाढः—' नित्यानां व्यामुष्यायणानां द्वयोः ' इति सूत्रेण। नित्यव्यामुष्यायणानां गोत्रद्वये प्रवरसंबन्धमुक्त्वा तमेवानित्येष्व-प्यतिदिशति—'दत्तकादीनां तु व्यामुष्यायणवत् ' इति सूत्रेण। व्याख्यातं चैत-च्छबरस्वामिभिः। व्यामुष्यायणप्रसङ्गेनानित्यानाह—दत्तकेति। तावदेव नोत्तर-संततौ प्रथमेनैव संस्काराः परिग्रहीत्रा चेत्तदोत्तरस्य पूर्ववत्तेनैवोत्तरत्र। तथा

---

गित्वम्। तत एव च व्यामुष्यायणत्वम्। गोत्रद्वयभागित्वं च न जन्मन आर-भ्यैवेत्यनित्यव्यामुष्यायणत्वमस्य। एवं चात्र गोत्रद्वयेन संस्कारो गोत्रद्वयसंबन्धहेतुरिति फलति। तथा च गोत्रद्वयसंबन्धसत्त्वाद्द्विविधव्यामुष्यायणेन विवाहे जनकपालक-पित्रोर्गोत्रप्रवरसंबन्धिनी कन्या वर्जनीया, न शुद्धदत्तकेन तस्य गोत्रद्वयसंबन्धाभा-वादिति दत्तकमीमांसाकारमतम्। तदेतत्सर्वमनुसंधाय सत्याषाढेनोक्तम्—' नित्यानां व्यामुष्यायणानां द्वयोः ' इति सूत्रे। तत्र हि नित्यानां व्यामुष्यायणानां गोत्र-द्वयप्रवरसंबन्धमुक्त्वा तमेव गोत्रद्वयसंबन्धमनित्यव्यामुष्यायणेष्वातिदिशति—' दत्तका-दीनां व्यामुष्यायणवत् ' इति सूत्रे। अत्र सर्वेषु दत्तकेषु प्रतिग्रहीतृगोत्रसंबन्धो दत्तकविधिशास्त्रबलादेव भवति। जनकगोत्रसंबन्धोऽपि प्रथमदत्तके नित्यव्यामुष्यायणे संकल्पबलादेव सिद्ध इति न तद्विषये काचिच्छङ्केत्यतस्तद्विचारावसर एव नास्तीति ' नित्यानाम्० ' इति प्रथमसूत्रेण नित्यव्यामुष्यायणे गोत्रद्वयसंबन्ध उक्तः। द्वितीयदत्तकेऽनित्यव्यामुष्यायणे संकल्पाभावाद्दानेन स्वत्वनिवृत्तेश्च जनकगोत्रसंबन्धः कथमित्याशङ्कोदेति तन्निरासद्वारा तत्रापि जनकगोत्रसंबन्धं प्रतिपादयितुं ' दत्त-कादीनाम्० ' इति द्वितीयसूत्रेणातिदेश उक्तः। अस्य द्वितीयसूत्रस्य शबरस्वा-मिकृता व्याख्या त्वित्थम्—नित्यव्यामुष्यायणप्रसङ्गेनानित्यानाह-दत्तकादीनामिति। अनित्यव्यामुष्यायणानामित्यर्थः। आदिपदेन क्रीतकृत्रिमपुत्रिकापुत्रक्षेत्रजादीनां ग्रह-णम्। तावदेवेत्यादि प्रतिग्रहीतुरेवेत्यन्तं भाष्यम्। अस्य भाष्यस्यायमर्थः। अनित्य-व्यामुष्यायणदत्तकपर्यन्तमेव जनकापितृगोत्रमनुवर्तते नोत्तरत्र तत्संततावित्यर्थः।

दत्तक एव जनकगोत्रसंबन्धे तत्संततौ तदसंबन्धे च कारणमाह—प्रथमेनैवेति। एवकारोऽप्यर्थकः। तथा च प्रथमेनापि जनकेनापि पित्रा चूडान्तसंस्कारकरणादि-त्यर्थः। जनककर्तृकसंस्काराश्च चूडान्ता एव। पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः॥ इति कालिकापु-राणवचनात्। अन्यस्यासाधारणीं पुत्रतां न याति, किंतु व्यामुष्यायणो भवतीति तदर्थः प्रागेवोक्तः। अनेनैतदुक्तं भवति–यो गोत्रद्वयेन संस्कृतस्तस्यैव गोत्रद्वयसंबन्धः। उभयोर्जनकप्रतिग्रहीत्रोर्गोत्रेण संस्कृतत्वादस्य दत्तकस्य गोत्रद्वयसंबन्धः। तत एव

पितृव्येण भ्रातृव्येण चैकार्षेयेण ये जातास्ते परिग्रहीतुरेवेति। अस्य भाष्यस्यायमर्थः-यो गोत्रद्वयेन संस्कृतस्तस्यैव गोत्रद्वयसंबन्धो नोत्तरसंततेः। जनकगोत्रसंबन्धे किं कारणमित्यत आह–प्रथमेनेति। प्रथमो जनकस्तेनैव संस्कृतत्वात्। संस्काराश्च चौडान्ताः।

पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः॥

इति कालिकापुराणात्। व्याख्यातं चैतत्प्रागेवान्यस्यासाधारणीं पुत्रतां न याति किंतु व्यामुष्यायणो भवतीति। प्रथमेनासंस्कारे कथमित्यत आह–परिग्रहीत्रा चेदिति। परिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणे चौडादिसंस्कारकरणेऽपि चोत्तरस्य परिग्रहीतुरेव गोत्रम्। तत्र हेतुः–पूर्वत्वात्। संस्कारकरणे

चास्य व्यामुष्यायणत्वम्। तच्च न जन्मत आरभ्येत्यनित्यम्। एवं च 'तावदेव नोत्तरसंततौ' इत्यनित्यव्यामुष्यायणविषयमिति। अत्रेदं बोध्यम्–अत्र सर्वत्र प्रतिग्रहीतृगोत्रसंबन्धः परिग्रहविधिबलादेवेत्युक्तमेव। तत्र जनकगोत्रसंबन्धे सत्युभयगोत्रसंबन्धो भवति नान्यथा। उभयगोत्रसंबन्धे चोभयगोत्रेण संस्कारः कारणम्। स चोभयगोत्रेण संस्कारो दत्तक एवास्ति। अतो दत्तकपर्यन्तमेव जनकगोत्रसंबन्धो भवतीत्युक्तम्। उत्तरत्र तत्संततावुभयगोत्रेण संस्कारो नास्ति, किंत्वेकेन प्रतिगृहीतृगोत्रेणैव संस्कारः। अतस्तत्र जनकगोत्रसंबन्धो नास्ति, अपि तु प्रतिग्रहीतृगोत्रस्यैकस्यैव संबन्धः। एवं 'प्रथमेनैव संस्काराः' इत्यन्तभाष्येणानित्यव्यामुष्यायणदत्तके गोत्रद्वयसंबन्धं प्रदर्श्य यत्र दत्तके गोत्रद्वयेन संस्काराभावस्तत्र गोत्रसंबन्धविचारं प्रवर्तयितुमवतरणिकामाह भाष्यकारः–**प्रथमेनासंस्कारे कथमिति**। उत्तरयति–अत आह–**प्रतिग्रहीत्रा चेदिति**। परिग्रहीत्रैव स्वगोत्रेण जातकर्माद्यखिलसंस्काराः क्रियन्ते चेदुत्तरस्य परिग्रहीतुरेव गोत्रं न जनकगोत्रम्। एवं यदा प्रतिग्रहीत्रा स्वगोत्रेण चूडाप्रभृतिसंस्काराः क्रियन्ते तदाऽपि प्रतिग्रहीतुरेव गोत्रं, न जनकगोत्रसंबन्ध इति बोध्यम्। निरुक्तदत्तके परिग्रहीतृगोत्रस्यैव प्रवृत्तौ कारणं प्रदर्शयन्नाह–**पूर्वत्वादिति**। संस्कारकरणे प्रतिग्रहीतुरेव प्रथमत्वात्प्रधानत्वादित्यर्थः। प्रतिग्रहीत्रा संस्कारकरणात्तद्गोत्रसंबन्धो जनकेन संस्काराकरणात्तद्गोत्र'संबन्ध इति यावत्। अनेन शुद्धदत्तकस्थले गोत्रसंबन्धासंबन्धविचारः प्रदर्शितः। जातमात्रं पुत्रं परिगृह्य जातकर्माद्यखिलैः संस्कारैश्चूडादिसंस्कारैर्वा संस्कृतः शुद्धदत्तक इति तल्लक्षणात्। अयमेव केवलदत्तक इत्यप्युच्यते। एवं च दत्तकमीमांसाकारमते शुद्धदत्तकस्य प्रतिग्रहीत्रेकगोत्रत्वाद्गोत्रद्वयाभावेन विवाहे जनकपालकोभयपितृगोत्रवर्जनं न किंतु प्रति-

ग्रहीतृगोत्रवर्जनमेव। उभयविधव्यामुष्यायणे तूभयगोत्रसंबन्धादुभयगोत्रवर्जनमिति सिद्धम्।

ननु शुद्धदत्तकस्थले जातमात्रं पुत्रं परिगृह्य जातकर्माद्यखिलसंस्काराः प्रतिग्रहीत्रैव स्वगोत्रेण क्रियन्ते तदा गोत्रद्वयेन संस्काराभावाद्गोत्रद्वयसंबन्धाभावेन नोभयगोत्रवर्जनं किंतु प्रतिग्रहीतृगोत्रस्यैव वर्जनमिति यदुक्तं तद्युक्तमेव। परंतु यदा प्रतिग्रहीत्रा स्वगोत्रेण चूडाप्रभृतयः संस्काराः क्रियन्ते तदा चूडाप्राग्भाविनां जातकर्माद्यन्नप्राशनान्तसंस्काराणां जनकगोत्रेण जातत्वाद्गोत्रद्वयेन संस्कृतत्वात्कथं न गोत्रद्वयसंबन्ध इति चेच्छृणु–पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः॥ इति कालिकापुराणस्थवचनेन प्रतिपन्नचूडावस्थस्यैवान्यनिरूपितासाधारणपुत्रतानिराकरणादप्रतिपन्नचूडावस्थस्यान्यनिरूपितासाधारणपुत्रतासंपत्तिसूचनान्न जनकगोत्रसंबन्धोऽपि तु प्रतिग्रहीतृगोत्रस्यैव संबन्ध इत्याशयात्।

अत्रायमभिप्रायः–आचूडान्तमित्यत्र चूडामभिव्याप्येत्यर्थकमाचूडमिति वक्तव्ये यदन्तग्रहणं करोति तस्मादेवं ज्ञायते यच्चूडान्तावयवककर्मसमुदायानुष्ठाने जनकगोत्रेण कृत एव व्यामुष्यायणत्वं भवति। एवं च व्यामुष्यायणत्वप्राप्तौ चूडासंस्कारस्य प्राधान्यं गम्यते। ततश्च यस्य चूडासंस्कारो जनकपितुर्गोत्रेण नैव संपन्नः किंतु प्रतिग्रहीतृगोत्रेणैव संवृत्तस्तस्य जनकगोत्रसंबन्धो नास्त्यपि तु प्रतिग्रहीतृगोत्रस्यैव संबन्ध इति। अत एव शुद्धदत्तकलक्षणे जातकर्मादिभिश्चूडादिभिर्वेति विकल्पवचनं संगतं भवति। इतरथा जातमात्रस्य परिग्रहे तत्र जाताद्यन्नप्राशनान्तसंस्काराणामनुष्ठानस्याऽऽवश्यकतया चूडादिभिर्वेति विकल्पवचनस्यासामञ्जस्यापत्तिः। एवं च शुद्धदत्तकलक्षणे जातमात्रशब्दोऽप्रतिपन्नचूडावस्थपर इति ध्येयम्। एतदाशयमनुसंधायैवोक्तं सूत्रकारेण–'प्रतिग्रहीत्रा चेत्तदोत्तरस्य पूर्वत्वादिति। तत्र प्रतिग्रहीत्रा संस्कारकरणे प्रतिग्रहीतृगोत्रसंबन्धे हेतुः पूर्वत्वादित्युक्तः। संस्कारकरणे प्रतिग्रहीतुः प्रथमत्वात्प्रधानत्वादिति तदर्थः। व्यामुष्यायणत्वप्राप्तिहेतोः प्रधानस्य चूडासंस्कारस्य जनककर्तृकस्य प्रतिग्रहीत्रैव करणात्प्रतिग्रहीतुः संस्कारकरणे प्राधान्यात्प्रतिग्रहीतुरेव गोत्रं न जनकगोत्रम्। तत्र यदा प्रतिग्रहीत्रा जाताद्यखिलसंस्काराः क्रियन्ते तदा चूडासंस्कारः प्रतिग्रहीत्रैव कृत इति निःसंशयम्। यदाऽपि चूडाप्रभृतयः संस्काराः क्रियन्ते तदाऽपि प्रधानश्चूडासंस्कारः प्रतिग्रहीत्रैव कृत इति गोत्रद्वयेन प्रधानसंस्काराभावान्न गोत्रद्वयसंसर्ग इत्याशयः।

नन्वेवं जनकगोत्रकरणकचूडासंस्कारस्य व्यामुष्यायणत्वप्राप्तिनिमित्तत्वे सति नित्यव्यामुष्यायणदत्तकस्य व्यामुष्यायणत्वं न स्यात्। जातमात्रस्य परिग्रहेण प्रतिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणात्। यदि च तत्रापि चूडोत्तरमेव परिग्रह इत्यु-

प्रथमत्वात् । व्यामुष्यायणसंततौ दत्तकसंततौ चापेक्षितं गोत्रमाह–तेनैवेति ।

---

च्यते तर्हि तत्र नित्यशब्दार्थविरोधाद्व्यामुष्यायणताया नित्यत्वं न स्यादिति वाच्यम् । नेदं पितुर्गोत्रेणेति वचनमपूर्वतया व्यामुष्यायणत्वविधायकं, किंतु तन्नियामकम् । नियमस्य च सजातीयापेक्षत्वात्संस्कारोत्तरदत्तविषयमिदम् । ततश्च कतिपयसंस्काराननुष्ठाय तदनन्तरं दत्तस्य यदि व्यामुष्यायणता भवति तर्हि चूडोत्तरं दत्तस्यैवेति । एवं च प्रथमव्यामुष्यायणस्थले जनकप्रतिग्रहीत्रोरावयोरयं पुत्र इति संकल्पबलाद्गोत्रद्वयसंबन्धरूपा व्यामुष्यायणता, न तु गोत्रद्वयसंस्कारनिमित्तेति बोध्यम् ।

**व्यामुष्यायणसंततावि**ति । नित्यव्यामुष्यायणस्य पुत्रपौत्रादिसंततावित्यर्थः । **दत्तकसंततावि**ति । अनित्यव्यामुष्यायणस्य पुत्रपौत्रादिष्वित्यर्थः । अत्रोभयत्रापि प्रतिग्रहीतुरेव गोत्रं संबध्यते, न जनकगोत्रमिति 'तेनैवोत्तरत्र' इति भाष्यांशस्यार्थः । अयं भावः—शुद्धदत्तकस्थले दत्तक एव जनकगोत्रसंबन्धो नास्ति । तत्र तत्संततौ तत्संबन्धशङ्काऽपि दूरापास्तैव । अतः 'तेनैवोत्तरत्र' इति न शुद्धदत्तकसंततिविषयम्। किंतु यादृशे दत्तके जनकगोत्रसंबन्धोऽस्ति स चोत्तरत्र तत्संततावनुवर्तेनेम संभाव्येतापि तत्र जनकगोत्रसंबन्धनिवृत्तिं प्रतिपादयितुम् । गोत्रद्वयसंबन्धश्च व्यामुष्यायणदत्तके वर्तते । व्यामुष्यायणश्च द्विविधः । नित्यव्यामुष्यायणोऽनित्यव्यामुष्यायणश्चेति । अत एवोक्तं व्यामुष्यायणसंततौ दत्तकसंततौ चेति । अनित्यव्यामुष्यायणा दत्तकशब्देनोच्यन्ते । 'दत्तकादीनां व्यामुष्यायणवत्' इति सूत्रानुसारात् । व्यामुष्यायणप्रसङ्गेनानित्यानाह—'दत्तकादीनाम्' इति भाष्ये तदवतरणप्रदानात् । तत्र नित्यव्यामुष्यायणसंततौ जनकगोत्रासंबन्धस्तावदेवमुपपादनीयः । नित्यव्यामुष्यायणे यद्यपि जनकगोत्रसंबन्धो जन्मतः सिद्धः संकल्पबलादनिवृत्तः संस्तत्रास्त्येव तथाऽपि जनकगोत्रकरणकसंस्काराभावात्तस्यानभिव्यक्तत्वेनोत्तरत्र तत्संततौ संबन्धुं नोत्सहतेऽपि तु स्वस्थानास्थित एवावतिष्ठते । अथवा 'तावदेव नोत्तरसंततौ' इति निषेधो द्विविधव्यामुष्यायणसंततिविषयः । ततश्च नित्यव्यामुष्यायणसंततेः प्रतिग्रहीतृगोत्रस्यैव संबन्धः सिध्यति । एवं च नित्यव्यामुष्यायण एव गोत्रद्वयसंबन्धभाक्, न तत्संततिरिति विवाहे तत्संततेर्गोत्रद्वयपरिपालनापेक्षा नास्तीति भाति ।

अनित्यव्यामुष्यायणे जनकगोत्रसंबन्धः संस्काराभिव्यक्तोऽस्ति, परंतु न ममेति त्यागेन हतबलत्वाच्छिथिलः, शैथिल्यादेव चोत्तरत्रानुवर्तितुं मन्दं प्रवर्तत इति तावदेव नोत्तरसंततावविति सत्याषाढेनोत्तरसंततावनित्यव्यामुष्यायणस्य संततावनित्यव्यामुष्यायणस्य यः साक्षाज्जनकस्तद्गोत्रसंबन्धस्य निराकरणादनित्यव्यामुष्यायणसंततावपि प्रतिग्रहीतृगोत्रस्यैव संबन्धो न जनकगोत्रसंबन्ध इत्यनित्यव्यामुष्यायणसंततेरपि विवाहे

परिग्रहीतृगोत्रेणैवोत्तरसंततेर्गोत्रमुभयत्रापि । सगोत्रपरिग्रहमाह—तथेति । जनकपरिग्रहीत्रोरेकगोत्रत्वेऽपि परिग्रहीत्रैव व्यपदेशः । परिग्रहसंस्कारकरणादिति ।

यत्तु 'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः' इति तत्परिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणपक्षे वेदितव्यम् । ये तु नित्यवद्व्यामुष्यायणा दत्तकादयस्तेषां गोत्रद्वयम् ।

---

गोत्रद्वयपरिपालनापेक्षा नास्तीति भाति । यद्गोत्रस्य संबन्धस्तद्गोत्रस्यैव विवाहे परिपालनमिति ।

**जनकप्रतिग्रहीत्रोरिति** । 'पितृव्येण भ्रातृव्येण चैकार्षेयेण ये जाताः' इत्यस्य व्याख्येयम् । पितृव्यः पितुर्भ्राता प्रतिग्रहीता । भ्रातृव्यो भ्रातृपुत्रः प्रतिग्राह्यः । द्वावप्येकगोत्रौ । पितृव्येण प्रतिग्राहकेण, प्रतिगृहीतेनैकगोत्रेण भ्रातृपुत्रेणेत्येवंप्रकारेण ये समानगोत्रे दत्तकाः संपन्नास्तेषां प्रतिग्रहीतृगोत्रेणैव व्यपदेशः कार्यः । तत्र हेतुमाह—**परिग्रहसंस्कारेति** । प्रतिग्रहीत्रा दत्तकपरिग्रहादिसंस्कारकरणादित्यर्थः । भिन्नगोत्रीये शुद्धदत्तके जनकगोत्रेण व्यवहारः सुतरां न संभवति । 'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः' ( म० स्मृ० ९ । १४२ ) इति मनुना शुद्धदत्तकस्य जनकपितृगोत्रसंबन्धनिराकरणात् । यत्र दत्तके जनकगोत्रेणापि व्यवहारः संभवति द्विविधव्यामुष्यायणे तत्रापि सगोत्रव्यामुष्यायणे प्रतिग्रहीतृगोत्रेणैव व्यपदेशः करणीयो न जनकगोत्रेणेत्यनेनोक्तं भवति ।

ननु सगोत्रस्य परिग्रहे परिग्रहविधिबलात्प्रतिग्रहीतृगोत्रसंबन्धो यद्यपि भवति तथाऽप्यवर्जनीयत्वाज्जनकगोत्रसंबन्धो वर्तत एव । स एव च प्रतिग्रहीतृगोत्रसंबन्ध इति कथं प्रतिग्रहीतृगोत्रेणैव व्यपदेशः संभवतीति चेत्सत्यम् । 'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा' ( म० स्मृ० ९ । १४२ ) इति दत्तकस्य जनकपितृसंबन्धिगोत्ररिक्थग्रहणनिराकरणात्पिण्डस्य च गोत्ररिक्थानुगामित्वाज्जनकपित्रे पिण्डदाननिषेधाज्जनकगोत्रादिष्वनाधिकारात्प्रतिग्रहीतुर्गोत्ररिक्थादिष्वधिकाराच्च प्रतिग्रहीत्रैव व्यपदेश इत्याशयः । एवं च 'तथा पितृव्येण भ्रातृव्येणेत्यादि प्रतिग्रहीतुरेवेत्यन्तं भाष्यं सगोत्रव्यामुष्यायणविषयम् । 'गोत्ररिक्थे०' इत्यादिमनुवचनं तु शुद्धदत्तकपरमिति भावः । एतदाशयमभिप्रेत्यैवाऽऽह—**यत्त्वित्यादि वेदितव्यमित्यन्तम्** । एवं 'दत्तकादीनां व्यामुष्यायणवत्' इतिसूत्रस्थशबरस्वामिभाष्येणानित्यव्यामुष्यायणादिषु जनकपितृगोत्रसंबन्धासंबन्धविचारः प्रदर्शितः । अथ नित्यव्यामुष्यायणे जनकगोत्रसंबन्धं प्रदर्शयितुमाह—**ये तु नित्यवद्व्यामुष्यायणा इति** । पारिजातस्मृतिमुदाहरति—**व्यामुष्यायणका**

द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शौङ्गशैशिरयोर्यथा ॥

इति पारिजातस्मरणात् । गोत्रद्वये—जनकगोत्रे परिग्रहीतृगोत्रे च । दत्तकादीनां च व्यामुष्यायणत्व इदं वचनं नित्यानां व्यामुष्यायणानामिति सत्याषाढवचनं च प्रमाणम् । प्रवरमञ्जर्यामप्यनेनैवाभिप्रायेणोक्तं दत्तकक्रीतकृत्रिमपुत्रिकापुत्रादीनां यथासंभवं गोत्रद्वयं सप्रवरमस्तीत्येतावता द्विगोत्राणां गोत्रद्वयं सप्रवरं

---

च इति । ये तु दत्तकक्रीतकृत्रिमपुत्रिकापुत्रस्वयंदत्तक्षेत्रजपुत्रा व्यामुष्यायणा नाम आवयोरयमिति संकल्प्य प्रतिगृहीतास्तेषां जनकगोत्रे प्रतिग्रहीतृगोत्रे च विवाहो न भवति । तत्र दृष्टान्तं प्रदर्शयति—शौङ्गेति । भारद्वाजाच्छुङ्गाद्विश्वामित्रस्य शैशिरस्य क्षेत्रे जातः शुङ्गशैशिरनामा ऋषिः । तद्गोत्राणां यथा भारद्वाजैर्विश्वामित्रैश्चेति गोत्रद्वये विवाहो न भवति तद्वद्द्विगोत्राणां गोत्रद्वयेऽनुद्वाह इत्यर्थः । अकारणिकस्य जनकगोत्रे विवाहनिषेधस्यासंभवाद्व्यामुष्यायणे जनकगोत्रसंबन्धो भवतीति सूचितम् । तदुपपत्तिस्तु पूर्वमुक्तैव ।

ननु दत्तकादीनां व्यामुष्यायणत्वे—जनकप्रतिग्रहीत्रोः पुत्रत्वे किं प्रमाणमिति जिज्ञासायामाह—इदमिति । सत्याषाढवचनं चेति । यदि च दत्तकादीनां व्यामुष्यायणत्वं सर्वथा न स्यात्किंतु प्रतिग्रहीतुरेव पुत्रत्वेन तदेकगोत्रभागित्वं स्यात्तदा पारिजातवचनं सत्याषाढवचनं च निर्विषयं स्यात् । किंचैकविधमेव व्यामुष्याणत्वं भवेच्चेत्सत्याषाढसूत्रे नित्यानामिति तद्विशेषणोपादानेन किं प्रयोजनं साधितं भवेत् । न किमपीति तेनानित्यव्यामुष्यायणत्वमपि सूचितं भवतीति भावः । निरुक्ताभिप्रायमनुसृत्यैव प्रवरमञ्जर्यां-दत्तकेत्यादि गोत्रद्वयं सप्रवरमस्तीत्युक्तम् । संगच्छत इति शेषः । प्रकरणार्थमुपसंहरंस्तत्पर्यवसितार्थमाह—एतावतेत्यादि विवाहे वर्ज्यमित्यन्तम् । एतावता ग्रन्थेन कोऽर्थः सिद्ध इति चेत्पृच्छसि तदाऽऽह—द्विगोत्राणां विवाहे गोत्रद्वयं वर्ज्यमित्यर्थः सिद्धः । ये तु न द्विगोत्राः किंत्वेकगोत्राः शुद्धदत्तकशब्दवाच्यास्तेषां न गोत्रद्वयवर्जनापेक्षेत्यर्थः फलित इत्यर्थः ।

संस्काररत्नमालायां भट्टगोपीनाथकृतायां धर्मसिन्धौ च विवाहे तु सर्वदत्तकेन बीजिप्रतिग्रहीतृपित्रोर्गोत्रप्रवरसंबन्धिनी कन्या वर्जनीयेत्युक्तम् । तस्यायमाशयः—दत्तकस्त्रिविधः । नित्यव्यामुष्यायणोऽनित्यव्यामुष्यायणः केवलश्चेति । त्रिविधानामप्येषां स्वरूपलक्षणानि पूर्वं प्रसङ्गत उक्तान्येव । त्रिविधेष्वप्येषु दत्तकविधिशास्त्रबलात्प्रतिग्रहीतृगोत्रं संबध्यत इत्यप्युक्तमेव । तत्र व्यामुष्यायणत्वं नाम गोत्रद्वयभागित्वम् । गोत्रद्वयभागित्वं च गोत्रद्वयसंबन्धः । गोत्रद्वयं च जनकपितृगोत्रमेकं द्वितीयं च

प्रतिग्रहीतृपितृगोत्रमित्येवं मिलित्वा द्वयम् । गोद्वयसंबन्धे च न गोत्रद्वयेन संस्कारो हेतुः । तथा सति तु गोत्रद्वयेन संस्कारोत्तरं गोत्रद्वयसंबन्धः, गोत्रद्वयसंबन्धोत्तरं च गोत्रद्वयेन संस्कार इत्यन्योन्याश्रयापत्त्या गोत्रद्वयसंबन्धो न घटेत । तथा च प्रथमदत्तके नित्यव्यामुष्यायण आवयोरयमिति संकल्पबलाज्जन्मतः सिद्धो जनकगोत्रसंबन्धोऽस्त्येव । नैतावदेव, किंतु स उत्तरत्र पुत्रपौत्रादितत्संततावप्यनुवर्तते । तदुक्तं धर्मप्रवृत्तौ—व्यामुष्यायणकस्यैव नोद्वाहो गोत्रयोर्द्वयोः । तदपत्यस्य तज्जन्मगोत्रमेव विदुर्बुधाः ॥ इति । तत्—व्यामुष्यायणस्य गोत्रद्वयं तत्संततेर्जन्मगोत्रमेव बुधा विदुरिति तदर्थात् । तथा च 'तावदेव नोत्तरसंततौ' इत्यनित्यव्यामुष्यायणसंततिविषयम् । प्राकृतस्यैवोपक्रमात् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायाच्च । तथा 'तेनैवोत्तरत्र' इत्यपि शुद्धदत्तकसंततिपरमेव । पूर्वोक्तयुक्तेरिति बोध्यम् । द्वितीयदत्तकेऽनित्यव्यामुष्यायणेऽपि जन्मतः सिद्धस्य तत्रापि जनककर्तृकचूडान्तसंस्कारैरभिव्यक्तस्य न ममेति त्यागेन सर्वथा निवृत्तेर्युक्त्यसहत्वेन मन्दप्रवृत्तिकस्य तस्यास्त्येव तत्र सत्त्वमिति स्थलद्वये गोत्रद्वयसंबन्धभागित्वरूपं व्यामुष्यायणत्वं सिद्धम् । मन्दप्रवृत्तिकत्वादेव च तदुत्तरत्र तत्संततौ प्रवर्तितुं नोत्सहत इत्यभिप्रेत्यैव 'तावदेव नोत्तरसंततौ' इत्युक्तं सत्याषाढमुनिना । दत्तकपर्यन्तमेव जनकगोत्रमनुवर्तते नोत्तरत्र तत्संतताविति तदर्थः । तथा चैतत्संततेः प्रतिग्रहीत्रेकगोत्रत्वमेव । तृतीये शुद्धदत्तके तु जनकगोत्रेण संस्कारविशेषाभावान्न ममेति त्यागाच्च दानान्तर्गतस्य जनकपितृस्वत्वस्य सर्वथा निवर्तनाज्जनकगोत्रसंबन्धो नास्तीति प्रतिग्रहीत्रेकगोत्रत्वमेवैतस्य । प्रथमव्यामुष्यायणस्य जन्मत आरभ्यैव गोत्रद्वयसंबन्धान्नित्यव्यामुष्यायणत्वेन शास्त्रे व्यवहारः । द्वितीयव्यामुष्यायणस्य चूडोत्तरं दानात्तदुत्तरं प्रतिग्रहीतृगोत्रसंबन्धेन जन्मत आरभ्य गोत्रद्वयसंबन्धाभावादनित्यव्यामुष्यायणत्वेन शास्त्रे व्यवहारः । तृतीयदत्तकस्थले तु जनकगोत्रसंबन्धः सर्वथा नास्तीति प्रागुपपादितमेव । अत एवायं शुद्धदत्तकः केवलदत्तक इति वा व्यवहृतः ।

ननु द्विविधेनापि व्यामुष्यायणेन पितृद्वयगोत्रप्रवरसंबन्धिनी कन्या विवाहे वर्जनीयेत्युक्तं तद्युक्तमेव । द्विविधस्यापि तस्य गोत्रद्वयसंबन्धस्योपपादितत्वात् । किंतु केवलदत्तकस्य पालकैकगोत्रस्य कुतः पितृद्वयगोत्रप्रवरसंबन्धिनी कन्या वर्जनीया भवेत् । तत्र जनकगोत्रासंबन्धस्योपपादितत्वादिति चेच्छृणु—असगोत्रा च या पितुः (म० स्मृ० ३ । ५) इति मनुवचने पितृपदेन प्रतिग्रहीतृपितृग्रहणाद्या प्रतिग्रहीतृरूपपितुः सगोत्रा न भवति तादृशी कन्या परिणेयेत्यर्थो यद्यभिप्रेतः स्यात्तर्हि 'असगोत्रा च याऽऽत्मनः' इत्येव वक्तव्ये 'असगोत्रा च या पितुः'

इत्युक्तेर्जनकगोत्रजा कन्या केवलदत्तकेनापि विवाहे वर्जनीयेत्यवगम्यते । उक्तस्थले जनकगोत्रजायाः कन्याया वरनिरूपितसगोत्रत्वाभावेऽपि वरपितृनिरूपितसगोत्रत्वस्य विद्यमानत्वात् । एतदर्थमेव ( पितृपदेन जनकपितृग्रहणार्थमेव ) हि 'असगोत्रा च या पितुः' इत्युक्तम् । अन्यथा 'असगोत्रा च याऽऽत्मनः' इत्येव वक्तव्यं स्यादित्युक्तमेव । पितुरिति पदस्याभावे तु प्रत्यासत्त्या वरनिरूपितसगोत्रत्वाभाववतीत्यर्थः स्यादिति जनकगोत्रजायाः कन्यायाः केवलदत्तकेन सह परिणयः स्यादित्यनिष्टमापद्येतेति तदाशयः ।

तथा 'असगोत्रा च या पितुः' इत्यत्रत्यपितृपदेन पितामहादयोऽपि गृह्यन्ते । पितामहादिपदासमभिव्याहृतस्य पितृपदस्य साक्षात्परम्परासाधारण्येन जनकमात्रे पुंसि रूढत्वात् । पितरो यत्र पूज्यन्ते, यावन्तः पितृवर्गाः स्युः, इत्याद्यनेकस्मृतिषु पितृशब्देन पितामहादीनां ग्रहणस्य दर्शनाच्च । तथा च केवल( शुद्ध )दत्तकपुत्रेणापि स्वपितामहस्य ( स्वसाक्षात्पितृजनकस्य ) यद्गोत्रं तद्गोत्रजायाः कन्यायाः परिवर्जनं कार्यमेव । अनित्यद्व्यामुष्यायणस्य यः पुत्रस्तस्य तु साक्षात्पितृगोत्रवर्जनेनैव सिद्धिः । अनित्यद्व्यामुष्यायणे जनकपितृगोत्रसंबन्धसत्त्वात् ।

नन्वनित्यद्व्यामुष्यायणपुत्रस्य केवलदत्तकस्य च जनकगोत्रोद्भवा कन्या पितुः सगोत्रा भवेत् । अनित्यद्व्यामुष्यायणपौत्रादेः केवलदत्तकपुत्रपौत्रादेश्च दत्तकजनकपितृगोत्रजा कन्या कथं पितुः सगोत्रा भवेदिति चेद्भ्रान्तोऽसि । 'असगोत्रा च या पितुः' इत्यत्रत्यपितृपदेन पितामहप्रपितामहादेरपि ग्रहणस्याधुनैवोपपादितत्वात् । एतदनुसंधायैवोक्तमुपक्रमे 'विवाहे तु सवदत्तकेनेत्यादि' ।

अत्रायं निर्गलितोऽर्थः—पूर्वोक्तानां त्रयाणां दत्तकानां मध्ये प्रथमो नित्यद्व्यामुष्यायणो बलवत्संबद्धजनकपितृगोत्रः । बलवत्संबन्धादेव च तदुत्तरत्र तत्संततौ पुत्रपौत्रादौ शततमपुरुषपर्यन्तमप्यभिसंबध्यते । एतदभिप्रेत्यैवोक्तम् 'तदपत्यस्य तज्जन्मगोत्रमेव विदुर्बुधाः' इति । तथा च प्रथमदत्तकेन तत्पुत्रपौत्रादिना चाभिवादनश्राद्धादौ गोत्रद्वयमुल्लेखनीयम् । संस्कारास्त्वस्य दत्तकस्य सर्वे प्रतिग्रहीतृगोत्रेणैवेत्युक्तं तल्लक्षणे । पुत्रपौत्राद्येतत्संततेः संस्कारास्तु गोत्रद्वयेन कार्याः । विवाहे त्वनेन पुत्रपौत्रादिना च गोत्रद्वयं परिवर्जनीयम् । द्वितीयोऽनित्यद्व्यामुष्यायणस्तु शिथिलसंबद्धजनकपितृगोत्रः । शिथिलसंबन्धादेव च तदुत्तरत्र तत्संततौ पुत्रपौत्रादौ नाभिसंबन्धुमुत्सहते । अत एव 'तावदेव नोत्तरसंततौ' इत्युक्तं सत्याषाढेन । तथा चास्य चूडान्तसंस्काराणां जनकगोत्रेणोपनयनादिसंस्काराणां च प्रतिग्रहीतृगोत्रेण जातत्वाद्गोत्रद्वयसंबन्धवताऽनेनाभिवादनश्राद्धादौ गोत्रद्वयोल्लेखः कार्यः । एतत्संततेः

पुत्रपौत्रादेर्जनकगोत्रसंबन्धाभावेनाभिवादनश्राद्धादौ न गोत्रद्वयोल्लेखो नापि गोत्रद्वयेन संस्काराः ' अपि तु प्रतिग्रहीतृगोत्रस्यैकस्यैव संबन्धात्तस्यैवोल्लेखस्तेनैव च सर्वे संस्काराः कार्याः । विवाहे त्वनेनैतत्पुत्रपौत्रादिना च गोत्रद्वयं परिवर्जनीयम् । तृतीयः केवलदत्तकः सर्वथाऽसंबद्धजनकपितृगोत्रः। सर्वथाऽसंबन्धादेव च तदुत्तरत्र तत्संततौ पुत्रपौत्रादौ सुतरां नाभिसंबध्यते । अत एव ' गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः ' इत्युक्तम् । तथा चैतस्यैतत्संततेः पुत्रपौत्रादेश्च प्रतिग्रहीत्रेकगोत्रत्वमेव। अत एव चास्यैतत्संततेश्च संस्कारा यथायथं प्रतिग्रहीतृगोत्रेणैव, प्रतिग्रहीतृगोत्रस्यैव चाभिवादनश्राद्धादावुल्लेखो भवति । नात्र जनकगोत्रस्येषदपि संबन्धः । विवाहे त्वनेनैतत्पुत्रपौत्रादिना च गोत्रद्वयं परिवर्जनीयमेव। 'असगोत्रा च या पितुः ' इत्युक्तत्वात्तत्र च पितृपदेन पितामहादेरपि ग्रहणाच्चेति ।

अत्र केचिदित्थमाहुः—' असगोत्रा च या पितुः ' इत्यत्रत्यपितृपदेन तदपेक्षया पूर्वेषां पितामहादीनां ग्रहणे प्रमाणं न दृश्यते। यत्र तु ' पितरो यत्र पूज्यन्ते ' इत्यत्र पितामहादीनां ग्रहणं दृश्यते । तत्र ' पितरः ' इति बहुवचनबलात्तद्युक्तम् । अन्यथा बहुवचनानुपपत्तिः । ' यावन्तः पितृवर्गाः स्युः ' इत्यत्रापि वर्गशब्दबलात्पितामहादीनां ग्रहणम् । वर्गशब्दश्च सजातीयसमूहवाचकः । ' वृन्दभेदाः समैर्वर्गः ' इत्यमरकोशात् ।' प्रकृतस्थले ' असगोत्रा च या पितुः ' इत्यत्र न बहुवचनं नापि वर्गग्रहणम् । तथा च नित्यव्यामुष्यायणसंततौ शततमेनापि विवाहे गोत्रद्वयं परिपालनीयमिति युक्तम् । तत्र जन्मन आरभ्यैव गोत्रद्वयसंबन्धसत्त्वात् । अनित्यव्यामुष्यायणदत्तकस्थले तु तेन व्यामुष्यायणदत्तकेन साक्षात्तत्पुत्रेण च विवाहे गोत्रद्वयं परिपालनीयम् । व्यामुष्यायणस्य स्वत एव गोत्रद्वययुक्तत्वात् । चूडान्तसंस्कारानुष्ठानेन जनकगोत्रसंसर्गस्य, प्रतिग्रहविधिबलात्पालकगोत्रसंसर्गस्य च तत्र विद्यमानत्वात् । साक्षात्तत्पुत्रस्य तु तावदेव नोत्तरसंतताविति जनकगोत्रसंसर्गनिषेधेन पालकैकगोत्रस्यैव संसर्गेऽपि ' असगोत्रा च या पितुः ' इति वचनानुसंधानेन पितुरसगोत्रया सहैव विवाहसंस्कारस्यानुष्ठातव्यतया पितुरनित्यव्यामुष्यायणदत्तकस्य च द्विगोत्रत्वाद्गोत्रद्वयपरिपालनस्याऽऽवश्यकत्वात् । तादृशानित्यव्यामुष्यायणस्य यः पौत्रस्तेन तत्पुत्रपौत्रादिना च गोत्रद्वयपरिपालने न किंचिद्बीजं दृश्यते । केवलदत्तकस्थले च जातकर्मादिसंस्काराणां चूडादिसंस्काराणां वा पालकगोत्रेणैव संपादितत्वाज्जनकगोत्रस्यात्यन्तासंबन्धेन तस्य पालकैकगोत्रत्वेऽपि तेन विवाहे गोत्रद्वयपरिपालनं करणीयमेव। जनकपितृगोत्रोद्भवायाः कन्यायाः पितुरसमानगोत्रत्वाभावात् । तादृशकेवलदत्तकस्य यः पुत्रस्तेन तत्पुत्रपौत्रादिभिश्च गोत्रद्वयपरिपालने न किंचिन्मूलमित्युक्तं धर्मतत्त्वनिर्णयपरिशिष्टे गुरुचरणैरित्यलं प्रसक्तानुप्रसङ्गेन ।

विवाहे वर्ज्यमिति । शाखाऽपि प्रतिग्रहीतुरेवेत्याह वसिष्ठः—

अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः ।
स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक् ॥ इति ।

स्वस्य प्रतिग्रहीतुः शाखा यस्मिन्कर्मणि तत्स्वशाखं कर्म तद्भजतीति स्वशाखभागिति प्रतिग्रहीतृशाखीयमेव कर्म तेन कर्तव्यमित्यर्थः । दत्तकादीनां मातामहा अपि प्रतिग्रहीत्री या माता तत्पितर एव पितृन्यायस्य मातामहेष्वपि समानत्वात् ।

यत्तु मातामहश्राद्धविधेर्मुख्यमातामहविषयत्वमेवेति हेमाद्रिणाऽभिहितम् ।

---

दत्तकेन प्रतिग्रहीतुर्या शाखा तदुक्तमेव कर्म कर्तव्यमिति विधातुमाह वसिष्ठः—**अन्यशाखोद्भव इति** । प्रतिग्रहीतुर्या शाखा तदपेक्षया भिन्ना या शाखा तच्छाखोद्भवो दत्तः पुत्रः, प्रतिग्रहीत्रा स्वगोत्रेण स्वशाखोक्तविधिना कृतोपनयनः स्वशाखभाक्—स्वस्य प्रतिग्रहीतुः शाखा यस्मिन् कर्मणि तत्स्वशाखं कर्म तद्भजतीति स्वशाखभाक् । प्रतिग्रहीतृशाखीयं कर्म दत्तकेन कर्तव्यमिति भावः । यथा दत्तकेन श्राद्धादौ पालकपितृपितामहप्रपितामहादय एव गृह्यन्ते न स्वजनकपित्रादयस्तथा मातामहादयोऽपि प्रतिग्रहीत्री या माता तस्याः पित्रादय एव ग्राह्या न स्वजनन्याः पित्रादय इत्याह—**दत्तकादीनामिति** । **पितृन्यायस्येति** । दत्तकेन श्राद्धादिकर्मसु किं जनकपितृपितामहप्रपितामहा निर्देश्या अथवा पालकपितृपितामहप्रपितामहाः ? इत्याकाङ्क्षायां 'गोत्ररिक्थे०' ( म० स्मृ० ९ । १४२ ) इति वचनेन दत्तकस्य जनकपितृगोत्ररिक्थग्रहणापिण्डदानानाधिकारित्वस्योक्तत्वात्पुत्रत्वापादकदत्तकपरिग्रहविधिबलादेव च प्रतिग्रहीतुर्गोत्ररिक्थपिण्डेष्वधिकारावगमाच्च पालकपित्रादय एव गृह्यन्ते न जनकपित्रादयः । सोऽयं पितृन्यायः । तादृशस्य पितृन्यायस्य मातामहेष्वपि तुल्यप्रवृत्तिकत्वादित्यर्थः । अयं भावः—दत्तकेन किं जनन्याः पित्रादयो मातामहादित्वेन ग्राह्याः किंवा पालकमातुः पित्रादयः ? इति वीक्षायां पालकपित्रादिग्रहणवत्पालकमातुः पित्रादय एव मातामहत्वेन ग्राह्या न जनन्याः पित्रादय इति । दत्तकसंबन्धिमातामहविषये हेमाद्रिमतस्यायुक्ततां प्रतिपादयितुं तन्मतमनुवदति—**यत्तु मातामहेत्यादिना** । दत्तककर्तृको मातामहविषयको यः श्राद्धविधिः, अथ ते मातामहास्तत्र स्वतन्त्रतयाऽङ्गिनो वा सन्तु किंवा परतन्त्रतयाऽङ्गभूता वा सन्तु, स सर्वोऽपि 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायेन मुख्यमातामहविषयकः । मातामहपूजाप्रसङ्गे दत्तकेन साक्षाज्जनन्याः पितृपितामहप्रपितामहा एव मातामहत्वेन पूज्याः, न प्रतिग्रहीत्र्या मातुः पित्रादय इत्यर्थः । आभि-

तन्न । व्यपैति ददतः स्वधेति वचनविरोधात् । न च मातामहानां दातृत्वाभावः । बन्धनाहूयेत्यनेन दानसंमतिकरणेन तेषामपि दातृत्वात् । किंच श्राद्धे गोत्ररिक्थानुगः

---

नशुक्लप्रतिपदि दौहित्रेण क्रियमाणं संवत्सरे क्रियमाणं वा मातामहश्राद्धं मातामहाह्निकम् । महालयनान्दीश्राद्धादौ क्रियमाणं मातामहश्राद्धं तु मातामहाङ्गकम् । एवं च मातामहविषये पितृन्याययोजनं न युक्तमिति हेमाद्रिणोक्तम् । पितृविषये गौणमुख्यन्यायस्तु न प्रवर्तते । ' गोत्ररिक्थे० ' ( म० स्मृ० ९ । १४२ ) इति बाधितत्वादिति तद्भावः । तन्न युक्तिसहमित्याह–तन्नेति । अयुक्तत्वे वचनविरोधं हेतुत्वेन निर्दिशति–व्यपैतीति । ' व्यपैति ददतः स्वधा ' ( म० स्मृ० ९ । १४२ )। पुत्रं ददतो जनकस्य स्वधा पिण्डश्राद्धादि, दत्तको यः पुत्रस्तादृशपुत्रकर्तृकं निवर्तेत इति तदर्थः । अनेन दत्तकेन स्वदातुर्जनकस्य श्राद्धादि न कर्तव्यमिति निषिध्यते । तत्र यदि दत्तकेन श्राद्धे जनन्याः पित्राद्यो मातामहत्वेन गृह्येरंस्तदा मनुवचनविरोधः स्पष्ट एव । अत्र ददत इति सामान्यत उक्तत्वाद्दत्पदेन न केवलं पिता गृह्यते, किंतु जनककुलसंबद्धा मातामहादयोऽपि गृह्यन्त इति मनुवचनविरोधं प्रदर्शयितुः सिद्धान्तिन आशयः । ददत इत्यविशेषोक्त्या जनककुलसंबद्धा मातामहास्तदा गृह्येरन्यदा तेषां जनकपितुरिव दातृत्वं स्यात् । तच्च तेषां नास्तीति हेमाद्रिमतेनाऽऽशङ्क्य तन्निराकर्तुं तेषां दातृत्वं साधयन्नाह–बन्धूनाहूयेति । मातापितृसंबन्धिनो मातामहमातुलपितृव्यादीन् । नन्वाह्वानेन संनिधानेऽपि कथं तेषां दातृत्वमित्याशङ्क्याऽऽह–दानसंमतिकरणेनेति । पुत्रदाने स्वयमेव प्रवृत्तस्य पितुरनुमोदनदानेन मातामहादीनां दातृत्वमित्यर्थः । यथोक्तमापस्तम्बेन–' प्रयोजयिताऽनुमन्ता कर्ता चेति स्वर्गनरकफलेषु कर्मसु भागिनो यो भूय आरभते तस्मिन् फलविशेषः ' इति । अत्र कर्मणोऽनुमन्तुस्तादृशकर्मभागित्वं यथा भवति तद्वत्पुत्रदानकर्मणोऽनुमन्तॄणां तेषां पुत्रदानकर्तृत्वं भवतीत्यर्थः । अनुमननस्य दानहेतुत्वादनुमन्तुर्दातृत्वमिति तात्पर्यम् । नन्वनुमननस्य कथं दानहेतुत्वम् । अनुमननस्य हि स्वयमेव प्रवृत्तस्य प्रवृत्तिकरणरूपत्वात् । तथा च पुत्रदाननिष्पादनेन तद्धेतुत्वमिति चेन्न । पुत्रदानस्य साक्षान्मातापितृव्यापारैरेव जन्यत्वात् । ' शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः ' इति वसिष्ठस्मरणात् । साक्षात्प्रयोज्यकर्तृप्रवृत्त्युत्पादनद्वारेण प्रयोजकस्य कर्तृत्वमिव साक्षाद्दातुः पुत्रदाने प्रवृत्त्युत्पादनद्वारेणानुमन्तुः पुत्रदातृत्वमित्यपि न । नहि प्रयोजकेन प्रयोज्यकर्तुः स्वयमप्रवृत्तस्य प्रवृत्त्युत्पादनवदनुमन्त्रा पुत्रदाने

पिण्डो व्यपैति, इत्यनेन गोत्ररिक्थयोर्निमित्ततापतिपादनाद्दत्तकस्य च पितृरिक्थ-स्येवं मातामहरिक्थस्याप्यपेतत्वान्न पूर्वमातामहश्राद्धाधिकार इति युक्तम्। अत एवास्वरसाद्गौणमातामहादीनामपि गौणपितृवच्छ्राद्धं कर्तव्यमिति हेमाद्रिरेव पक्षा-न्तरमुपन्यस्तवान्। युक्तं चैतदेव। दत्तकस्यौरसप्रतिनिधितयौरसकार्यकर्तृत्वेनौर-सकर्तृकश्राद्धदेवतोद्देश्यकश्राद्धकर्तृत्वमेव सिध्यति। प्रतिग्रहीतृपितृगोत्रशाखाकुल-

---

स्वयमप्रवृत्तस्य दातुः प्रवृत्तिः कृता, येन प्रयोजकस्य कर्तृत्ववदनुमन्तुः पुत्रदातृत्वं स्यात्। यतोऽनुमन्तुः, स्वयमेव प्रवृत्तं प्रति प्रवर्तकत्वात्। न च साधु त्वयाऽध्य-वसितं यत्पुत्रदाने मतिर्बद्धेत्येवं प्रवृत्तमेवानुमन्यत इति शङ्क्यम्। एतादृशस्यानु-नुमननस्य पुत्रदानं प्रत्यहेतुत्वाद् व्यर्थत्वाच्चेति चेदुच्यते–यत्र हि यः स्वयं मनसा प्रवृत्तोऽपि राजादिपारतन्त्र्यवशात्प्रवृत्तिविच्छेदशङ्कया भाव्यापच्छिशङ्कया वा शिथि-लप्रयत्नो भवति राजाद्यनुमतिं चापेक्षते तत्रानुमतिर्दातुः प्रवृत्तिमुपोद्बलयन्ती सती पुत्रदानहेतुर्भवत्येवेति। एतदाशयमनुसंधायैवाऽऽपस्तम्बेन ‘ प्रयोजयिताऽनुमन्ता ’ इति सूत्रेणानुमन्तुः स्वर्गनरकफलककर्मभागित्वमुक्तम्। तत्रैतावान् विशेषः–अनुमन्तुः स्वल्पफलं भवति। साक्षात्कर्तुस्त्वधिकं फलं जायते। ‘ यो भूय आरभते तस्मि-न्फलविशेषः ’ इति तेनैव तत्रैवोक्तत्वादिति बोध्यम्।

किंच ‘ गोत्ररिक्थानुगः पिण्डो व्यपैति ’ ( म० स्मृ० ९। १४२ ) इति मनुना श्राद्धे गोत्ररिक्थयोर्निमित्तत्वप्रतिपादनाद्दत्तकपुत्रस्य च जनकपितृरिक्था-नधिकारवज्जनकमाताहमरिक्थेऽप्यनधिकारान्न जनकमातामहश्राद्धेऽधिकार इति युक्त-मुत्पश्यामः। अत एवेति। जनकपितृरिक्थभागित्वाभाववन्मुख्यमातामहरिक्थभागि त्वाभावाद्दत्तकस्य मुख्यमातामहश्राद्धाधिकारप्राप्त्यभावादेव। तदुद्देश्यकश्राद्धाधिकारप्राप्तौ तद्रिक्थग्राहित्वस्य हेतुत्वान्मातामहरिक्थभागित्वरूपहेत्वदर्शनाद्दत्तकस्य मुख्यमातामहश्रा-द्धाधिकारात्यन्तासंभवरूपामरुचिं पश्यन् हेमाद्रिर्येन हेतुना दत्तकेन गौणपितुः–पाल-कपितुः श्राद्धं क्रियते तेन हेतुना गौण( पालक )मातामहादीनामपि श्राद्ध-मनुष्ठेयमिति पक्षान्तरं स्वयमेवोक्तवानित्यर्थः। युक्तं चैतदेवेति। दत्तकेन गौणमा-तामहादीनामेव श्राद्धकरणं युज्यत इत्यर्थः। युक्तत्वमेव प्रतिपादयितुं दत्तकस्ये-त्यादिग्रन्थमवतारयति–औरसप्रतिनिधीति। ‘ क्षेत्रजादीन् सुतानेतानेकादश यथो-दितान्। पुत्रप्रतिनिधीनाहुः ’ ( म० स्मृ० ९। १८० ) इति मनूक्तेरिति भावः। अनेन दत्तकस्यौरसप्रतिनिधित्वं कण्ठरवेणोक्तमिति न तत्र मनागपि विवादः। मुख्याभावे तत्कार्यकारी हि प्रतिनिधिः। तथा चौरसेन यानि कार्याणि कर्त-व्यानि तानि दत्तकेन निर्व्योढव्यानि। यदि च पालकपितुरौरसः पुत्रो जातः

देवताकुलधर्मान्वयवत्प्रतिग्रहीतृपित्राद्यन्वयाविशेषात् ।

'वाञ्छन्ति पितरः पुत्रान् गयां यास्यति यः सुतः'

इत्यादौ पुत्रपदाविशेषात् । किंच प्रतिग्रहीत्र्या मातुरासुरादिविवाहोढात्वे—

'पिता पितामहे योज्यः संपूर्णे वत्सरे सुतैः ।

माता मातामहे योज्या इत्याह भगवान् यमः' ॥

---

स्यात्तदा तेनौरसेन स्वमातामहस्य श्राद्धं कृतं स्यादिति दत्तकेनापि गौणमातामहस्य श्राद्धं कर्तव्यं भवति । एवं च मातामहश्राद्धविषये गौणमातामहा एव दत्तकस्य गले पतन्ति । गोत्रं, शाखा, कुलदेवता, कुलधर्मश्चेत्यादिकं सर्वं गौणपितृसंबन्धि यथा दत्तकगले पतति तद्वत् । यथौरसपुत्रे पितुर्गोत्रशाखादेरन्वयोऽस्ति तथा दत्तकेऽपि तद्गोत्रशाखादेरन्वयसत्त्वादिति भावः । **वाञ्छन्तीति** । आत्मने पिण्डोदकदानार्थं पितरः पुत्रान वाञ्छन्तीत्यर्थः । यस्यौरसः पुत्रो नास्ति तेन पिण्डाद्यकार्थं पुत्रप्रतिनिधिः क्रियते । ततश्च प्रतिनिधिपुत्रेण प्रतिग्रहीतृपितुः श्राद्धं कर्तव्यमिति सिध्यति । **गयां यास्यतीति** । गयाश्राद्धार्थमपि पुत्रं वाञ्छन्तीति यावत् । यस्यौरसः पुत्रो नास्ति तेनापि गयाश्राद्धार्थं पुत्रप्रतिनिधिः कर्तव्यो भवति । गयाश्राद्धे च सर्वपितॄणामुद्देश्यत्वान्मातामहा अपि तादृशश्राद्ध उद्देश्या भवन्ति । ततश्च गयाश्राद्धोद्देशेनापि पुत्रग्रहणं सिध्यति । एवं चाऽऽत्मनः पिण्डोदकाद्युद्दिश्य दत्तकस्य गृहीतत्वात्तेन दत्तकेन यथा प्रतिग्रहीतुरेव श्राद्धं क्रियते न जनकपितुरेवं गयाश्राद्धोद्देशेन दत्तकस्य गृहीतत्वात्तेन दत्तकेन गयाश्राद्धमपि प्रतिग्रहीत्रुद्देशेन कर्तव्यं भवति । यच्छ्राद्धोद्देशेन दत्तकः परिगृह्यते, परिगृहीतेन तेन दत्तकेन प्रत्यासत्त्या तदुद्देशेनैव श्राद्धं कर्तव्यमिति नियम इति यावत् । गयाश्राद्धस्य च सर्वपित्रुद्देश्यत्वात्तदन्तर्गता मातामहा अपि प्रतिग्रहीतृसंबन्धा एव ग्राह्या न जनकपितृसंबन्धा इत्यर्थादेवाऽऽयातीति भावः ।

अन्यच्च—**पिता पितामहे योज्य इति** । पितुर्मातुश्च मरणानन्तरं वर्षान्ते सपिण्डीकरणवेलायां सुतैः पितुः स्वपितामहे संयोजनं कार्यं, तथा मातुः स्वमातामहे संयोजन कार्यं नतु पितामह्यादाविति तदर्थः । इदं च स्वमातुः स्वमातामहे संयोजनं मातुरासुरराक्षसादिविवाहेन परिणीतत्वे दत्तकस्य च संयोजकत्वे सत्येव बोध्यम् । तेन यत्र मातुरासुरादिविवाहोढात्वं संयोजकस्य चौरसत्वं, यत्र वा संयोजकस्य दत्तकत्वं मातुश्च नाऽऽसुरादिविवाहोढात्वं तत्र मातुर्न मातामहे संयोजनं किंतु पितामह्यामेवेति सिध्यति । तथा च यदा दत्तकः प्रतिग्रहीत्र्या मातुः सपिण्डनं चिकीर्षति सा च प्रतिग्रहीत्री माताऽऽसुराद्यूढा चेत्स्यात्तदा तेन दत्तकेन तादृश्या मातुः

इत्यादिविहितसपिण्डीकरणे पालकमातृपितुरेव मातामहत्वेनान्यत्रापि श्राद्धे

---

संयोजनं मातामहेन सह कर्तव्यम् । मातामहश्च तत्र पालकमातुः पितैव गृह्यते ।

ननु मातामहेन संयोजनं कार्यमित्युक्तौ मातामहशब्दस्य संबन्धिशब्दत्वात्संबन्धिनश्च प्रतिसंबन्धिसापेक्षत्वात्कस्य मातामहेनेत्याकाङ्क्षायां प्रत्यासत्त्या संयोजकस्य मातामहेनेति वक्तव्यम । संयोजकश्चात्र दत्तकः । दत्तकस्य च द्विविधो मातामहः । प्रतिग्रहीत्र्या मातुः पिता, जनन्या मातुः पिता चेति । तत्कथं प्रतिग्रहीत्र्या मातुः पितैव मातामहपदेन गृह्यत इति चेद्भ्रान्तोऽसि । मातामह इत्यस्य मातुः पितेत्यर्थः । मातुः पितृत्वं च पुत्रनिरूपितमातृत्वसमानाधिकरणं यज्जन्यस्त्रीत्वं तन्निरूपितजनकत्वम् । मातृत्वं च मुख्यं गौणं चेति द्विविधम् । तथा च मुख्यमातृत्वसमानाधिकरणजन्यस्त्रीत्वजनक एकोऽपरश्च गौणमातृत्वसमानाधिकरणजन्यस्त्रीत्वजनक इति द्विविधो मातामहः । तत्र यदा पुत्रस्य गौणपुत्रत्वपुरस्कारेण संस्कर्तृत्वं तत्र तादृशेन संस्कर्त्रा संस्कार्या माताऽपि गौण्येव गृह्यतेऽतो मतामहोऽपि गौण एव गृह्यताम् । संबन्धसामञ्जस्यात् । यदि तादृशस्थले मुख्यमातामहो गृह्येत नहि स तादृश्या मातुः पिता भवतीति संबन्धवैषम्यमापद्येत । यदा तु दत्तक एवाधिकार्यन्तराभावाज्जनन्या मातुः संस्कारं करोति तदा न गौणत्वपुरस्कारेण, किंतु मुख्येनौरसत्वरूपेण करोतीति तत्र माताऽपि मुख्यैव मातामहोऽपि मुख्य एव ग्राह्यः । संबन्धैकरूप्यात् । न तु गौणः । संबन्धवैरूप्यात् । प्रकृतस्थले संयोजको दत्तको गौणपुत्रः । संयोज्या माताऽपि प्रतिग्रहीत्री गौण्येवेति तादृश्या मातुः पिता गौणमातामह एवाऽऽयातः । मातृद्वारेणैव मातामहस्य मुख्यत्वं गौणत्वं चेत्यर्थः । यथा मातुर्भ्राता सोदरो मातुलः । सा च माता सापत्नमाता चेत्तर्ह्येव तस्यास्तादृशो भ्राता सापत्नमातुल इति व्यवह्रियते । मातुले सापत्नत्वस्य मातृद्वारेणैव स्वीकृतत्वात् । अत एव मुख्यमातुः सापत्नभ्राता न सापत्नमातुल उच्यते । तत्र सापत्नत्वस्य स्वमातुः सापत्नमातृद्वारकत्वेन स्वमातृद्वारकत्वाभावात् । तद्वत्प्रकृते मातृद्वारकं मातामहस्य गौणत्वं मुख्यत्वं च बोध्यमित्यर्थः । तथा च यथा तादृशमातुः सपिण्डीकरणे मातामहपदेन पालकमातुः पितैव गृह्यते तद्वदन्यस्मिन्नपि श्राद्धे पालकमातुः पितुरेव श्राद्धदेवतात्वेन ग्रहणमुचितमिति यावत् । अत्र तद्वदित्यस्य सांदृष्टिकन्यायादित्यर्थः । सांदृष्टिकन्यायो नाम यत्र प्रत्यक्षतो यद्दृष्टं तदनुसारेणैवान्यत्रापि तथाऽर्थनिर्णयकरणम् । दृष्टानुसारेणार्थनिर्धारणमिति यावत् । संदृष्टादागतः सांदृष्टिकः । अध्यात्मादित्वाट्ठञ् । अथवा संदृष्टौ भवः सांदृष्टिकः । पूर्ववट्ठञ् । संदृष्टं प्रत्यक्षदृष्टम् । यथा दत्तकपुत्रकर्तृके पालकमातुः सपिण्डनश्राद्धे पालकमातुरेव पिता मातामहत्वेन दृष्ट इति

तद्देवतात्वौचित्यात् । तथा दत्तकादीनां परिवेत्त्रादिदोषोऽपि न ।

भिन्नोदरे च दत्ते च पितृव्यतनये तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

इति गौतमस्मरणात् । भिन्नोदर इति सापत्नभ्रात्रोरन्यतरस्य विवाहादौ न परिवेत्त्रादिदोष इत्येतदर्थम् । दत्ते चेति जनककुले ज्येष्ठभ्रातृसत्त्वेऽपि न दत्तस्य

---

तदनुसारेण दत्तककर्तृके पालकपितृोद्देश्यके सपिण्डनव्यतिरिक्तश्राद्धेऽपि मातामहप्रसङ्गे पालकमातुरेव पिता मातामहत्वेन गृह्यते, नतु जनन्या मातुः पिता मातामहत्वेन तत्र गृह्यते । येन न्यायेन पालकमातुरेव पिताऽत्र मातामह इति निर्धारितं सोऽयं सांदृष्टिकन्याय इति ज्ञेयम् । ज्येष्ठं सोदरं परित्यज्य दारानग्नींश्च यो लब्धवांस्तादृशोऽनुजभ्राता परिवेत्ता । ज्येष्ठश्च परिवित्तिरिति शास्त्रे परिवित्तिपरिवेत्तृत्वदोषः स्मृतः । दोषस्यानिष्टफलमपि मनुनोक्तम्—परिवित्तिः परिवेत्ता यया च परिविद्यते । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ( म० स्मृ० ३ । १७२ ) इति ।

सोऽपि दोषो दत्तकादीनां नास्तीति प्रतिपादयंस्तत्र प्रमाणमार्षं वचनं पठति—**भिन्नोदर इति** । इयं गौतमस्मृतिः । ज्येष्ठकनिष्ठयोर्भ्रात्रोर्भिन्नोदरप्रभवत्वे सति परस्परं सापत्नसंबन्धे सतीति यावत् । ज्येष्ठस्य सापत्नभ्रातुर्दाराग्निहोत्रग्रहणमन्तराऽपि यत्कनिष्ठस्य सापत्नभ्रातुर्दाराग्निहोत्रग्रहणं न तत्परिवेत्तृत्वादिदोषावहमित्यर्थः । तथा ज्येष्ठपुत्रदानस्य निषेधात्कनिष्ठः पुत्रो दत्तः । तत्र जनककुलावस्थितेन ज्येष्ठभ्रात्रा दारादिपरिग्रहमकृत्वैव यदि दत्तः कनिष्ठो दारादिपरिग्रहं कुर्यात्तदाऽपि न दत्तकस्य परिवेत्तृत्वदोषः । नापि वा जनककुलावस्थितस्य दत्तकापेक्षया कनिष्ठस्य विवाहादौ दत्तकस्य पारिवित्त्यदोषो भवति । अथवा दत्तकग्रहणानन्तरं यद्यौरसो जातः, स औरसः स्वभ्रातुर्ज्येष्ठस्य दत्तकस्य विवाहादिभवनात्प्रागेव यदि स्वस्य विवाहादिकं कुर्यात्तदाऽपि निरुक्तो दोषो न भवतीत्यर्थः । **पितृव्यतनय इति** । अत्र यः पुत्रः स्वेनोरसा निर्मितोऽपि न स्वस्य पुत्रो भवति, किंतु स्वभ्रातुः पुत्रो भवति तादृशः पितृव्यपुत्रो ग्राह्यः । क्षेत्रजः पुत्र इति यावत् । स हि देवदत्तेनोरसा निर्मितोऽपि न देवदत्तपुत्रो भवति, किंतु स्वभ्रातुर्यज्ञदत्तस्य क्षेत्र उत्पादितत्वाद्यज्ञदत्तस्य क्षेत्रजपुत्रो भवति । तदेतदाह—**देवरेणेत्यादि** । देवरेणोत्पादितः, अर्थात्स्वभ्रातुः क्षेत्रे । यज्ञदत्तस्य क्षेत्रजपुत्रः, अथ च देवदत्तस्यौरसः पुत्रः । तयोर्मध्य औरसो ज्येष्ठः । क्षेत्रजस्तु तदपेक्षया कनिष्ठः । औरसपुत्रनिरूपितं पितृव्यपुत्रत्वं क्षेत्रजे क्षेत्रजपुत्रनिरूपितं पितृव्यपुत्रत्वमौरस इत्युभयोर्मिथः पितृव्यपुत्रत्वम् । एवं सत्यौरसविवाहात्प्राक् क्षेत्रजस्य विवाहादौ सति न क्षेत्रजस्य परिवेत्तृत्वदोषः । नापि वा तद्वैपरीत्येन ज्येष्ठकनिष्ठयोः सतोरौरसस्य प्राग्विवाहादौ सति क्षेत्र-

विवाहादौ परिवेत्तृत्वम् । नापि कनिष्ठविवाहादौ ज्येष्ठस्य परिवित्तित्वमित्येतद-र्थम् । पितृव्यतनय इति देवरेणोत्पादितस्य भ्रातुः क्षेत्रजपुत्रस्य विवाहादौ देवर-पुत्रस्य न परिवित्तिपरिवेत्तृत्वादिदोषो देवरपुत्रविवाहादौ वा क्षेत्रजस्येत्येतदर्थम् । न यथाश्रुतपितृव्यपुत्राभिप्रायम् । परिगृहीतस्य दत्तपदेनैवोपादानादपरिगृही-

---

जस्य परिवित्तित्वदोष इति बोधयितुं पितृव्यतनय इत्युक्तम् ।

ननु देवदत्तस्यौरसः पुत्रश्चैत्रः । तथा देवदत्तभ्रातुर्यज्ञदत्तस्यौरसः पुत्रो मैत्रः । तत्र चैत्रमैत्रौ परस्परं ममायं पितृव्यपुत्र इति व्यवहरत एव । अथवा देवदत्तस्य द्वितीय औरसो हरस्तद्भ्रात्रा यज्ञदत्तेन पुत्रीकृतः । तत्रापि चैत्रह-रयोर्मध्ये ममायं पितृव्यपुत्र इति मिथः संबन्धोल्लेखो दृश्यते । तथा च तादृ-शस्थले ज्येष्ठपरित्यागेन कनिष्ठस्य विवाहादौ सति तत्र परिवित्तित्वा-दिदोषाभावप्रतिपादनार्थं 'पितृव्यतय' इति किं न स्यादित्याशङ्क्याऽऽह— **न यथाश्रुतपितृव्यपुत्राभिप्रायमिति** । उपर्युक्तद्विविधपितृव्यपुत्रविषये दोषाभावप्रतिपादनाय पितृव्यतनय इति नोपयुक्तं भवतीत्यर्थः । तदनु-पयुक्तत्वमेव स्पष्टी करोति—**परिगृहीतस्येति** । द्वितीयपितृव्यतनयस्थले ममायं पितृ-व्यपुत्र इति व्यवहारस्य दत्तकप्रयुक्तत्वात्तादृशपितृव्यपुत्रस्य 'भिन्नोदरे च दत्ते च' इति दत्तपदेनैव संग्रहाद्दत्तकविषये दोषाभावकथनेनैवात्रापि दोषाभावकथनं सिद्धम् । पूर्वोक्तप्रथमपितृव्यतनयस्थले तु परिवेत्तृत्वादिदोषस्य प्रसक्तिरेव नास्ति । भ्रातृत्वाभावात् । यथा समानोदरयोर्भ्रात्रोर्देवदत्तयज्ञदत्तयोर्यथासंख्यं चैत्रमैत्रो द्वावौ-रसौ पुत्रौ । तयोर्मिथः पितृव्यपुत्रत्वेऽपि चैत्रनिरूपितो मैत्रे, मैत्रनिरूपितो वा चैत्रे ममायं भ्रातेति व्यवहाराभावः । किं नाम भ्रातृत्वमिति चेत् । एकजनक-शरीरजन्यत्वम् । तच्च सापत्नभ्रात्रोः स्पष्टमेव । देवरेणोत्पादितः क्षेत्रजपुत्रो देव-रस्यौरसपुत्रश्चेत्यनयोरप्येकजनकशरीरजन्यत्वमस्ति । समानोदरौ विष्णुकृष्णौ । तयोः कृष्णो दत्तः । तादृशविष्णुकृष्णयोर्दत्तौरसयोरेकपितृजन्यत्वमस्त्येवेति न क्वाप्यव्या-प्तिरतिव्याप्तिर्वा । प्रकृतयोर्मिथः पितृव्यपुत्रव्यवहारवतोश्चैत्रमैत्रयोर्नैकपितृजन्यत्वमिति तयोः परस्परं ममायं भ्रातेति व्यवहाराभावेन भ्रातृत्वाभावाज्ज्येष्ठपरित्यागेन कनिष्ठ-विवाहादौ सत्यपि परिवेत्तृत्वादिदोषाप्राप्तेर्न दोष इति दोषनिषेधात्यन्तासंभवात् ।

अयं भावः—'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते' (म० स्मृ० ३।१७१) इति परिवित्त्यादिस्वरूपप्रतिपादके मनुवचनेऽग्रजशब्दोऽयं रूढ्या ज्येष्ठभ्रातरं वक्ति । भ्रातृत्वं च पूर्वमुक्तमेव । तच्च भ्रातृत्वं 'भिन्नोदरे च दत्ते च पितृव्यतनये तथा' इति गौतमस्मृत्युक्तभिन्नोदरादित्रितयस्थलेऽक्षतमेव । तथा च निरुक्तस्थ-

त्तस्य च प्रसक्त्यभावेन निषेधाप्रवृत्त्या प्रतिप्रसवासंभवात्। न चैतस्मादेव ज्ञापकादपरिगृहीतस्यापि भ्रातृपुत्रस्य पुत्रत्वमिति शङ्कनीयम्। दशानां भ्रातॄणां मध्ये पञ्चानामपुत्रत्वे पञ्चानां च प्रत्येकं दशपुत्रत्वेऽपुत्राणां भ्रातॄणां प्रत्येकं पञ्चाशत्पुत्रतापत्तेः। पञ्चाशतश्च भ्रातृपुत्राणां प्रत्येकं दशपितृकतापत्तेश्चेत्याद्युक्तदूषणगणग्रासात्। तस्माद्यथाव्याहृतमेव साधु।

एवं प्रतिग्रहीतृकुलश्राद्धीयं द्रव्यं दत्तकाय प्रतिग्रहीतृजनककुलश्राद्धीयद्रव्यं च

---

लत्वये ज्येष्ठभ्रातृविवाहादेः प्राककनिष्ठभ्रातुर्विवाहादौ सति तत्र मनुवचनेन परिवित्तित्वादिदोषप्रसक्तौ गौतमेन सोऽपोद्यत इति निषेधसंगतिः। एवं च सोदरभ्रातृविषय एव परिवित्तित्वादिदोषः फलति। यदि त्वग्रजशब्दः सोदरज्येष्ठभ्रातरि रूढ इत्युच्यते तदा भिन्नोदरादिस्थलद्वये सोदरत्वं नास्तीति दोषाप्राप्तेरनुवादकं गौतमवचनम्। दत्तकस्थले तु सोदरत्वं विद्यत इति प्रसक्तदोषस्य गौतमवचनेन वाचनिको निषेध इति वैरूप्यं प्रसज्येतेति बोध्यम्।

ननु यो भ्रातृपुत्रो भ्रात्रान्तरेण दत्तकविधिना परिगृहीतस्तादृशपितृव्यतनयस्थले दोषाभावप्रतिपादनं दत्तपदेनैव संपन्नमिति कृत्वा गौतमस्मृतौ पृथक्पितृव्यतनयपदोपादानं व्यर्थम्। तत्सामर्थ्याद्दत्तकविधिनाऽपरिगृहीतस्यापि भ्रातृपुत्रस्य भ्रात्रन्तरनिरूपितपुत्रत्वं भवतीति ज्ञायते। ततश्च तादृशपितृव्यतनयस्थले परिवित्तित्वादिदोषाभावप्रतिपादनार्थं पितृव्यतनय इति चरितार्थं स्यादित्याशङ्कते—**न चैतस्मादेवेति। न शङ्कनीयमिति**। दशानां सोदराणां मध्ये पञ्च भ्रातरः प्रत्येकं दशसंख्याकपुत्रवन्तः। पञ्च चापरेऽत्यन्तं पुत्राभाववन्तः। एवं स्थिते यदि विधिनाऽपरिगृहीतस्यैव भ्रातृपुत्रस्यापुत्रभ्रात्रन्तरपुत्रत्वे गृह्यमाणे ये पुत्रवन्तस्तेषां प्रत्येकं दशसंख्याकपुत्रवत्त्वं समवस्थितमेव। युक्तं च तत्। परंतु येषां सुतरां पुत्राभावस्तेषां प्रत्येकमनायासतः पञ्चाशत्संख्याकपुत्रवत्त्वं, पञ्चाशतश्च पुत्राणां मध्ये प्रत्येकं दशपितृकता चाऽऽपद्येतेत्यादिदूषणपरम्परा पूर्वं( पृष्ठे ७३ )मुक्ताऽत्रानुसंधेया। तस्मादपरिगृहीतस्य भ्रातृपुत्रस्यापुत्रभ्रात्रन्तरपुत्रत्वं नाऽऽशङ्कनीयमित्यर्थः। ततश्च 'पितृव्यतनये' इत्यस्य 'पितृव्यतनयपदेन क्षेत्रजपुत्रो गृह्यते' इत्यादि यत्पूर्वमुक्तं तत्तथैव सम्यगिति मन्तव्यम्।

**एवमिति**। दत्तकविषयेऽपरः कश्चन विशेषः कथ्यत इत्यर्थः। प्रतिग्रहीतृकुलीयेन येन केन सगोत्राद्येकविंशतेः पुरुषेभ्यः परेणापि यस्मै कस्मैचिद्ब्राह्मणाय दातव्यत्वेन निश्चितं श्राद्धीयं ब्राह्मणभोजनादिकं दत्तकाय न दातव्यम्। दत्तकस्य प्रतिग्रहीतृगोत्रीयत्वाभिधानात्। तथा जनकप्रतिग्रहीत्रुभयकुलसंबन्धि श्राद्धीयं हवि-

व्यामुष्यायणाय न दातव्यम् ।

सपिण्डाय सगोत्राय श्राद्धीयं नैव दापयेत् ।
न भोजयेत्पितृश्राद्धे समानप्रवरं तथा ॥

इति हेमाद्रिपारिजातधृतवचनात् । श्राद्धीयं श्राद्धे दत्तद्रव्यम् ।

औरसपुत्रस्येवौरसपुत्र्या अप्यपचारे क्षेत्रजाद्याः पुत्र्यः प्रतिनिधयो भवन्ति । मुख्यापचारे प्रतिनिधिरिति न्यायात् । मुख्यत्वं चास्या दानादिविधौ साधनत्वेन । साधनत्वं चर्तुगमनविधिना साधितायाः द्रव्यार्जनविधिनाऽर्जितस्य

---

व्यामुष्यायणदत्तकाय न देयम् । व्यामुष्यायणस्य गोत्रद्वयसंबन्धाभिधानात् । तत्र प्रमाणभूतं हेमाद्रिपारिजातोध्दृतवचनं पठति-**सपिण्डाय सगोत्रायेत्यादि** । श्राद्धीयपदस्यार्थं निर्वक्ति-**श्राद्धे दत्तेति** । प्रतिग्रहीतृकुलसंबन्धि श्राद्धीयं द्रव्यं सगोत्रत्वाद्दत्तकाय न देयम् । तथा जनकप्रतिग्रहीत्रुभयकुलसंबन्धि श्राद्धद्रव्यमुभयगोत्रसंबन्धित्वाद् व्यामुष्यायणाय न देयमित्यर्थः ।

यथा मुख्यस्यौरसस्याभावे क्षेत्रजादयः पुत्राः प्रतिनिधयः क्रियन्त एवमेवौरसपुत्र्या अप्यभावे क्षेत्रजाद्याः पुत्र्यः प्रतिनिधयः क्रियन्तां न्यायसाम्यादित्याह—**मुख्यापचार इति** । ननु मुख्याभावे तत्कार्यकारिणः प्रतिनिधानमिति तन्न्यायस्वरूपम् । तत्र सर्वत्र पितृकृत्येषु पुत्रस्यैव मुख्यत्वं दृश्यत इति तदभावे युक्तं पुत्रप्रतिनिधीकरणम् । पुत्र्यास्तु न मुख्यत्वमिति कथं तदभावे मुख्याभावे प्रतिनिधिरिति न्यायेन पुत्रीप्रतिनिधीकरणमुच्यत इत्याशङ्कायामाह-**मुख्यत्वं चास्या इति** । येन यत्साध्यते येन च विना यन्न सिध्यति तस्य तद्विधौ साधनत्वं मुख्यत्वं च लोके दृश्यते । यथा 'गां दद्यात्' इति गोदानविधौ गौः साधनं मुख्या च भवति । गोः सत्त्वे गोदानसिद्धेः, गोरसत्त्वे गोदानस्वरूपासिद्धेश्च । गोदानविधौ साधनभूतायाः सास्नावत्त्वे सति शृङ्गित्वमित्यादिलक्षणलक्षितायास्तस्याः स्वरूपतः सत्त्वे मुख्यत्वम् । तन्मूल्यपरिमितरजतादिरूपेण सत्त्वेऽमुख्यत्वं च भवति । तथा 'कन्यां दद्यात्पिता स्वयम्' इति पितृकर्तृककन्यादानविधौ कन्यायाः साधनत्वमवगम्यते । तत्सत्त्वे कन्यादानविधिसिद्धेः । तस्या असत्त्वे कन्यादानविधिस्वरूपानिष्पत्तेश्च । भवत्वेवं रीत्या कन्यायाः कन्यादानविधिसाधनत्वेन मुख्यत्वम् । परं त्वौरसकन्याया एव कन्यादानविधौ साधनत्वमिति कुतोऽवगतमित्याशङ्कयाऽऽह—**साधनत्वं चेति** । जन्यत्वस्वरूपस्य कन्यात्वस्य तत्रैव मुख्यत्वेनौरसकन्याया एव कन्यादानविधिसाधनत्वमित्यर्थः । किंच कर्तोद्रव्यसाध्यत्वादृद्रव्यस्य कर्तव्यता नाम कर्तृस्वरूपनिष्पादकता दृश्यते लोके । तत्र येन केनाप्युपायेनार्जितस्य द्रव्यस्य

व्रीह्यादेः क्रतुसाधनत्ववत् । तथा हि रात्रिसत्रन्यायेन 'ऋत्वियात् प्रजां विन्दामहे

---

क्रत्वर्थतोत विशिष्टैरुपायैरर्जितस्येति वीक्षायां—षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥ ( म० स्मृ० १०।७६ ) इति स्मृतेर्याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदिति विहितविशिष्टोपायैरर्जितस्यैव द्रव्यस्य क्रत्वर्थताङ्गीकरणवत्किमारोपितकन्यायाः कन्यादानविधिसाधनत्वमथवा शास्त्रविहितकन्याया इति जिज्ञासायां 'ऋतौ भार्यागमनेनापत्यं स्त्रीपुंसरूपं भावयेत्' इत्यर्थक "ऋतौ भार्यामुपेयात्" इतिशास्त्रविहितविशिष्टोपायसाधिताया एव तस्या ग्रहणस्यौचित्येनौरसकन्याया एव कन्यादानविधिसाधनत्वमित्यर्थः । 'श्रुतानुमितयोः श्रुतसंबन्धो बलीयान्' इति न्यायेन कन्यादानविधौ साधनत्वेनाश्रुतकन्यासंबन्धकरणापेक्षया श्रुतकन्यासंबन्धकरणं न्याय्यम् । अश्रुतकन्यापेक्षया श्रुतकन्यायाः प्रत्यासन्नत्वादिति यावत् । एतदेव वैदिकदृष्टान्तेन स्पष्टी करोति—**तथा हीति** । **रात्रिसत्रन्यायेनेति** । सोऽयं न्यायो जैमिनीये चतुर्थाध्याये तृतीयपादे स्पष्टः । सत्रकाण्डे श्रूयते—'प्रतितिष्ठन्ति ह वा एते, य एता रात्रीरुपयन्ति' इति । द्वादशाहादूर्ध्वभाविनस्त्रयोदशरात्रचतुर्दशरात्रादयः सर्वे सत्रविशेषा रात्रिशब्देनोच्यन्ते । ये त्रयोदशरात्रादीन्सत्रविशेषाननुतिष्ठन्ति ते प्रतिष्ठां प्राप्नुवन्तीति तदर्थः । तत्र य एता इत्याद्यंशो रात्रिसत्रविधायकः । प्रतितिष्ठन्तीत्यादिस्तत्स्तावकोऽर्थवादः । एवं स्थितेऽस्मिन्रात्रिसत्रे किं विश्वजिन्न्यायेन स्वर्गः फलं कल्प्यमथवाऽर्थवादे श्रुता प्रतिष्ठेति जिज्ञासायामश्रुतात्स्वर्गादर्थवादे श्रुता प्रतिष्ठैव प्रत्यासन्नेति "प्रतिष्ठाकामो रात्रिसत्रं कुर्यात्" इत्येवं सैव फलत्वेन कल्पनीयेति सिद्धान्तितम् । श्रुतसंबन्धबलीयस्त्वे हेतुः प्रत्यासत्तिरुक्तेत्यर्थः । एवं च यत्र विधौ तदर्थवादे वा फलविशेषो न श्रूयते तत्रैव विश्वजिन्न्यायेन स्वर्गः फलं कल्प्यम् । यत्र तु विधावर्थवादे वा फलविशेषः श्रुतो भवति तत्र तु तदेव श्रुतं फलं कल्पनीयम् । अश्रुतापेक्षया श्रुतस्य प्रथमोपस्थितत्वेनान्तरङ्गत्वादिति भावः । **ऋत्वियात्प्रजामिति** । इन्द्रं स्त्रियश्चाधिकृत्योक्तं तैत्तिरीयके—'ऋत्वियात्प्रजां विन्दामहै काममा विजनितोः संभवामेति । तस्मादृत्वियात्स्त्रियः प्रजां विन्दन्ते काममा विजनितोः संभवन्ति वारेवृतं ह्यासाम्' ( तै० सं० का० २ प्र० ५ अ० १ ) इति । विश्वरूपनाम्नः पुरोहितस्य वधादिन्द्रस्य ब्रह्महत्यायां सत्यां तत्तृतीयांशं रजोरूपेण परिणतं स्वीकुर्वत्यः स्त्रिय इन्द्रमब्रुवन्—ऋत्वियादित्यादि । ऋतुः षोडशाहोरात्ररूपः समयः प्राप्तोऽस्य पुरुषसंबन्धस्य ऋत्वियः । अस्मास्येति षष्ठ्यर्थः पुरुषसंबन्धो विवक्षितः । प्रजां विन्दामहा इत्युत्तरत्र श्रवणात् । न हि पुरुषसंबन्धमन्तरा केवलर्तुप्राप्त्या स्त्रीणां प्रजालाभः संभवतीति । ऋतुप्राप्त्यु-

ऋत्वियात्प्रजां विन्दन्ते ' इत्याद्यर्थवादोन्नीते ऋतावुपेयात् , तस्मिन् संविशेत् , इत्यादौ नित्ये ऋतुगमनविधौ स्त्रीपुंससाधारण्याः श्रुतिसिद्धायाः प्रजाया एव भाव्यत्वमवगम्यते । प्रजनयतीति प्रजेति व्युत्पत्त्या प्रजननशक्तिमतः स्त्रीपुंसस्यैव प्रजाशब्दवाच्यत्वान्न नपुंसकस्य । तस्य शुक्रशोणितसाम्यजन्यत्वेन नान्तरीयकत्वात् ।

---

'स्य प्राप्तमित्यर्थे ' छन्दसि घस् ' ( पा० सू० ५ । १ । १०६ ) इति घसि सित्त्वात्पदसंज्ञायामोर्गुणाभावेन यणि रूपमृत्विय इति । तथा विजनितोरिति विपूर्वाज्जनेः ' भावलक्षणे स्थेण्० ' ( पा० सू० ३ । ४ । १६ ) इति तोसुन् । 'क्त्वातोसुन् ' (पा० सू० १।१।४०) इत्यव्ययत्वम् । तेन ऋतुकालिकात्पुरुषसंबन्धात् प्रजां स्त्रीपुंसरूपां लभामहै । तदर्थमाप्रसवात्संभवाम मिथुनीभवामेत्येवं वरं वृतवत्यः । तस्माद्धेतोर्ऋत्वियात्स्त्रियः प्रजां विन्दन्ते कामम विजनितोः संभवन्तीत्यर्थः । क्वचिदृत्वियादित्यस्य स्थाने ' ऋत्वियाः ' इति पाठो दृश्यते । तत्र ऋतुः प्राप्त आसामित्यर्थेन स्त्रीणां विशेषणं बोध्यम् । अयमेवार्थो वसिष्ठेनेत्थं स्पष्टीकृतः–' इन्द्रस्त्रिशीर्षाणं त्वाष्ट्रं हत्वा पाप्मगृहीतो महत्तमाधर्मसंबद्धोऽहमित्येवमात्मानममन्यत । तं सर्वाणि भूतान्यभ्यक्रोशन्भ्रूणहन्भ्रूणहन्निति । स स्त्रिय उपाधावत । अस्यै मे ब्रह्महत्यायै तृतीयं भागं प्रतिगृह्णीतेति । ता अब्रुवन् किं नो भूयादिति । सोऽब्रवीद्वरं वृणीध्वमिति । ता अब्रुवन्नृतौ प्रजां विन्दामह इति । कामम विजनितोः संभवामेति । तथा ' इति । स्त्रियो ह्येतादृश्यो मैथुनार्थिन्यो यत्तदर्थं ब्रह्महत्याभागमप्यङ्गयकार्षुरिति ' यथाकामी भवेद्वाऽपि ' ( या० स्मृ० १ । ८१ ) इत्यत्र वीरमित्रोदयः । सोऽयं सर्वोऽर्थवादः । नात्र कश्चिद्विधिः श्रूयते । निश्चितार्थलाभो हि वर इति मिथुनीभवनहेतुकप्रजालाभरूपेन्द्रदत्तवरसिद्ध्यन्यथानुपपत्त्यैतस्मादर्थवादादुन्नीते ' ऋतौ भार्यामुपेयात, ' तस्मिन् संविशेत् ' इत्येवमृतुगमनविधावृतुगमनेन भावयेदिति भावनायां किं भावयेदिति भाव्याकाङ्क्षायामर्थवादश्रुतिश्रुतायाः स्त्रीपुंसरूपायाः प्रजाया एव भाव्यत्वं रात्रिसत्रे प्रतिष्ठाया इवाध्यवसीयते । प्रजाशब्दव्युत्पत्त्याऽपि जननशक्तिशालिनोः स्त्रीपुंसयोरेव प्रजाशब्दवाच्यत्वं न नपुंसकस्य । तस्य जननशक्तिमत्त्वाभावादित्याह–**प्रजनयतीति** । **शुक्रशोणितसाम्येति** । पुमान् पुंसोऽधिके वीर्ये स्त्री भवत्यधिके स्त्रियाः । समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥ ( म० स्मृ० ३ । ४९ ) इति स्मृतेः शुक्राधिक्यजन्ययोः कन्यापुत्रयोः प्रजननसामर्थ्यं शुक्रशोणितसाम्यजन्यस्य च प्रजननसामर्थ्याभावश्चावगम्यत इत्यर्थः । **नान्तरीयकत्वादिति** । शुक्रशोणितसाम्यजन्यत्वेन कन्यापुत्रापेक्षया विभि-

अत एव—

अनधीत्य द्विजो वेदमनुत्पाद्य च संततिम् ।
अनिष्ट्वा विविधैर्यज्ञैर्मोक्षमिच्छन् पतत्यधः ॥

इति तादृश्या एव संततेरनुत्पादेऽधःपातः स्मर्यते । संतनोत्यन्वयमिति संततिः प्रजापर्याय एव । प्रजा स्यात्संततौ जने, इति कोशात् । एवम्—

अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ।
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति ॥

इत्यत्रापत्यशब्दो व्याख्यातः । 'अपत्यं कस्मादपतनं भवति नानेन पततीति वा' इति यास्कस्मरणात् ।

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ।

---

न्नत्वादित्यर्थः । अत एवेति । शुक्रशोणितसाम्यजन्यस्य कन्यापुत्रापेक्षया विभिन्नत्वेन प्रजाशब्दवाच्यत्वाभावादेव । अनधीत्येति । ( म० स्मृ० ६ । ३७ ) । 'अनुत्पाद्य च संततिम्' संतनोति विस्तारयत्यन्वयं वंशमिति व्युत्पत्तेः 'प्रजा स्यात्संततौ जने' इत्यमराच्च संततिशब्दः प्रजापर्यायः । तथाच प्रजननशक्तिमत्याः कन्यापुत्ररूपायाः संततेरनुत्पादेऽधःपात उक्तः । अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः । क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति ॥ इति स्मृतेरयमर्थः— अपत्योत्पादनार्थं स्त्रियो निर्मिताः । प्रजासृजेति शेषः । ताश्च क्षेत्रस्थानीयाः । पुरुषास्तु बीजिनो बीजवप्तारस्तत्स्थानीया इत्यर्थः । यस्मादपत्योत्पादनार्थं स्त्रियः सृष्टास्ताश्च क्षेत्रभूतास्ततो बीजवत एव क्षेत्रं दातुं योग्यं भवति । यस्त्वबीजी स क्षेत्रं नार्हति । अबीजी क्षेत्रदानपात्रमेव न भवतीति तस्मै क्षेत्रं नैव देयमिति । अत्रत्योऽपत्यशब्दः प्रजननशक्तिमत्कन्यापुत्रयोरेव वाचकः । यतोऽपत्यानुत्पादनेऽधःपतनदोष उक्तः । अपत्योत्पादने तु स दोषः परिहृतो भवतीत्यपत्यमुत्पादयितव्यं किल । परंतु यादृशोऽपत्यस्यानुत्पादने दोषः स्मृतस्तादृशोऽपत्यस्योत्पादन एव दोषः परिहृतो भवेन्नान्यथा । तथा चापत्यार्थं स्त्रियः सृष्टा इत्यत्रत्यापत्यशब्दः प्रजाशब्दपर्याय इति सिध्यति । किंच कस्मादपतनं नानेन पततीति निरुक्तेन न पतत्यस्मान्न पतत्यनेन वेत्यपत्यमिति द्विधाऽपत्यशब्दव्युत्पत्तिः प्रदर्शिता । अपादाने करणे वा नञ्पूर्वात्पतधातोर्यप्रत्ययेऽपत्यशब्दः सिद्धः । तत्र यथा श्राद्धादिकर्तृत्वेन परलोकसाधनतया पुत्रस्य लोकादपतनहेतुत्वं तथा पुत्र्या अपि दानश्राद्धादिविधिसाधनत्वेन दौहित्रकृतलोकादपतनहेतुत्वं भवतीति प्रवृत्तिनिमित्तस्योभयत्र साधारण्यात् 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः

आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥

इति कोशाच्च । यद्यत्र 'पुमान् पुरुमना भवति पुंसतेर्वा' इति यास्कोक्त्या पुंपदं बहुज्ञपरं तदा पुंसतेर्वेति तदुक्त्यैव प्रसवकर्तृमिथुनपरमेव व्याख्यायताम् ।

अत एव यास्कः—मिथुनाः पित्र्यदायादा इति । तदेतादृक्श्लोकाभ्यामप्युक्तम्—

अङ्गादङ्गात्संभवासि हृदयादधिजायसे ।
आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् ॥ इति ।
अविशेषेण पुत्राणां दायो भवति धर्मतः ।
मिथुनानां विसर्गादौ मनुः स्वायंभुवोऽब्रवीत् ॥

इत्यत्र पुत्रपदं मिथुनपरं दर्शितवान् । न चात्र मिथुनपदं पुत्रस्नुषापरमिति वाच्यम् । अङ्गादङ्गात्संभवसीत्यस्यासंगतेः । न दुहितर इत्येके । पुमान्दाया-

---

समे' । अमी आत्मजस्तनय इत्यादयः शब्दाः स्त्रियां वर्तमानाः सन्तो दुहितरं वदन्ति । आत्मजा सुता पुत्रीत्येवं यथायथं स्त्रीप्रत्ययान्तत्वेन दुहितृवाचका इत्यर्थः । अपत्यं तोकमिति द्वे प्रातिपदिके पुत्रदुहित्रोरेव वर्तेते, परंतु समे समानलिङ्गे भवतः । नपुंसकलिङ्गपुरस्कारेणैव पुत्ररूपार्थं दुहितृरूपार्थं च ते वदत इति तदर्थः । इत्यमरकोशाच्च कन्यापुत्रसाधारणस्यार्थस्य वाचकमपत्यपदं प्रजाशब्दपर्याय एवेत्यर्थः । 'पुमान्पुरुमनाः' इति निरुक्ताद्यद्यत्र पुमान् पुंसोऽधिके शुक्र इति मनुवचने पुंपदं बहुज्ञपरं तदा पुंसतेर्वेति तदुक्त्यैव प्रसवक्रियायाः कर्तृभूतं यन्मिथुनं कन्यापुत्रात्मकं तादृशापत्यपरं व्याख्येयम् । प्रजननशक्तिमत्कन्यापुत्ररूपार्थकत्वं पुंशब्दस्याऽऽस्थेयमिति तात्पर्यम् । **अत एवेति** । पुंशब्दस्य कन्यापुत्रसाधारणार्थवाचकत्वादेव । **पित्र्येति** । पित्र्यस्य पितृधनस्य दायादा दायभागग्रहीतारो मिथुनाः कन्यापुत्ररूपा भवन्ति, न त्वेकः पुत्र एवेति यास्कोक्तं संगच्छते । पितृधनग्राहित्वं कन्यापुत्रयोः सममिति प्रदर्शयितुमग्रिमग्रन्थमवतारयति—**अङ्गादिति** । पितृधनग्राहित्वे यदङ्गहृदयाद्यधिजातत्वं तत्पुत्रवत्कन्याया अपि समानम् । **अविशेषेणेति** । मिथुनानां कन्यापुत्रात्मकानां पुत्राणां तुल्यत्वेन दायो भवतीत्यर्थः । अत्र मिथुनानां पुत्राणामित्यन्वयात्पुत्रपदस्य कन्यापुत्ररूपमिथुनपरत्वं दर्शितं यास्काचार्येणेति शेषः । मिथुनपदार्थविषये शङ्कते—**न चात्रेति** । स्त्रीपुंसौ मिथुनमित्यमरकोशात्सामान्यतः स्त्रीपुरुषोभयसमुदायस्य मिथुनशब्दवाच्यत्वावगमात्प्रकृतस्थले मिथुनपदेन पुत्रस्नुषोभयसमुदायस्य ग्रहणं किं न स्यादिति शङ्कितुराशयः । उत्तरयति—**असंगतेरिति** । यदङ्गजातत्वं पुत्रस्य तदङ्गजातत्वस्य स्नुषायामभावान्मिथुनघटकपुत्रसाहित्येन समाङ्गजातायाः कन्याया एवोपस्थितिरित्यर्थः । किंच 'दुहितरो दायादा न भवन्ति'

दोऽदायादा स्त्रीति विज्ञायते ' इत्येकीयमते दुहितृनिराकरणासंगतेश्च । यच्च नापुत्रस्य लोकोऽस्तीत्यादौ पुत्रपदं तदप्युभयपरमेव । भ्रातृपुत्रौस्वसृदुहितृभ्याम् ( पा० सू० १।२।६८ ) इति पाणिनिना पुत्रदुहितृपदयोरेकशेषस्मरणात् । एतेन

'अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ' ।

इत्यादावपि पुत्रपदं व्याख्यातम् । तत्साधनं च पुत्रिकाकरणलिङ्गमग्रे वक्ष्यते।

---

इत्येक आचार्या मन्यन्ते । यतः पुमान् पुत्र एव दायादः, स्त्री न दायादा इति विज्ञानात् । श्रुत्यादिभ्य इति शेषः । इति केचिदाचार्या दुहितॄणां दायादत्वं पितृधनग्रहणाधिकारित्वं निषेधन्ति । यदि तु मिथुनपदेन पुत्रस्नुषोभयरूपं स्त्रीपुरुष-युग्मं गृहीत्वा तस्यैव दायादत्वमवधार्यते ' मिथुनाः पित्र्यदायादाः ' इति यास्कोक्तौ, तर्हि दुहितॄणां दायादत्वस्य प्रसक्तिरेव नास्तीति ' न दुहितरः ' इति केचि-न्मतेन दुहितॄणां दायादत्वप्रतिषेधोक्तिरसंगता स्यान्निषेधस्य प्राप्तिपूर्वकत्वनियमात् । इतोऽपि कारणान्मिथुनघटकपुत्रसाहित्येन गृह्यमाणायाः स्त्रियाः समानाङ्गजातत्वात्क-न्याया एव ग्रहणमनिच्छताऽपि त्वया कर्तव्यं भवतीति भावः । अपुत्रस्य पुत्र-कृतलोकप्राप्तिर्नास्तीत्यर्थिकायां ' नापुत्रस्य लोकोऽस्ति ' इति श्रुतावपि यत्पुत्रपदं तदपि पुत्रदुहित्रुभयपरं मन्तव्यम् । ' भ्रातृपुत्रौ स्वसृदुहितृभ्याम् '. ( पा० सू० १।२।६८ ) इति सूत्रेण पाणिनिमुनिना पुत्रदुहितृशब्दयोरेकशेषविधानात् । तथा च पुत्रश्च दुहिता च पुत्रौ, अविद्यमानौ पुत्रौ स्त्रीपुंसौ यस्येति, अपुत्रस्येत्यस्य विग्रह इत्यर्थः । एवमपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा, इत्यत्रापि पुत्रपदं व्याख्येयम् । दुहितृशब्देन कृतैकशेषस्य पुत्रशब्दस्य नञा सह ' नञोऽस्त्यर्थानाम् ' इति बहुव्रीहिः समासः कर्तव्य इत्यर्थः । तेनौरसपुत्राभावे पुत्रप्रतिनिधिवदौरस-पुत्र्यभावे पुत्रीप्रतिनिधिः सिध्यति ।

ननु दुहितृशब्देन पुत्रशब्दस्यैकशेषविधानेऽपि तथैव सर्वत्रैकशेषः कर्तव्य इति नियमाभावाद्विरूपैकशेषस्य सरूपैकशेषापेक्षया विलम्बोपस्थितिकत्वेन बहिरङ्गत-याऽसिद्धत्वात्तादृशैकशेषस्य विना प्रमाणं ग्राह्यत्वायोगाच्च कथमत्र दुहितृशब्देन कृतै-कशेषस्य पुत्रपदस्य नञा समास उच्यत इत्यत आह—**तत्साधनं चेति** । ' पुत्रप्रतिनिधिः सदा ' इति विधेयसमर्पकपुत्रशब्दस्य दुहितृशब्देन कृतैकशे-षस्य ग्रहणमित्यर्थस्य साधनं चेत्यर्थः । **पुत्रिकाकरणलिङ्गमिति** । सनत्कुमारोक्त-भविष्यत्कालिकपुत्रिकाकरणस्य यः सुमन्त्रकर्तृको दशरथमुद्दिश्यानुवादस्तदेव लिङ्गम् । अङ्गराजेन लोमपादेन दशरथदत्तायाः शान्ताख्यकन्याया यत्पुत्रिकाकरणविधिना पुत्रार्थत्वं संपादितं तदेव निरुक्तप्रकारकैकशेषे प्रमाणमित्यर्थः । अन्यथा ' अपुत्रे-

णैव ' इत्युद्देश्यविशेषणपुत्रशब्दगतपुंस्त्वाविवक्षायामपि विधेयसमर्पकपुत्रशब्दगतलिङ्गस्य पुंस्त्वस्य पशुना यजेतेत्यत्र विधेयपशुगतलिङ्गस्येव विवक्षाया आवश्यकत्वेनौरसपुत्र्यभावसहकृतौरसपुत्राभाववता दत्तकपुत्रः परिग्रहीतव्यः—पुमानेव पुत्रप्रतिनिधिः कर्तव्य इति ' अपुत्रेणैव कर्तव्यः ' इत्यत्रिवचनार्थात् ' य एतेऽभिहिताः पुत्राः ' ( म० स्मृ० ९ । १८१ ) इति श्लोकव्याख्यानावसरे कुल्लूकभट्टेन मन्वर्थमुक्तावल्यां सत्यौरसे पुत्रे पुत्रिकायां च सत्यां क्षेत्रजादयोऽन्यबीजजाः पुत्रा न कर्तव्याः ' इत्युक्तत्वाच्चौरसपुत्रीसत्त्वे दत्तकादिग्रहणं न स्यात् । न स्याच्च दत्तायाः शान्तायाः कन्याया दुहितृप्रतिनिधित्वं तस्याश्चौरसपुत्रीवत्पुत्रिकाकरणं च संगतम् । तदेतल्लिङ्गं पुरस्तात् ' तथाऽपुत्र इत्युपक्रम्य पुत्रार्थे दीयतामित्युपसंहारादित्यादिना मूले तव्द्याख्यायां मञ्जर्यां ( २२२ ) पृष्ठे प्रतिपादयिष्यते । उद्देश्यसमर्पके विधेयसमर्पके च दुहितृशब्देन कृतैकशेषस्य पुत्रशब्दस्य ग्रहणे तूद्देश्यविशेषणे अपि द्वे पुत्रो दुहिता च । विधेये अपि द्वे पुत्रो दुहिता चेति । तत्र यथासंख्यमन्वयेनौरसपुत्राभाववता पुत्रप्रतिनिधिः कर्तव्यः, अथ चौरसदुहित्रभाववता दुहितृप्रतिनिधिः कर्तव्यः, इत्यत्रिवचनार्थस्य संपन्नत्वाद्यथौरसपुत्राभावे दत्तकक्षेत्रजादिः पुत्रप्रतिनिधिस्तथौरसदुहित्रभावे दत्तकक्षेत्रजादिका पुत्री दुहितृप्रतिनिधिर्भवति ।

यद्यपि ' भ्रातृपुत्रौ० ' इति द्वंद्वापवाद एकशेषे कृते क्रमो न प्रतीयते, तथा च यथासंख्यान्वयासंभवस्तथाऽपि पुत्रश्च दुहिता च पुत्रावित्येकशेषवृत्तेर्विग्रहवाक्ये क्रमप्रतीतेः सत्त्वान्निर्बाधो यथासंख्यान्वयः, पुत्रस्याखिलपितृकार्यकरणे समर्थत्वेन बहूपकारित्वादभ्यर्हितत्वेन दुहित्रपेक्षया पूर्वं प्रयोगश्चेति ज्ञेयम् । अत एव ' पत्नी दुहितरश्चैव पितरौ० ' ( या० स्मृ० २ । १३५ ) इत्यपुत्रधनग्रहणाधिकारिक्रमबोधकवाक्ये पितरावित्यत्र ' पिता मात्रा ' ( पा० सू० १।२।७० ) इति द्वंद्वापवाद एकशेषे कृते यद्यपि मातापित्रोर्धनग्रहणे क्रमो न प्रतीयते तथाऽपि माता च पिता च पितराविति तद्विग्रहवाक्ये मातृशब्दस्य पूर्वं श्रवणादेकशेषाभावपक्षे मातापितरावित्यत्र मातुः पूर्वनिपातान्मातुर्गर्भधारणपोषणादिनाऽत्यन्तोपकारित्वात्, ' सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ' इत्यादिस्मरणाच्च मातुरभ्यर्हितत्वेन दौहित्राभावे प्रथमं मातुर्धनग्रहणाधिकारस्तदभावे पितुरिति मिताक्षरायामुक्तं संगच्छते । अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥ ( म० स्मृ० ९ । १२७ ) अविद्यमानपुत्रो यदस्यामपत्यं जायेत तन्मम श्राद्धाद्यौर्ध्वदेहिककरं स्यादिति कन्यादानकाले जामात्रा सह नियमबन्धरूपेण विधानेन दुहितरं पुत्रिकां कुर्यात् । पुत्र इव प्रतिकृतिः पुत्रिका । ' इवे

प्रतिकृतौ ' ( पा० सू० ५।३।९६ ) इतीवार्थे कन्प्रत्ययः । पुत्रानुकारिणी तामिति तदर्थः । इति पुत्रिकाकरणस्वरूपमुक्त्वा–अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाः । विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः ॥ ( म० स्मृ० ९ । १२८ ) इत्युक्तवान्मनुः । अत्र दक्षप्रजापतिकर्तृकपुत्रिकाकरणात्मकपरकृतिरूपेणार्थवादेनान्योऽप्येवं कुर्यादिति पुत्रिकाकरणविधानमुन्नीयते । तच्च बह्वीनामपि भवति । ' चक्रेऽथ पुत्रिकाः ' इति बहुवचनाल्लिङ्गात् । ददौ स दश धर्माय० ( म० स्मृ० ९ । १२९ ) इत्यग्रिमश्लोके दशादिसंख्यायाः स्पष्टमुक्तेश्च । प्रजापतिर्नाम प्रजोत्पादनविधिज्ञः । दक्षश्चतुरः । दक्षे तु चतुरपेशलपटवः, इति त्रिकाण्डीस्मरणात् । पदद्वयेन मिलित्वा प्रजोत्पादनकर्मणि कुशल इत्यर्थः । इदं च हेतुगर्भं विशेषणम् । तदेतदुक्तं विवृद्ध्यर्थं स्ववंशस्येति । ततश्च पुत्राद्यात्मकप्रजालाभार्थं स्वदुहितॄणां पुत्रिकाकरणं व्यधादिति गम्यते । अनेनैतदुक्तं भवति—यथौरसः पुत्रः श्राद्धादिकरणेन परलोकसाधनतया च पितरमुपकरोति तथा दुहिताऽपि श्राद्धादिकरणेन दौहित्रद्वारा परलोकसाधनतया च पितरमुपकरोत्येवेति मुख्यपुत्रसादृश्यादौरसपुत्रकल्पेति । युज्यते चैतत् । अङ्गादङ्गात्संभवसि० । स्वक्षेत्रे संस्कृतायां त्विति श्रुतिस्मृत्यनुसारात्स्वमात्रसंस्कृतायां धर्मपत्न्यां स्वस्माज्जन्यत्वे सति पुंस्त्ववत्त्वमौरसपुत्रत्वमिति लक्षणं लभ्यते। तच्च सर्वं केनचिदंशेन हीनं दुहितरि समन्वेतीति तत्र पुत्रसादृश्यस्य मुख्यत्वात् । दत्तकपुत्रे तु न तत्सर्वं स्वतः सिद्धं किंत्वारोपितमेवेति न तत्र मुख्यं पुत्रसादृश्यमिति भावः । अत एव ' तत्समः पुत्रिकासुतः ' ( या० स्मृ० २ । १२८ ) इत्यत्रावधारणापूर्वपदककर्मधारयाश्रयणेन पुत्रिकैव पुत्रः पुत्रिकापुत्र इति व्याख्याय साऽपि पुत्रिकाऽप्यौरसतुल्यैव । पुंस्त्वातिरिक्तसर्वौरसलक्षणयुक्तत्वादित्युक्तमपरार्केण संगच्छते । संगच्छते चेवार्थे कन्प्रत्ययोक्तिः । पुत्रः स्वत एव पितुः परलोकसाधनं भवति । दुहिता तु स्वपुत्रद्वारा पितुः परलोकसाधनं भवति न पुत्रवत्साक्षात् । इदमेव पुत्रानुकारित्वमिवार्थककन्प्रत्ययेन स्फोरितमिति पुत्रिकामित्यस्य पुत्रानुकारिणीमित्यर्थः साधुरुक्त इति भावः । मुख्यपुत्रसादृश्यप्रदर्शनायैवोक्तं मूले ' अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम् ' इति। इदमेव पुत्रिकाकरणमित्युच्यते शास्त्रे ।

ननु दुहितर्येतन्मातापितृजन्यत्वसत्त्वेऽपि पुंस्त्वं नास्ति, दत्तकपुत्रे तु पुंस्त्वसत्त्वेऽप्येतन्मातापितृजन्यत्वं नास्ति । तथा चोभयोरेकैकविशेषणाभावेन साम्याद्दुहितरि मुख्यमौरसपुत्रसादृश्यं, दत्तकपुत्रे तु तद्गौणमिति विशेषः कथं क्रियते इति चेदुच्यते । ' पुमान् पुंसोऽधिके वीर्ये स्त्री भवत्यधिके स्त्रियाः ' ( म० स्मृ०

१ । ४९ ) इति मनूक्तेर्जन्मातापितृजन्यत्वं भवति प्रत्यासत्त्या तन्मातापितृवीर्याधिक्यप्रयुक्ते स्त्रीत्वपुंस्त्वे भवतः । मातृवीर्यापचयसहकृतपितृवीर्यावयवोपचये सति पुंस्त्वं, पितृवीर्यापचयसहकृतमातृवीर्यावयवोपचये सति स्त्रीत्वं च भवतीत्यर्थः । 'शुक्रशोणितसंभवः पुत्रो मातापितृनिमित्तकः' इति वसिष्ठोक्तेः । तथा च दुहितरि मातापित्रुभयीयावयवानां सत्त्वेऽपि मात्रवयवोपचयात्स्त्रीत्वम् । औरसपुत्रे च मात्रवयवसत्त्वेऽपि पित्रवयवोपचयात्पुंस्त्वम् । दत्तकपुत्रे तु प्रतिग्रहीतृमातापित्रवयवानां लेशतोऽपि संबन्ध एव नास्ति, तत्र कुतस्तरां पित्रवयवोपचयप्रयुक्तं पुंस्त्वमपि । तस्माद्दत्तकपुत्रे जन्यपुंस्त्वादिकं सर्वमारोप्यत इति न तत्र मुख्यं पुत्रसादृश्यम् । दुहितरि तु केवलपुंस्त्वातिरिक्तं मातापित्रवयवजन्यत्वादिकं सर्वमस्तीति तस्या एव मुख्यमौरसपुत्रसादृश्यम् ।

एवंप्रकारेण दत्तकपुत्र्या अपि पुत्रिकाकरणं भवतीति सुमन्त्रकर्तृकसनत्कुमारोक्तभविष्यानुवादरूपाल्लिङ्गात्प्रदर्शयिष्यते । किंच 'अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्' ( म० स्मृ० ९ । १२७ ) इति वचनार्थपर्यालोचनेनापि तत्सिध्यति । तथा हि–अपुत्र इत्यत्रत्यपुत्रशब्देन 'अपुत्रेणैव' इत्यत्रेव दुहितृग्रहणमनाशङ्क्यमेव । तथा सति दुहित्रभाववान् योऽपुत्रस्तेनेत्यर्थात् 'सुतां कुर्वीत पुत्रिकाम्' इति विधानानुपपत्तेः । एवं चास्य विधानस्य पुत्रीसापेक्षत्वं सिध्यति । पुत्रपदं च गौणमुख्योभयपुत्रपरम् । एतद्वाक्यघटकपुत्रपदार्थबोधकाले गौणपुत्रप्रसिद्धिसत्त्वात् । एवं सुतापदमपीति बोध्यम् । अपुत्रेणैवेत्येतद्घटकपुत्रपदार्थबोधकाले तु गौणपुत्राप्रसिद्धेर्मुख्यौरसपरमेव तत्र पुत्रपदमिति प्राक् ( ९ पृष्ठे ) प्रतिपादितं तत्तत्रैव द्रष्टव्यम् । पुत्रिकाकरणं नाम दुहितुः पुत्रकार्यकारित्वसंपादनम् । 'दत्तकपुत्र्याः पुत्रिकाकरणं च दत्तकपुत्रीसिद्धिसत्त्व एव संभवति नान्यथा । यदि च 'पुत्रप्रतिनिधिः' इत्यत्र विधेयविशेषणस्य पुंस्त्वस्य विवक्षणेन दत्तकपुत्री सर्वथा नास्ति, तर्हि लिङ्गात्सिध्यद्दत्तकपुत्र्याः पुत्रिकाकरणमनुपपन्नं स्यादिति तदन्यथानुपपत्त्या विधेयविशेषणस्यापि पुंस्त्वस्याविवक्षणेन दुहितृशब्देन कृतैकशेषस्य पुत्रशब्दस्य ग्रहणेन वौरसपुत्र्यभावे पुत्रीप्रतिनिधिः कर्तव्य इति विधीयते । तेन दत्तकपुत्रपरिग्रहवद्दत्तकपुत्र्या अपि परिग्रहः, औरसपुत्र्याः पुत्रिकाकरणवद्दत्तकपुत्र्याः पुत्रिकाकरणं च सिध्यति । एवं च पुत्रिकाकरणरूपं यल्लिङ्गं तदेव दुहितृशब्देन कृतैकशेषस्य पुत्रशब्दस्य ग्रहणमित्यर्थज्ञापनद्वारा दत्तकपुत्रीपरिग्रहे साधकं भवतीति भावः ।

इदमत्राऽऽकूतम् । पुत्रीपरिग्रहस्य पुत्रपरिग्रहस्य च पृथक् पृथग्विधाने सत्यौरसपुत्रीसहकृतौरसपुत्राभावस्थले पुत्रीपरिग्रहो न प्रवर्तते । तत्प्रवृत्तिनिमित्तस्यौरसपुत्र्यभावस्यासत्त्वात् । किंत्वेक एव पुत्रपरिग्रहः । तत्प्रवृत्तिनिमित्तस्यौरसपुत्राभावस्य सत्त्वात् । औरसपुत्रीसत्त्वासत्त्वयोरप्रयोजकत्वात् । तेनौरसपुत्रीसत्त्वेऽपि दत्तकपरिग्रहः सिध्यति । तत्र पुत्रिकाकरणदत्तकपरिग्रहविध्योर्युगपत्प्राप्तौ क्रियालोपादिपरिहाररूपफलाविशेषेण वचनद्वयप्रामाण्यात्पुत्रिकाकरणं पुत्रग्रहणं वा यथेच्छं विधेयम् । तेन कदाचित्ताद्दशस्थले पुत्रिकाकरणमेव पुत्रग्रहणमेव वा स्यादित्यन्यत् । अत एव प्रजोत्पादनकुशलेन प्रजापतिना स्ववंशवृद्ध्यर्थं पुत्रिकाकरणमेव कृतं न पुत्रग्रहणम् । 'अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाः' ( म० स्मृ० ९ । १२८ ) इत्यत्र द्रष्टव्यम् । पुत्रग्रहणं त्वीद्दशस्थले लोके प्रसिद्धमेव । औरसपुत्र्यभावसहकृतौरसपुत्राभावस्थले तु औरसपुत्र्यभावमौरसपुत्राभावं च स्वस्वप्रवृत्तिनिमित्तं वीक्ष्य पुत्रीपरिग्रहपुत्रपरिग्रहयोरुभयोः प्रसक्तौ वचनद्वयप्रामाण्यात्स्वेच्छया तत्र पुत्रग्रहणं पुत्रीग्रहणं वा कर्तव्यम् । तेन कदाचित्ताद्दशस्थले पुत्रीग्रहणमेव पुत्रग्रहणमेव वा स्यात । पुत्रीग्रहणपक्षे पुत्रिकाकरणविधिना पुत्रकार्यनिर्वाहः । अत एवानपत्येनाङ्गराजेन पुत्रीग्रहणमेव कृतं न पुत्रग्रहणम् । तदेतदग्रे प्रदर्शयिष्यते । पुत्रग्रहणं त्वीद्दशस्थले लोके प्रसिद्धमेव ।

नन्वेवं चेदौरसपुत्रीसत्त्वेऽपि यथौरसपुत्राभावे दत्तकग्रहणं भवति तद्वदौरसपुत्रसद्भावेऽप्यौरसपुत्र्यभावे दत्तकपुत्रीपरिग्रहः स्यादिति चेत् । स्यादेव । इष्टमेवैतत्संगृहीतम् । तथा हि—औरसपुत्र्यभावसहकृतौरसपुत्रसद्भावस्थले प्रवृत्तिनिमित्ताभावात्पुत्रपरिग्रहाप्रवृत्तावपि पुत्रीपरिग्रहप्रवृत्तौ बाधकाभावः । औरसपुत्र्यभावस्य तत्प्रवृत्तिनिमित्तस्य सत्त्वात । तथा चौरसपुत्रसत्त्वेऽप्यौरसपुत्र्यभावे दत्तकपुत्रीग्रहणं सिध्यति ।

ननु द्विविधौरसपुत्राभावस्थले पुत्रिकाकरणपुत्रीग्रहणाभ्यां सह युगपद्दत्तकपरिग्रहविधेः प्रवृत्तौ वचनद्वयप्रामाण्यादस्त्वन्यतराश्रयणम् । किंत्वौरससत्त्वे तेनैव सर्वनिर्वाहे दत्तकपुत्रीग्रहणे किं प्रयोजनमिति चेत् । उच्यते—औरसकृतोपकारेण पितुः पुत्रकृतलोकसिद्धावपि दौहित्रजलोकसिद्धिर्न स्यात् । सा तु दौहित्रत्वेन रूपेण दौहित्रकृतोपकार एव सिध्यति नान्यथा । तथा चौरसपुत्र्यभावसहकृतौरसपुत्रसद्भावस्थले दत्तकपुत्रीपरिग्रहे कृते तत्र पुत्रिकाकरणविधिर्न प्रवर्तते । मुख्यौरसपुत्रसद्भावेन तत्र गौणपुत्रकरणनिषेधात् । ततश्चाष्टकाश्राद्धादिना मातामहस्य दौहित्रजलोकलाभः संपद्यते । अत एव कन्यादानफलप्राप्त्यर्थमौरसपुत्रवताऽपि क्रियमाणं दत्तकपुत्रीग्रहणं क्वचिद्दृश्यमानं संगच्छते । सर्वतो मुख्ये फले लब्धे लोकैस्तथा

**अत एवोक्तं 'तत्समः पुत्रिकासुतः' इति, अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम्, इति च । यदि चादृष्टवैकल्येन कन्यानुत्पादस्तदा कृष्णप्रतिपच्छ्राद्धादि-**

---

न क्रियत इत्यन्यदेतत् । नहि भागीरथीस्नाने लब्धे कृष्णास्नानं न कर्तव्यमिति दण्डकोऽस्ति । भागीरथीस्नानेन गङ्गास्नानजफललाभेऽपि कृष्णास्नानजं फलं न सिध्येत् । तथा कृष्णास्नानेन कृष्णास्नानजन्यफललाभेऽपि गङ्गास्नानजं फलं न सिध्येत् । तत्तत्स्नानजन्ययोः फलयोर्भेदादिति भावः । एतेन, एका शताधिका बाला भविष्यति गरीयसी । तेन दौहित्रजाल्लोकान्प्राप्नुयामिति मे मतिः ॥ शतादधिका शताधिका शतं पुत्रा एका चाधिका बालेत्यर्थः । तयोर्मध्य एकाकिन्यपि बालैव गरीयसी । यतस्तया बालया साधनभूतया दौहित्रजाल्लोकानहं प्राप्नुयामिति मे मतिरित्येवं महाभारते गान्धार्युक्त्या च स्पष्टमेव ज्ञायते यदौरसपुत्रशतसत्त्वेऽपि न तेन दौहित्रजलोकः सिध्यति । किंतु बालैव तत्प्राप्तिकरी भवति । अत एव सा गरीयसी । एवं चौरसदुहितृसत्त्वे दौहित्रकृतोपकारेण दौहित्रजलोकसिद्धावपि पुत्रप्रयुक्तलोकसिद्धिर्न स्यात् । अत औरसदुहितृसत्त्वेऽप्यौरसपुत्राभावे दत्तकपुत्रग्रहणमावश्यकम् । तथौरसपुत्रसत्त्वे तत्कृतोपकारेण पितुः पुत्रप्रयुक्तलोकसिद्धावपि दौहित्रजलोको न स्यात् । अत औरसपुत्रसद्भावेऽप्यौरसदुहित्रभावे दत्तकदुहितृग्रहणमावश्यकमित्युक्तं भवति । तथा च प्रथमे द्वितीये चोदाहरणस्थले पुत्रिकाकरणपक्षे पुत्रकृतलोकसिद्धावपि दौहित्रजलोकसिद्धिर्न स्यात् । दत्तकपरिग्रहपक्षे तु प्रयोजनाभावात्पुत्रिकाकरणस्याप्रवृत्त्या दौहित्रजलोकस्यापि सिद्धिरिति । एतत्सर्वमनुसंधायोच्यते--अत एवोक्तं तत्सम इत्यादि साङ्गुष्ठमुभयकाम इत्यन्तम् ।

**अत एवेति** । दुहितरौरसपुत्रसादृश्यसत्त्वादेवेत्यर्थः । **पुत्रिकासुत इति** । पुत्रिकैव सुतः पुत्रिकासुत इत्यवधारणागर्भः कर्मधारयः । पुत्रिकारूपः सुत औरसेन समस्तुल्य इति तदर्थः । दौहित्रद्वारा परलोकसाधनतया पितृुपकारकत्वादौरसपुत्रसदृशी पुत्रिकेति यावत् । **अङ्गादङ्गादिति** । यथौरसपुत्रोऽङ्गादङ्गात्प्रत्येकावयवाज्जायते । अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् ॥ इति श्रुतेः । तद्वन्नृणामङ्गादङ्गाद्दुहितोत्पद्यते । अनेन दुहितर्यङ्गादङ्गाज्जायमानत्वरूपं पुत्रसादृश्यं प्रदर्शितम् ।

ननु भाविपुत्रद्वारा दुहितुः परलोकसाधनतासंपादनात्मकं पुत्रिकाकरणमौरसदुहितुरेवोचितं तस्यास्तत्र मुख्यत्वात् । अतो मुख्यदुहितुरुत्पादनोपायमाह--**यदि चेति** । कार्यमात्रं प्रत्यदृष्टस्य प्रयोजकत्वात्कन्योत्पत्तिप्रयोजकादृष्टाभावेन यदि कन्योत्पत्तिर्न जायेत तर्हि कृष्णप्रतिपदि श्राद्धानुष्ठानेन तादृशमदृष्टं संपादनीयम् ।

ना तत्संपादनं कार्यं, कृष्णचतुर्थीश्राद्धादिना पुत्रादृष्टस्येव । यत्तु गमनकरणिकायामेव भावनायाम् 'एवं गच्छन् पुत्रं जनयेत्' इति पुत्रस्यैव भाव्यत्वं प्रतीयते तत्प्रजापदोपात्तयोः स्त्रीपुंसयोर्मध्ये पुत्रस्य तद्वाक्यविहितगुणफलतयाऽवयु-

---

'प्रतिपदि वरां कन्यां द्वितीयायां सर्वकामः' इति स्मृतेः । प्रकरणानुरोधात्कृष्णप्रतिपदि श्राद्धकरणेन वरां कन्यां लभते । तादृशकन्योत्पत्तिप्रयोजकमदृष्टं लभते, तद्द्वारा च तादृशी कन्योत्पद्यत इति व्याख्येयम् । अकारणिकायाः कार्योत्पत्तेरसंभवादिति तदर्थः । एवमेव 'द्वितीयायां सर्वकाम.' इत्यत्रापि बोध्यम्। अत्र दृष्टान्तमाह—**कृष्णचतुर्थीत्यादि** । यथा कृष्णचतुर्थ्यां श्राद्धानुष्ठानेन पुत्रोत्पत्तिप्रयोजकमदृष्टं संपाद्यते । 'ब्रह्मवर्चस्विनं चतुर्थे' इति वचनात्। कृष्णपक्षे चतुर्थे दिवसे चतुर्थ्यां तिथावित्यर्थः । ब्रह्मवर्चस्विनं पुत्रमिति शेषः । अत्राप्यकारणिकायाः कार्योत्पत्तेरसंभवाद्ब्रह्मवर्चस्विपुत्रोत्पत्तिप्रयोजकमदृष्टं लभत इति व्याख्येयम् । तद्वत्कन्योत्पत्तिप्रयोजकमदृष्टं संपादनीयमित्यर्थः । अनेनैतदुक्तं भवति—परलोकादिसाधनतयौरसपुत्रो मुख्यतया पितुरुपकारकः । अतो मुख्यसंपादने प्रथमतो यत्न आस्थेयः । स च यत्नः कृष्णचतुर्थीश्राद्धादिनेत्यादिः प्रदर्शितः । तावताऽपि तदलाभे पुत्रप्रतिनिधिः। औरसपुत्रवदौरसदुहिताऽपि मुख्यत्वेन दौहित्रजलोकसाधनतया पितुरुपकारिणी । अतस्तत्संपादने प्रथमतो यत्नः कृष्णप्रतिपच्छ्राद्धादिरुक्तः । तावताऽपि तस्या अलाभे 'मुख्याभावे प्रतिनिधिः' इति न्यायेन पुत्रप्रतिनिधिवद्दुहितृप्रतिनिधिः संप्राप्नोतीति ।

शङ्कते—**यत्त्विति** । ऋतियात्प्रजां विन्दन्त इत्यर्थवादोन्नीते 'ऋतौ भार्यामुपेयात्' इत्यत्र ऋतुगमनेन भावयेदिति गमनकरणिकायां भावनायां 'एवं गच्छन् पुत्रं लक्षण्यं जनयेत्' ( या० स्मृ० १ । ८० ) इति पुत्रस्यैव भाव्यत्वेनान्वयः प्रतीयते, इति यत्तद्रात्रिसत्रन्यायेन सिद्धं यत्स्त्रीपुंसरूपं प्रजाशब्दवाच्यं भाव्यं फलं तदेकदेशस्य पुत्रस्यावयुत्य पृथक्कृत्यानुवादः । अनुवादोऽपि च 'षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत्' ( या० स्मृ० १ । ७९ ) इत्यादिवाक्येन विहिताः प्रथमदिनचतुष्टयरहितर्तुकालद्विचतुरादिसमरात्रिमघामूलादिवर्जनक्षामत्वेन्दुप्राशस्त्यादिमैथुनानुकूला ये गुणास्तेषां गुणानां फलं प्रदर्शयितुम् । कृत इति शेषः । 'एवं गच्छन्' इत्युपक्रम्य पुत्रं जनयेदित्युक्तेस्तथैव प्रतीतेर्व्युत्पत्तिसिद्धत्वात् । **एवमिति** । प्रतिषिद्धवर्जनपुरःसरं विहितर्तुकालाद्युपादानेन प्रकारेण स्त्रियं गच्छन्निति तदर्थः । तथा च विहितकालाद्युपादानपुत्रजननयोर्हेतुहेतुमद्भावात्तादृशगुणानां फलं पुत्रजननमिति पुत्रार्थिना तादृशे विशिष्टे काले स्त्रियं गन्तुं

स्यानुवादः पुत्रार्थिप्रवृत्त्यर्थः। गुणाश्च युग्मनिशाशुक्राधिक्यस्त्रीक्षामतेन्दुसौकथ्य-पुंसवनापूर्वादयो योगिमन्वादिभिरेव-एवमित्यादिना स्पष्टीकृताः। आश्वलायनेनापि पाणिग्रहणे पुत्रपुत्र्योर्गुणफलत्वं प्रकटितम्। गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयात्, यदि कामयेत पुमांस एव मे पुत्रा जायेरन्नित्यङ्गुलीरेव स्त्रीकामो रोमान्ते हस्तं साङ्गुष्ठमुभयकाम इति। एतेन स्त्रियोऽयुग्मासु रात्रिष्वित्यपि व्याख्यातम्। तस्मात्पुत्रस्यैव श्राद्धादिकर्तृत्वेन परलोकसाधनतया पुत्र्य

प्रवर्तितव्यमिति भावः। तद्वाक्यविहिता गुणाः के? इत्यत आह—**गुणाश्चेति**। **युग्मनिशेति**। युग्मासु संविशेदिति वचनात्। **शुक्राधिक्येति**। पुमान् पुंसोऽधिके शुक्रे' [ म० स्मृ० ३। ४९ ] इति मनूक्तेः। **स्त्रीक्षामतेति**। स्त्रियं क्षामामिति तत्रोक्तेः। स्त्री भवत्यधिके स्त्रियाः [ म० स्मृ० ३। ४९ ] इति स्त्रीशुक्राधिक्ये कन्योत्पत्त्युक्तेः पुत्रार्थिनाऽवश्यं स्त्रीक्षामताऽपेक्षितव्या। सा च रजस्वलात्वेनैव तस्मिन् काले भवति। अथ चेन्न भवति तदाऽरिनग्धभोजनादिना सा संपाद्येति भावः। **इन्दुसौकथ्यमिति**। चन्द्रशुद्धिरित्यर्थः। सुस्थ इन्दाविति वचनात्। पुत्रप्रसवसाधनं पुंसवनाख्यं कर्म। पुत्रोत्पत्तिप्रयोजकमदृष्टं पुण्यविशेषश्चेति। एते च गुणाः पुत्रोत्पत्त्यनुकूलाः। पुत्रार्थिनैतेऽवश्यमपेक्षितव्याः। अर्थात् कन्यार्थिनैतद्विपरीत्येनायुग्मरात्रिस्त्रीपुष्टत्वादयोऽपेक्षितव्या इति फलति। मघामूलादिप्रथमरात्रिचतुष्टयादिवर्जनं तु प्रतिबन्धनिवृत्तिद्वारा रागप्राप्तेर्युनानुमोदकमिति बोध्यम्। त एते गुणा मनुयाज्ञवल्क्यादिभिः, एवं गच्छन्नित्येवंशब्दैन प्रदर्शिताः। एवमाश्वलायनेनापि पुत्रपुत्र्यौ गुणफले इति पाणिग्रहणप्रकारेण स्पष्टमुक्तम्। तदेव दर्शयति—**गृभ्णामीति**। अस्यायमर्थः संक्षेपतः—यदि वरो मे पुत्रा एव जायेरन्नितीच्छेत्तर्हि 'गृभ्णामि ते' इति मन्त्रेण पाणिग्रहणसमये स्त्रिया अङ्गुलीवर्जमङ्गुष्ठमेव गृह्णीयात्। यदि च कन्यका इच्छेत्तदा केवलमङ्गुष्ठवर्जमङ्गुलीरेव गृह्णीयात्। अथ तूभयं पुत्रान् कन्यकाश्चेच्छेत्तदाऽङ्गुल्यङ्गुष्ठसहितं हस्तं गृह्णीयादिति। केवलाङ्गुष्ठग्रहणफलं पुत्रोत्पत्तिः। केवलाङ्गुलिग्रहणफलं कन्योत्पत्तिः। उभयग्रहणस्योभयं फलमिति पुत्रपुत्र्योरङ्गुष्ठग्रहणादिगुणफलत्वमुक्तमित्यर्थः। **एतेनेति**। 'युग्मासु पुत्रा जायन्ते' ( म० स्मृ० ३। ४८ ) इत्युक्तपुत्रजननस्य युग्मरात्र्यादिगुणफलत्ववर्णनेन 'स्त्रियोऽयुग्मासु रात्रिषु' ( म० स्मृ० ३। ४८ ) इत्युक्तकन्याजननमपि व्याख्यातप्रायं भवति। पुत्रजननवत्कन्याजननस्याप्ययुग्मरात्र्यादिगुणफलत्वं व्याख्येयमिति यावत्। एवं च यथौरसपुत्रस्य पितुः श्राद्धादौ मुख्यत्वं तद्वत्कन्याया अपि दानश्राद्धादिविधिसाधनत्वेन मुख्यत्वम्। एवं स्थिते

अपि दानश्राद्धादिविधिसाधनत्वेन सिद्धे मुख्यत्वे तदुपचारे प्रतिनिधिर्युक्त एव। 'दुहिता दुरहिता दूरे हिता दोग्धा वा' इति निरुक्त्या दुहितुर्दौहित्रद्वाराऽपि पित्रुपकारकत्वं दर्शयति यास्कः। मनुरपि—

पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यत।
दौहित्रोऽपि ह्यमुत्रैनं संतारयति पौत्रवत्॥ इति।

महाभारते गान्धार्युक्तिश्च—

एका शताधिका बाला भविष्यति गरीयसी।
तेन दौहित्रजाल्लोँकान् प्राप्नुयामिति मे मतिः।

अन्यत्रापि—

दुहितर एव मातापित्रोः किमौरसाः पुत्राः।

---

च मुख्यत्वे यदि कन्याया अभावः स्यात्तदा मुख्याभावे प्रतिनिधिरिति न्यायेन युज्यत एव दत्तकपुत्रीग्रहणम्। दुहितेति। दुहितेत्यस्य व्याख्यानं दुरहितेति। दुरहितेत्यस्यापि कोऽर्थ इत्यत आह—दूरे हितेति। दूरे स्थित्वा हितकारिणीत्यर्थः। दौहित्रद्वारा पित्रुपकारिणीति यावत्। दोग्धेति। दोहनकर्त्री, उपकर्त्रीत्यर्थः। दोहनेनात्रोपकारो लक्ष्यते। मुख्यस्य दोहनस्य दुहितर्यसंभवात्। दौहित्रद्वारोपकारकत्वं तस्या नतु स्वत इति यास्कवचनादवगम्यत इति भावः। दुहितुर्दौहित्रद्वारा पित्रुपकारकत्वे मनुं प्रमाणयति—पौत्रदौहित्रयोरिति। पुत्रस्य पुत्रोऽथ च दुहितुः पुत्रोऽनयोर्मध्ये न कियानपि विशेषस्तरतमभावोऽस्ति। यस्मात्पौत्रो यथा परलोके पितामहं तारयति तद्वद्दौहित्रोऽप्येनं परलोके तारयतीत्यर्थः। अनेन दौहित्रद्वारा दुहितुः पित्रुपकारकत्वं प्रदर्शितम्। इदानीतनोपलब्धमनुस्मृतौ त्वेवं पाठो दृश्यते—'पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः। तयोर्हि मातापितरौ संभूतौ तस्य देहतः' इति। स्पष्टोऽर्थः। एका शताधिकेति। एका बाला शतात्पुत्रेभ्योऽप्यधिका श्रेष्ठा भवति। यतस्तयैकयाऽपि बालया दौहित्रप्रयुक्ताँल्लोकानहं लभेयेति मे दृढा मतिरस्तीत्यर्थः। इति महाभारते गान्धारीवचनात्पुत्रकन्ययोः समं पित्रुपकारकत्वमवगतं भवति। तत्र पुत्रकृतोपकारेण यत्फलं प्राप्यते न तत्कन्याकृतोपकारेण सिध्यति, कन्याकृतोपकारेण च यत्फलं प्राप्यते न तत्पुत्रकृतोपकारेण सिध्यतीत्येका शताधिका बालेत्यनेन सूचितमिति बोध्यम्। अन्यत्रापि क्वचित्स्मृतौ दुहितैव मुख्यतो मातापित्रोरुपकारिणीति, औरसपुत्राः के तत्पुरत इत्युक्तम्। इदं दुहितृप्रशंसापरं नतु पुत्राणां तिरस्कारार्थकम्। तेषां शुक्राधि-

निपतन्दिवो ययातिर्दौहित्रैरुद्धृतः पूर्वम् ॥ इति ।

दौहित्रैरष्टकादिभिः कानीनैर्मागधीपुत्रैः । एवं चौरसदुहित्रभावे दौहित्रकृत-लोकप्राप्त्यर्थं क्षेत्रजादिदुहितॄणामपि प्रतिनिधित्वेनोपादानं सिद्धमेव । न च व्रीहिप्रतिनिधित्व इव वचनमस्ति । यद्येवं तर्हि भर्त्रपचारे देवरस्येव भार्यापचारे शालिकायाः प्रतिनिधित्वं स्यात् । श्वशुरशरीरावयवान्वयेन सौसादृश्यादिति चेन्मैवम् । नहि श्वशुरशरीरावयवान्वयेन भार्योपादानं किंतु तस्याः संस्कृतस्त्रीत्वेन ।

---

न्वयजन्यतया स्वतः पिण्डदातृतया च कन्याभ्योऽपि श्रेष्ठतमत्वात् । दिवो निपतन्नधः पतन्नित्यर्थः । ययातिः पूर्वं दौहित्रैरष्टकादिश्राद्धैरुध्दृत इति पूर्वेतिहासः । अत्र दौहित्रकर्तृकमातामहोद्धारेऽष्टकादिश्राद्धानां हेतुत्वं बोध्यम् । इत्थं चौरसपुत्र्यभावे दौहित्रप्रयुक्तलोकप्राप्त्यर्थं क्षेत्रजादिपुत्रीणां प्रतिनिधित्वेन ग्रहणं सिद्धमिति ज्ञेयम् ।

ननु क्षेत्रजादिपुत्रीणां न्यायादागतमप्यौरसदुहितृप्रातिनिधित्वं तथाऽपि तत्र प्रतिपदोक्तं वचनं नास्तीति तस्य शास्त्रानुगृहीतत्वं न स्यादित्याशङ्कां परिहरन् प्रतिबन्दीमुदाहरति-**न च व्रीहिप्रतिनिधित्व इति** । मुख्यानां व्रीहीणामपचारे नीवारान् गृह्णीयादित्येवमपि प्रातिस्विकं वचनं नास्तीति व्रीहिप्रतिनिधिनीवाराणामपि शास्त्रीयत्वं न स्यात् । अथ ' यथोक्तवस्त्वसंप्राप्तौ ग्राह्यं तदनुकारि यत् ' इति तिथितत्त्वोदाहृतवचनाद्व्रीहिप्रतिनिधेः शास्त्रीयत्वं चेदाश्रियते तदा तेनैव न्यायेनाऽऽगतमौरसदुहितृप्रतिनिधेः शास्त्रीयत्वमिति ज्ञेयम् । तदुक्तं जैमिनीये-' सामान्यं तच्चिकीर्षा हि ' ( जै० न्या० ६ । ३ । २७ ) इति । श्रुतव्रीह्यभावे तत्सदृशमेव प्रतिनिधेयमुत यत्किंचिन्नीवारप्रियङ्ग्वादीति संदेह आह-सामान्यमिति । व्रीहिसदृशमेव ग्राह्यम् । यस्माद्यागे प्रवृत्तस्य तच्चिकीर्षा यद्विषयिणीच्छा तदलाभे तत्सदृशकरणस्यैवेच्छा जायत इति तदर्थः । एतेन भूयसामवयवानां साम्यं सादृश्यमित्युक्तं भवति । भूयोवयवसाम्यं च नीवारेष्वेव विद्यते न प्रियङ्ग्वादिष्वित्यत्यन्तसदृशमेव प्रतिनिधातव्यमिति नियमः सिध्यति । अत्र शङ्कते-**यद्येवमिति** । यदि निरुक्तवचनान्मुख्येनात्यन्तसदृशस्य प्रतिनिधित्वमङ्गी क्रियते चेद्यथा भर्तुरपचारे तत्सदृशोऽन्यो देवरो जातकर्मादौ प्रतिनिधीयते तद्वद्भार्याया अप्यपचारे तत्सदृश्यन्या शालिका ( भार्याभगिनी ) प्रतिनिधीयेत । श्वशुरशरीरावयवानां यथा भार्यायां समन्वयोऽस्ति तथा शालिकायामपि तच्छरीरावयवानां समन्वयसत्त्वेन भार्यया साकं शालिकायाः सुसदृशत्वादिति चेन्मैवं वादीः । कस्मिंश्चित्कर्मणि यद्भार्याया उपादानं क्रियते तत्किं तस्यां श्वशुरशरीरावयवा अनुवर्तन्त इति हेतोः क्रियते । न । अपि तु तत्र स्वसंस्कृतत्वे सति स्त्रीत्वं वर्तत इति हेतोः क्रियते । एवं च

न च तच्छालिकायामस्ति। यत्र च कनिष्ठादौ तदस्ति तत्र भवत्येव तस्या ज्येष्ठाप्रतिनिधित्वम्। यदाह व्यतिरेकमुखेण योगीश्वरः—

सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्।
सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा॥ इति।

तस्मात्सिद्धमासां न्यायत एव प्रतिनिधित्वम्।

तत्र क्षेत्रजगूढजकानीनसहोढपौनर्भवानां पञ्चानां मध्ये क्षेत्रजोत्पादनं मनुरेवाऽऽह—

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।
प्रजेप्सिताऽधिगन्तव्या संतानस्य परिक्षये॥

इत्यनेन संतानस्योभयविधस्य परिक्षय उभयविधायाः प्रजाया इष्टत्वेन यथा-

---

तदुपादानप्रयोजकं भार्यात्वम्। भार्यात्वप्रयोजकं च स्वकर्तृकविवाहसंस्कारसंस्कृतत्वमित्यर्थः। न च तादृशसंस्कृतत्वं शालिकायां विद्यत इति कृत्वा सौसादृश्याभावान्न शालिका भार्यायाः प्रतिनिधिर्भवतीति भावः। यत्र तु तादृशसंस्कृतस्त्रीत्वं वर्तते, यथा कनिष्ठभार्यायां, तत्र तस्याः कनिष्ठभार्याया ज्येष्ठभार्याप्रतिनिधित्वं भवत्येवेति बोध्यम्। ज्येष्ठभार्यापचारे कनिष्ठभार्या तत्प्रतिनिधिर्भवत्येवैतदेव निषेधमुखेनाऽऽह याज्ञवल्क्यः—सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्। सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा॥ ( या० स्मृ० १। ८८ ) इति। वोढुः सवर्णायां भार्यायां सत्यामन्ययाऽसवर्णभार्यया सह धर्मकार्यं नैव कुर्यात्। सवर्णास्वपि बह्वीषु भार्यासु विद्यमानासु धर्माचरणे ज्येष्ठभार्यां मुक्त्वा मध्यमा कनिष्ठा वा भार्या न नियोक्तव्येति तदर्थः। अत्र धर्मानुष्ठाने ज्येष्ठभार्यां मुक्त्वा कनिष्ठादिभार्याया अधिकारो नास्तीत्युक्त्याऽर्थाज्ज्येष्ठभार्याभावे कनिष्ठादिभार्याया धर्माचरणेऽधिकारोऽस्तीति सूचितं भवति। ज्येष्ठायां सत्यां कनिष्ठा न नियोक्तव्येत्येवं निषेधमुखेन ज्येष्ठाभावे कनिष्ठा तत्प्रतिनिधिर्भवतीति सूचितमिति यावत्। तस्मात्क्षेत्रजादिपुत्रीणां मुख्यपुत्र्या अभावे तत्प्रतिनिधित्वं न्यायेनैव सिद्धमिति भावः।

**तत्रेति**। प्रागुक्तलक्षणानां क्षेत्रजादीनां पञ्चानां मध्ये क्षेत्रजप्रजोत्पादनं मनुनैवाभिहितमित्याह—**देवराद्वेति**। ( म० स्मृ० ९। ५९ )। संतानस्योभयविधस्य कन्यापुत्रात्मकस्य परिक्षये प्रसक्ते सर्वथाऽपुत्रत्वे सति पत्यादिगुरुनियुक्तया स्त्रिया भर्तुर्भ्रातुः सकाशादन्यस्माद्वा यस्मात्कस्मात्सपिण्डादभीष्टा कन्यापुत्रात्मिका

यथं प्रतिनिधित्वमित्यर्थः। इतरासु चतसृषु नोत्पादनविध्यपेक्षा। लोकस्वभावसिद्धत्वात्। तासां च नामानि पुत्रवत्तान्येव। प्रवृत्तिनिमित्तस्योभयत्र तुल्यत्वात्। तासां चौरसप्रतिनिधित्वं विकलावयवारब्धत्वेन न्यायत एव सिद्धं व्रीह्यपचारे नीवाराणामिव। अवयववैकल्यं च स्त्र्यवयवमात्रान्वयेन भर्त्रवयवान्वयाभावात्।

---

प्रजोत्पादयितव्येति तदर्थात्। कन्यापुत्ररूपस्य संतानस्य परिक्षये कन्यापुत्ररूपस्य संतानस्याभीष्टत्वाद्यथायथं पुत्रपरिक्षये क्षेत्रजः पुत्रः, पुत्रीपरिक्षये क्षेत्रजा पुत्रीत्येवं यथार्हं प्रतिनिधिर्भवतीति बोध्यम्। **इतरास्विति**। गूढज-कानीन-सहोढ-पौनर्भवाख्यासु चतसृषु प्रजासु विषये देवराद्वेति क्षेत्रजप्रजोत्पादनविधिवदुत्पादनाविधेरावश्यकता नास्तीत्यर्थः। तासां लोकव्यवहारासिद्धत्वादित्यर्थः। लोके हि पुरुषविशेषजातत्वनिश्चयाभावेऽपि सवर्णजातत्वनिश्चयमात्रेण गूढजकानीनादिव्यवहारस्य प्रसिद्धेरिति भावः। **तासां च नामानीति**। क्षेत्रजगूढजादिप्रजानां नामानि संज्ञाः पुत्रवज्ज्ञेयानि। तादृशपुत्राणां यथा क्षेत्रजः, गूढजः, कानीनः, इत्येवं संज्ञा भवन्ति तद्वत्तादृशकन्यानामपि क्षेत्रजा, गूढजा, कानीना, इत्यादीन्येव नामानि भवन्ति नतु स्त्रीत्वप्रयुक्त तासां नामान्तरमस्तीति यावत्। **प्रवृत्तिनिमित्तस्येति**। क्षेत्रजगूढजेत्यादिशब्दप्रवृत्तिनिमित्तस्य नाम शक्यतावच्छेदकस्य क्षेत्रजातत्वगूढजातत्वादेः पुत्रकन्ययोरुभयोरपि साम्येनावस्थितत्वादित्यर्थः। **तासां चौरसेति**। तासां क्षेत्रजगूढाजादिकन्यानामौरसकन्याप्रतिनिधित्वं तु पित्रवयवान्वयाभावसहकृतमात्रवयवारब्धत्वेन हेतुना बोध्यम्। औरसपुत्री हि मातापित्रोरुभयोरवयवैरारभ्यते। क्षेत्रजपुत्री तु केवलमात्रवयवैरारभ्यते। नतु तत्र पितुरवयवानामंशतोऽपि संबन्धः। देवरादिना यस्य देवदत्तस्य क्षेत्रे समुत्पादिता तस्य क्षेत्रभर्तुर्देवदत्तस्य सा कन्या क्षेत्रजा भवति। तादृशकन्यानिरूपितं पितृत्वं क्षेत्रभर्तरि देवदत्ते। तादृशदेवदत्तनिष्ठपितृत्वनिरूपितं क्षेत्रजकन्यात्वं तु देवरेण देवदत्तक्षेत्रे समुत्पादितायां दुहितरि। तथा च क्षेत्रजकन्यायां मातुरवयवानामेव संबन्धो नतु पितुर्देवदत्तस्यावयवानामंशतोऽपि संबन्ध इति स्पष्टयितुमेव पितृदुहितृभाव उक्तः। इदमेव हि विकलावयवारब्धत्वं नाम यत्पित्रवयवसंबन्धाभावसहकृतमातृमात्रावयवैर्जन्यत्वम्। तच्च क्षेत्रजकन्यायां समवस्थितमित्यौरससादृश्यरूपन्यायादेव युक्तं क्षेत्रजकन्याया औरसदुहितृप्रतिनिधित्वम्। व्रीहिभिर्यजेतेति विहितव्रीह्यभावे नीवाराः प्रतिनिधित्वेनोपादीयन्त इति यथा नीवाराणां व्रीहिप्रतिनिधित्वं तद्वदिति भावः। यथोक्तम्—यथोक्तवस्त्वसंप्राप्तौ ग्राह्यं तदनुकारि यत्। यवानामिव गोधूमा व्रीहीणामिव शालयः॥ इति।

अस्त्वेवं क्षेत्रजादीनां दुहितॄणामौरसदुहितृप्रतिनिधित्वम् । न्यायबलात् । दत्तकक्रीतककृत्रिमदत्तात्मापविद्धानां सौसादृश्यन्यायाभावे कथमस्तु प्रतिनिधित्वम् । मैवम् । तत्रापि–

'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ।

इति योगिप्रतिपादितसजातीयत्वादिसौसादृश्यसद्भावादस्त्येव न्यायप्रसरः । उपपादितं चैतदधस्तात्पुत्रप्रतिनिधिविचारे ।

ननु क्षेत्रजादीनां पञ्चानां मात्रवयवान्वयेन दत्तकादीनां पञ्चानां सजातीयत्वेनास्तु प्रतिनिधित्वं 'पूर्वाभावे परः परः' इति क्रमविधानं तु कथं ? सादृश्याविशेषादिति चेन्मैवम् । पूर्वपूर्वश्रेयस्त्वेनेति ब्रूमः । तदाह विष्णुः–एतेषां पूर्वः पूर्वः श्रेयानिति । श्रेयो दृष्टादृष्टविशेषः । दृष्टमवयवप्रत्यासत्त्यादि । अदृष्टं गु-

---

अस्त्वेवमिति । उक्तरीत्या मात्रवयवारब्धत्वरूपौरससादृश्यलक्षणन्यायेन क्षेत्रजगूढजकानीनसहोढपौनर्भवाख्यानां कन्यानामौरसकन्याप्रतिनिधित्वमास्तां नाम, किंतु दत्तकक्रीतककृत्रिमदत्तात्मापविद्धाख्यानां कन्यानां मातृमात्रावयवारब्धत्वरूपस्याप्यौरससादृश्यस्याभावात्कथमौरसकन्याप्रतिनिधित्वमिति चेन्मैवं वादीः । दत्तकाद्यपविद्धान्तेष्वपि 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' ( या० स्मृ० २ । १३३ ) इत्येवं योगीश्वरोक्तसजातीयत्वादिलक्षणौरससादृश्यसत्त्वेन भवत्येव न्यायस्यावसरः । सजातीयत्वादीत्यादिशब्देन द्राविडत्वान्ध्रत्वसमानशाखीयत्वादिकं ग्राह्यम् । न्यायश्च मुख्याभावे तत्सदृशः प्रतिनिधिरित्येवंरूपः । उपपादितमिति । मूले पुत्रप्रतिनिधिविचारे 'येषु दंपत्योरन्यतरावयवसंबन्धस्तेषां न्यायादेव प्रतिनिधित्वम्' इत्यादिग्रन्थेनोक्तं तद्व्याख्यायां पृष्ठ ( १८ ) विस्तरेण निरूपितमेतत्तत्रैव द्रष्टव्यम् ।

शङ्कते–नन्विति । क्षेत्रजादिपौनर्भवान्तानां तथा दत्तकाद्यपविद्धान्तानां च पञ्चानां मिलित्वा दशानां क्रमेण मात्रवयवसंबन्धप्रयुक्तसादृश्येन समानजातीयत्वप्रयुक्तसादृश्येन चाऽऽस्तामौरसप्रतिनिधित्वं, किंतु 'पूर्वाभावे परः परः' इति मुख्याभावे गौणः । गौणेष्वपि पुत्रिकासुताभावे क्षेत्रजः । तदभावे गूढज इत्येवं क्रमेण कथनं कथं संगच्छतां दशस्वपि सादृश्यस्याविशेषेण विद्यमानत्वादिति चेदुच्यते । औरसादीनां सर्वेषां पुत्राणां मध्ये पूर्वस्य पूर्वस्य श्रेयस्त्वेन हेतुना 'पूर्वाभावे परः परः' इति क्रमेण निर्देश इत्यर्थः । क्रमनिर्देशप्रयोजकं श्रेयस्त्वं ( तत्तारतम्यं ) नतु सादृश्यमिति यावत् । क्रमस्य श्रेयस्त्वतारतम्यप्रयोज्यत्वे स्मृतिकारं विष्णुं प्रमाणयति–'पूर्वः पूर्वः श्रेयान् स एव दायहरः' ( वि० स्मृ० ) इति । मनुरप्याह–श्रेयसः श्रेयसोऽलाभे पापीयान्रिक्थमर्हति ( म० स्मृ० ९ । १८४ ) इति । श्रेयःशब्दार्थं स्पष्टयति–दृष्टादृष्टेति । तत्र मातापित्रवयवानां संबन्धो दृष्टं श्रेयः ।

क्षयादि। वचनं तु नियमार्थं—यदि सोमं न विन्देत्पूतिकानभिषुणुयादित्यादिवत् । विशेषान्तरमस्मत्कृतायां विष्णुस्मृतिटीकायां केशववैजयन्त्यामवधेयम् ।

दुहितृप्रतिनिधौ पुराणेषु लिङ्गदर्शनान्युपलभ्यन्ते । तत्र दत्तकाया रामायणे बालकाण्डे दशरथं प्रति सुमन्त्रस्य सनत्कुमारोक्तभविष्यानुवादो लिङ्गम् ।

---

अदृष्टं श्रेयस्तु शुद्ध्यादिगुणयोगः । नन्वेवं क्षेत्रजादिषु यदि ‘ यथोक्तवस्त्वसंप्राप्तौ ग्राह्यं तदनुकारि यत् ’ इति न्यायादेव लभ्यते प्रतिधिधित्वं तर्हि ‘ क्षेत्रजादीन्...पुत्रप्रतिनिधीनाहुः...( म० स्मृ० ९ । १८० ) इति प्रतिनिधिवचनं किमर्थमित्यत आह—**वचनं त्विति** । ‘ सिद्धे सत्यारम्भो नियमार्थः ’ इति न्यायात्प्रतिनिधिवचनं नियमार्थमित्यर्थः । नियमाकारश्चेत्थम्—यदि मातापित्रन्यतरावयवसंबन्धेन प्रतिनिधित्वं भवति तर्हि क्षेत्रजाद्येकादशानां पुत्राणामेव नान्येषामिति । तेनावरुद्धादिदास्यामुत्पन्नस्य पित्रवयवसंबन्धेऽपि न प्रतिनिधित्वमिति नियमफलम् । सोमवल्ल्यभावे तत्सदृशत्वात्पूतीकानां प्रतिनिधित्वेन ग्रहणे प्राप्तेऽपि ‘ यदि सोमं न विन्देत्० ’ इत्यादिवचनं यथा सोमाभावे पूतीकाख्यामेव वल्लीं तत्स्थाने गृह्णीयान्न वल्ल्यन्तरं तत्सदृशमपीति नियमार्थं क्रियते तद्वदिदमपि प्रतिनिधिवचनं कृतमिति भावः ।

अथ क्षेत्रजादिकन्यानां दुहितुः प्रतिनिधित्वे पुराणादिषूपलभ्यमानानि लिङ्गानि प्रदर्शयितुमाह—**दुहितृप्रतिनिधाविति** । दुहितुः प्रतिनिधिर्दुहितृप्रतिनिधिः । तस्मिन् । यथा—क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः० ( म० स्मृ० ९ । १८० ) इत्येवं पुत्रस्य क्षेत्रजादिरेकादशविधः प्रतिनिधिर्भवति तद्वद्दुहितुरपि क्षेत्रजाद्येकादशविधा कन्या प्रतिनिधिर्भवति । तत्र दुहितुः प्रतिनिधिभूताया दत्तककन्याया लिङ्गं दृश्यत इति शेषः । दत्तकपुत्रवद्दत्तकपुत्रीस्वीकारे सनत्कुमारेणोक्तो यो भविष्यकालिकोऽर्थस्तस्य दशरथमुद्दिश्य सुमन्त्रेण कृतं यत्कथनं तदेव प्रमाणमिति प्रतिपादयन्नाह—**दत्तकाया इति** । अत्र दत्तिकेतीत्त्वेन भाव्यम् । दत्ताशब्दात्स्वार्थे कन् । अथवा क्षिपकादित्वं कल्प्यम् । **वार्तिकोक्ता गणा आकृतिगणा इति** वैयाकरणानां सिद्धान्तात् । **भविष्यानुवाद इति** । भविष्यत्कालिकस्य **सिद्धवद्गृहीतस्यार्थस्य** कथनमित्यर्थः । **लिङ्गमिति** । लिङ्ग्यतेऽवगम्यतेऽव्यक्तोऽर्थोऽनेनेति लिङ्गम् । अस्पष्टार्थज्ञानसाधनमित्यर्थः । यथा पीनो देवदत्तो दिवा न भुङ्क्त इत्यत्र पीनत्वरूपलिङ्गेन दिवाऽभुञ्जानस्य रात्रिभोजनरूपोऽव्यक्तोऽर्थोऽवगम्यतेऽन्यथा पीनत्वासंगतेस्तद्वत् ‘ अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ’ इतिवत्स्पष्टमनुक्तो यः ‘ पुत्रीप्रतिनिधिः कर्तव्यः ’ इत्येवंरूपोऽर्थः स तु ‘ कन्येयं दीयताम् ’ इत्याद्यनुवादरूपलिङ्गेनावगम्यते । अन्यथाऽपत्यार्थं

इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः ।
नाम्ना दशरथो वीरः श्रीमान् सत्यपराक्रमः ॥
सख्यं तस्याङ्गराजेन भविष्यति महात्मना ।
कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥
अपुत्रस्त्वङ्गराजो वै लोमपाद इति श्रुतः ।
स राजानं दशरथं प्रार्थयिष्यति भूमिपः ॥
अनपत्योऽस्मि धर्मज्ञ कन्येयं मम दीयताम् ।
शान्ता शान्तेन मनसा पुत्रार्थे वरवर्णिनी ॥
ततो राजा दशरथो मनसाऽभिविचिन्त्य च ।
ततो राजा दशरथो मनसाऽभिविचिन्त्य च ॥
दास्यते तां तदा कन्यां शान्तामङ्गाधिपाय सः ।
परिगृह्य तु तां कन्यां स राजा विगतज्वरः ॥
नगरं यास्यति क्षिप्रं प्रहृष्टेनान्तरात्मना ।
कन्यां तामृष्यशृङ्गाय प्रदास्यति स वीर्यवान् ॥ इत्यादि ।

तत्रैव लोमपादं प्रति दशरथवाक्यम्—

शान्ता तव सुता वीर सह भर्त्रा विशांपते ।

---

कन्यादानप्रार्थनाया असांगत्यापतेरिति भावः । तमेवानुवादमनुवदति—**इक्ष्वाकूणामिति** । रामायणे बालकाण्डे दशरथं राजानमुद्दिश्य तन्मन्त्रिणः सुमन्त्रस्य सनत्कुमारोक्तार्थानुवादोऽयम् । इक्ष्वाकुनामा सूर्यवंशस्य आदिराज इति पुराणप्रसिद्धिः । **सुधार्मिक इति** । सुतरां धर्माचरणशीलः । **सख्यं**—मैत्री । **तस्य**-दशरथस्य । **अङ्गराजेनेति** । अङ्गाख्यदेशस्य राज्ञा लोमपादेनेत्यर्थः । **अस्य**—दशरथस्य । **अनपत्य इति** । सामान्यसंततिवाचकापत्यशब्दप्रयोगेण पुत्रकन्यारूपोभयविधसंतानाभाव उक्तः । कन्यादाने तं प्रोत्साहयन्नाह—**धर्मज्ञेति** । कन्यादाने सत्यनपत्यत्वप्रयुक्तपित्र्यर्णादहं मुक्तो भवेयम् । तेन च तवापि महान् धर्मलाभो भविष्यतीति । तादृशधर्मलाभं समीक्ष्याप्यवश्यं कन्या देया भवत्यन्यथा धर्महानिः स्यादिति धर्मज्ञेन त्वया ज्ञायत एवेति गूढोऽभिप्रायः । **पुत्रार्थ इति** । पुत्ररूपेऽर्थे तत्स्थाने—पुत्रकार्यं कर्तुं पित्र्यर्णापाकरणार्थं दीयतामिति यावत् । **विगतज्वर इति** । पुत्रप्रतिनिधिकन्यालाभेनापगतोऽनपत्यत्वप्रयुक्तमनःसंतापो यस्येत्यर्थः । अत एवाऽऽह—**प्रहृष्टेनेति** ।

**कन्यादानानन्तरं दशरथो राजा लोमपादं प्रति यदाह तन्निर्दिशति—शान्ता**

मदीयं नगरं यातु कार्यं हि महदुद्यतम् ॥ इति ।

तत्रैव ऋष्यशृङ्गं प्रति लोमपादवाक्यम्—

अयं राजा दशरथः सखा मे दयितः सुहृत् ।
अपत्यार्थं ममानेन दत्तेयं वरवर्णिनी ॥
याचमानस्य मे ब्रह्मञ्शान्ता प्रियतरा मम ।
सोऽयं ते श्वशुरो धीर यथैवाहं तथा नृपः ॥ इत्यादि ।

अत्र दीयतां दास्यते प्रतिगृह्य दत्ताशब्दैर्दानविधिः स्पष्ट एव । तथाऽपुत्र

---

**तव सुतेति** । तव सुतेत्यनेन विधिना परिगृहीते पुत्रत्वस्येव सुतात्वस्योत्पत्त्या तस्या दुहितृप्रतिनिधित्वं सूचितम् ।

भार्यात्वेन कन्यासमर्पणानन्तरं लोमपाद ऋष्यशृङ्गं स्वजामातरं यदाह तन्निर्देष्टुमाह—**तत्रैवेति** । रामायणे बालकाण्ड एवेत्यर्थः । **अयं राजेत्यादि** । यथा भार्यात्वेन कन्यादानादहं ते श्वशुरोऽस्म्येवमयं दशरथोऽपि ते श्वशुरोऽस्ति । अत्राहं ते श्वशुर इति ऋष्यशृङ्गं प्रति लोमपादोक्त्या दशरथदत्तायाः कन्याया दुहितृप्रतिनिधित्वं स्पष्टमेवोक्तम् । न च पुत्रार्थे दीयतामित्युक्तत्वाद्दत्तायाः कन्यायाः पुत्रप्रातिनिधित्वमेव किं न स्यादिति वाच्यम् । मुख्याभावे तत्सदृशो हि प्रतिनिधिः । नहि कन्या पुत्रेणात्यन्तसदृशी, यथा पुत्रः । स्त्रीपुंसजातीयत्वेन तयोर्वैलक्षण्यात् । तस्मान्न कन्या पुत्रप्रातिनिधीभवितुमर्हति । किंच विधिना गृहीतायां कन्यायां तत्स्थानापन्नस्तद्धर्मं लभत इतिन्यायेन ग्रहीतृनिरूपितपुत्रत्वारोपाल्लोमपादतद्गृहीतकन्ययोः परस्परं पितृदुहितृभावाभावादृष्यशृङ्गं प्रति भार्यात्वेन लोमपादिकर्तृककन्यादानासंभवेनाहं ते श्वशुर इति लोमपादोक्तेः सुतरामसंगत्यापत्तेः । दत्तायाः कन्याया दुहितृप्रतिनिधित्वे तु लोमपादतद्गृहीतकन्ययोः परस्परं पितृदुहितृभावेन युज्यते निरुक्तोक्तिः । न चैवं पुत्रार्थे दीयतामित्येवं पुत्रार्थत्वेन कन्यादानयाचनाया लोमपादकर्तृकाया असंबद्धप्रलापत्वापत्तिरिति वाच्यम् । पुत्रिकाकरणविधिना पुत्रार्थत्वसंभवात् । एतेन दुहितृप्रतिनिधित्वेन गृहीतायाः कन्यायाः पुत्रिकाकरणं सूचितम् । अन्यथा तस्याः पुत्रार्थत्वासंभवादिति भावः ।

ननु दशरथस्यर्ष्यशृङ्गश्वशुरत्वमनुपपन्नमित्याशङ्कामपाकरोति—**अपत्यार्थमिति** । यतोऽनेन दशरथेन स्वसुता शान्ताऽपत्यार्थं याचमानाय मह्यं दत्ता तस्माद्धेतोरित्यर्थः । अनेनैतदुक्तं भवति—यद्दशरथस्यौरसदुहिता शान्ता मम त्वियं तत्प्रतिनिधिभूतेति । निरुक्तवचनेषु दीयतां, दास्यते, प्रतिगृह्य, दत्ता, इत्येवंरूपैः शब्दैः स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारार्थाभिधायकैस्तावद्दुहितुरपत्यत्वेन दानविधिर्व्यक्त

इत्युपक्रम्य पुत्रार्थं इत्युपसंहारादौरसपुत्रीवद्दत्तपुत्र्यपि पुत्रप्रतिनिधिर्भवतीति गम्यते।

---

एत्रावगतो भवति। अपत्यार्थं कन्यादानयाचना तदनुसारेण च कन्यादानमित्या-त्रिवर्णनाल्लिङ्गाद्यथा पुत्रो दत्तको भवत्येवं पुत्र्यपि दत्त(त्ति)का भवतीति यावत्। एवमियं लिङ्गादपत्यप्रतिनिधीभवन्ती कन्या किं पुमपत्यस्य प्रतिनिधिरथवा स्त्र्यपत्यस्येति जिज्ञासायां मुख्याभावे मुख्यसदृशस्य सतो मुख्यकार्यकारिण एव लोके प्रतिनिधित्वदर्शनात् 'यथोक्तवस्त्वसंप्राप्तौ ग्राह्यं तदनुकारि यत्। यवाना-मिव गोधूमा व्रीहीणामिव शालयः' इति तिथितत्त्वधृतवचनाच्चौचित्यादौरसदुहितुः प्रतिनिधिर्भवतीति बोध्यम्।

दुहितुरपत्यत्वेन दानविधिसत्त्वादेव महाकविश्रीभवभूतिना स्वप्रणीत उत्तरराम-चरिते प्रथमाङ्के प्रस्तावनायां 'कन्यां दशरथो राजा शान्तां नाम व्यजीज-नत्। अपत्यकृतिकां राज्ञे लोमपादाय यां ददौ' अत्रापत्यकृतिकामित्यस्य तट्टीकाकृद्वीरराघव इत्थमर्थं प्रयोजनं चाऽऽह—अपत्यस्य कृतिर्व्यापारो यस्यास्ता मित्यर्थः। साक्षादपत्यस्य यः कर्तव्योऽर्थः स्वपितरुद्धारादिः स एव कर्तव्योऽर्थो यस्यास्तादृशीमपत्यकार्यकारिणीमिति यावत्। कन्यां ददावितावत्येवोक्ते कलत्रार्थमि-त्याशङ्का स्यात्तदपाकरणायापत्यकृतिकामिति यदुक्तं तत्साधु संगच्छते। अत्रा-पत्यत्वेन दुहितुर्दानं स्पष्टमेवोच्यते। नहि महाकवयः प्रमाणव्यतिरेकेणार्थं वर्णयेयु-रिति संभाव्यते। महत्त्वभङ्गापत्तेः। सा चेयमपत्यत्वेन दत्तिका कन्या न केवलं पुत्रीप्रतिनिधिरिति मन्तव्यमपि तु पुत्रप्रतिनिधिरपीत्याह—**तथेति**।

ननु लोमपादेन दशरथः कन्यां याचित इति सत्यम्। किंतु दुरदृष्टादिना दुहितुरनुत्पत्तौ दौहित्रात्यन्तासंभवेन दौहित्रप्रयुक्तलोकप्राप्तेः सुतरां निरस्तत्वात्तत्संपिपाद-यिषुर्लोमपादो दुहित्रर्थं कन्यां याचितवानित्येव कल्प्यते। युज्यते चेदम्। अन-पत्योऽस्मीत्यविशेषेणानपत्यत्वं प्रकृत्य 'कन्येयं मम दीयताम्' इत्युक्तेः। तत-श्चापत्यत्वेन दीयमाना कन्या पुत्रीप्रतिनिधिरेव संभवेत्तत्कथमुच्यते पुत्रप्रतिनिधिरपी-त्याशङ्कां निराकुर्वन्नाह—**अपुत्र इत्युपक्रम्येति**। 'अपुत्रस्त्वङ्गराजा वै' इत्य-त्रापुत्रपदेऽविद्यमानः पुत्रः पुमपत्यं यस्येति बहुव्रीहिः, न त्वविद्यमाना पुत्री यस्येति। तथा सति 'नद्यृतश्च' (पा० सू० ५।४।१५३) इति नित्यकबापत्त्या 'अपु-त्रीकः' इति स्यात्। नन्वपुत्रेति बहुव्रीहिघटकं पुत्रपदं कृतैकशेषमिति मन्त-व्यम्। स चाप्येकशेषो द्विधा संभवति। यथा—पुत्रश्च पुत्री च पुत्रौ। 'पुमान् स्त्रिया' (पा० सू० १।२।६७) इति। अथवा पुत्रश्च दुहिता च पुत्रौ। 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' (पा० सू० १।२।६८) इतीति। द्वावपि विरू-

पैकशेषौ । सरूपसूत्राप्रवर्तनात् । तथा चाविद्यमानौ पुत्रौ सुतदुहितरौ यस्येति द्विवचनान्तेन विग्रहः कर्तव्य इति चेत् । नैतद्युक्तम् । सरूपविरूपैकशेषसंभवस्थले विरूपैकशेष एव ग्राह्य इति नियमाभावात्सरूपैकशेषापेक्षया विरूपैकशेषस्य विलम्बोपस्थितिकत्वेन बहिरङ्गतयाऽसिद्धत्वाद्दृढतरप्रमाणमन्तरा तद्ग्रहणस्यायुक्तत्वात् । सरूपैकशेषस्त्वकिंचित्करः । वृत्तावपसर्जनपदे संख्याविशेषानवगमेन पुत्रत्वावच्छिन्नप्रतियोगिकसंसर्गाभाववानित्यर्थप्रतीतेः पुत्रत्वादिनैव रूपेण प्रकरणवशादेकानेकव्यक्तिबोधादौत्सर्गिकैकवचनस्यैव न्याय्यत्वेन राज्ञ इत्येकवचनान्तस्यैव पुरुषेण समासः । न तु राज्ञोः राज्ञां वेति द्विवचनान्तस्य बहुवचनान्तस्य वा पुरुषेण समास इति सिद्धान्तितत्वात् । प्रत्युताविद्यमानौ पुत्रौ यस्येति द्विवचनाद्यन्तयोः समास एकसत्त्वेऽपि द्वयं नास्तीति न्यायेन पुत्रद्वयाभावस्य वक्तुं शक्यत्वेनैकपुत्रवतोऽपि दत्तकग्रहणाधिकारपसक्त्यैकपुत्रवतोऽपि न पुनग्रहणाधिकार इत्यर्थक 'पुत्रवतो नाधिकारः' इत्युक्तपूर्वोक्तसिद्धान्तभङ्गापत्तेश्चेति भावः । ततश्चाऽऽत्मनः पुमपत्याभावकथनेनोपक्रान्तायाः कन्यादानप्रार्थनायाः 'पुत्रार्थे दीयताम्' इति पुत्रकार्यकरणार्थं दीयतामित्युक्त्या समापितत्वादुपक्रमोपसंहाररूपेण तात्पर्यनिर्णायकलिङ्गेन दत्तकपुत्र्यपि पुत्रप्रतिनिधिर्भवतीत्यवगम्यते । यथौरसपुत्री 'अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्' ( म० स्मृ० ९ । १२७ ) इत्युक्तपुत्रिकाकरणविधिना पुत्रप्रतिनिधिर्भवति तद्वद्दत्तकपुत्र्यपि पुत्रिकाकरणविधिना पुत्रप्रतिनिधिर्भवतीत्यर्थः ।

अयं भावः—पुत्रकार्यकरणार्थं कन्यां याचितवान् दशरथं प्रति लोमपादः । तत्र पुत्रः पिण्डदानादिना 'पुत्रेण लोकाञ्जयति' ( म० स्मृ० ९ । १३७ ) इत्युक्तपरलोकजयसाधकत्वेन च पित्रुपकारकरणे यथा साक्षात्समर्थः, न तथा कन्या तादृशपुत्रकार्यकरणे साक्षाच्छक्ता । तस्याः स्त्रीत्वेन संपूर्णसाङ्गपुत्रकार्यकारित्वाभावात्परलोकसाधकत्वाभावाच्च । अपि तु दौहित्रद्वारा तादृशपुत्रकार्यकरणे समर्था भवति । दौहित्रद्वारा पुत्रकार्यकारित्वाशयेनैव 'तत्समः पुत्रिकासुतः' ( या० स्मृ० २ । १२८ ) इति वचने पुत्रिकासुत इत्यत्र पुत्रिकैव सुतः पुत्रिकासुत इति कर्मधारयसमासाश्रयणेन पुत्रिकायामौरससाम्यमतिदिष्टवान् याज्ञवल्क्यः । पुत्रप्रतिनिधिर्दुहितेत्यभिहितवानिति यावत् । दौहित्रद्वारा पुत्रकार्यकारित्वमेव हि दुहितुः पुत्रप्रतिनिधित्वमिति तात्पर्यम् । इदमेव पुत्रिकाकरणमित्युच्यते यद्दुहितुर्दौहित्रद्वारा पुत्रकार्यकारित्वसंपादनम् । तदुक्तं स्पष्टं मनुना—अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥ ( म० स्मृ० ९ । १२७ )

इति । एवं रीत्या यद्यपि पुत्रकार्यकारित्वं दुहितुरुपपादितं तथाऽपि तत्रैतावान्विशेषो बोध्यः--यथा पुत्रः पिण्डोदकदानादिना पितरमुपकरोति तथा दुहिताऽपि दौहित्रद्वारा पिण्डदानादिना पितरमुपकरोत्येव । तथा । यथा च पुत्रः स्वजननेन ‘ नापुत्रस्य लोकोऽस्ति ’ इत्युक्तालोकतापरिहारेण पितुः परलोकसाधनं भवति तद्वद्दुहिताऽपि दौहित्रद्वाराऽलोकतापरिहारेण पितुः परलोकप्राप्तिसाधनं भवति । किंतु यथा पुत्रः ‘ पुत्रेण लोकाञ्जयति ’ इत्युक्तपुत्रप्रयुक्तलोकप्राप्तिकरो भवति न तथा दुहिता दौहित्रद्वाराऽपि पुत्रकृतलोकप्राप्तिकरी भवति ’ अपि तु दौहित्रप्रयुक्तलोकप्राप्तिकरी भवतीति । अत एव दुहितर्यौरसपुत्रसाम्यमतिदिष्टवानिति भावः । तेनौरसदुहितृसत्त्वे दौहित्रप्रयुक्तलोकप्राप्तावपि पुत्रप्रयुक्तलोकप्राप्त्यर्थं लोके क्रियमाणः पुत्रप्रतिनिधिः संगच्छते । संगच्छते चौरसपुत्रसत्त्वे पुत्रप्रयुक्तलोकप्राप्तावपि दौहित्रप्रयुक्तलोकप्राप्त्यर्थं दुहित्रभावे लोके क्रियमाणः पुत्रीप्रतिनिधिः । उपपादितं चैतद्विस्तरेणाधस्तात् ( पृ० २१४ ) तत्तत्रैव द्रष्टव्यम् ।

नन्वेवं रीत्या भवत्वौरसदुहितुः पुत्रप्रतिनिधित्वं तथाऽप्यौरसपुत्रीसत्त्वेऽप्यौरसपुत्राभावे तत्प्रतिनिधित्वेन दत्तकपुत्रग्रहणे ‘ अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ’ इतिवदौरसपुत्रसत्त्वेऽप्यौरसदुहित्रभावे तत्प्रतिनिधित्वेन दत्तकपुत्रीग्रहणे किं प्रमाणमिति चेच्छृणु । ‘ ऋतुगमने स्त्रीपुंसरूपां प्रजां भावयेत् ’ इति यः प्रजोत्पादनविधिरभिधीयते तत्र हेतुः क्रियालोपालोकतादिपरिहारः । क्रियालोपादिपरिहारप्रयुक्तः प्रजोत्पादनविधिरित्यर्थः । तथा च पिण्डोदकदानादिक्रियार्थं लोकप्राप्त्यर्थं चौरसपुत्र आवश्यकः । स चाऽऽवश्यक औरसो दुरदृष्टवशाद्यदि न लभ्यते तदा मुख्याभावे प्रतिनिधिरिति न्यायेन ‘ ब्राह्मणानां सपिण्डेषु ’ इत्युक्तदिशाऽन्यं पुत्रं परिग्रहविधिना तत्स्थाने प्रतिनिधाय तद्द्वारा पिण्डोदकाद्यखिलं कर्मजातं संपाद्यत इति हि लोके प्रसिद्धम् । अनेन न्यायेनौरसपुत्राभावे तत्प्रतिनिधित्वेन दत्तकपुत्रग्रहणं सिध्यति । तथा ‘ अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ’ (म०स्मृ०९।१२७) इत्यनेन यः पुत्रिकाकरणविधिराम्नायते तत्र हेतुर्भाविपुत्र(दौहित्र)द्वारा क्रियालोपादिपरिहारः । क्रियालोपादिपरिहारप्रयुक्तः पुत्रिकाकरणविधिराम्नात इत्यर्थः । तथा च तादृशदौहित्रलाभार्थमौरसपुत्र्यावश्यकी । आवश्यकी चौरसपुत्री यदि तत्प्रयोजकादृष्टाभावान्न लभ्यते तदा निरुक्तन्यायेनान्यां पुत्रीं परिग्रहविधिना तस्याः स्थाने प्रतिनिधाय पुत्रिकाकरणं कृत्वा तदुत्पन्नदौहित्रद्वारा पिण्डोदकदानाद्यखिलं कर्मजातमभीष्टं संपादनीयमिति न्यायादेवाऽऽगतं दत्तकपुत्रग्रहणवदौरसपुत्र्यभावे दत्तकपुत्रीग्रहणम् । तथा च दत्तकपुत्रीग्रहणे निरुक्तन्याय एव प्रमाणमित्याशयः । लिङ्गदर्शनं तूक्तमेव । एवं च यथौ-

क्रीतायां हेमाद्रौ स्कन्दपुराणे-

आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।
धर्म्येण विधिना दातुमसगोत्राऽपि युज्यते ॥

लैङ्गेऽपि-

कन्यां लक्षणसंपन्नां सर्वदोषविवर्जिताम् ।
मातापित्रोस्तु संवादं कृत्वा दत्त्वा धनं महत् ॥
आत्मीकृत्य तु संस्थाप्य वस्त्रं दत्त्वा शुभं नवम् ।
भूषणैर्भूषयित्वा तु गन्धमाल्यैरथार्चयेत् ॥
निमित्तानि समीक्ष्याथ गोत्रनक्षत्रकादिकम् ।
उभयोश्चित्तमालोड्य उभौ संपूज्य यत्नतः ॥
दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने ।

---

रसपुत्री पुत्रिकाकरणविधिना दत्तकपुत्रवत्पुत्रप्रतिनिधिर्भवति तथा दत्तकपुत्र्यपि पुत्रिकाकरणविधिना पुत्रप्रतिनिधिर्भवतीति पूर्वोक्तलिङ्गादवगम्यते । यदि चेयं दत्तकपुत्री दुहितृप्रतिनिधिर्न स्यात्तदौरसपुत्राभावेऽप्यौरसपुत्रीसत्त्वे दत्तकपुत्रीग्रहणं न स्यात् । कुत इति चेत्प्रतिपाद्यते । यथौरसपुत्रसत्त्वे दत्तकपुत्रपरिग्रहो न भवति तद्विधौ '[अपुत्रेणैव' इत्यौरसपुत्राभावस्य निमित्तत्वेनोक्तस्तथौरसपुत्रीसत्त्वे दत्तकपुत्रीग्रहणं न स्यात् । मुख्याभावे हि प्रतिनिधिरुच्यते । मुख्या चात्रौरसपुत्री । न च तस्या अभावोऽस्ति, येन तत्प्रतिनिधिर्दत्तककन्या परिगृह्येतेति । एवं दत्तकपुत्रीविषये प्रमाणमभिधाय क्रीतायां पुत्र्यां प्रमाणं प्रदर्शयितुमाह--**क्रीतायामिति**। **आत्मीकृत्येत्यादि** । क्रयेण स्वीयां कृत्वा । मूल्यं दत्त्वा वस्तुग्रहणं क्रयः । **धर्म्येणेति** । धर्मादनपेतेन । 'चतुरो ब्राह्मणस्याऽऽद्यान्प्रशस्तान् कवयो विदुः' (म० स्मृ० ३ । २४ ) इत्याद्युक्तब्राह्मादिविधिनेत्यर्थः । असगोत्राऽपि दातुं युज्यत इत्यन्वयः । क्रयेण सुवर्णादिदानरूपेण तस्यां क्रेतुः स्वत्वसत्त्वादन्यस्मै दानं युक्तं भवतीत्यर्थः । अत्राऽऽत्मीकृत्य सुवर्णेनेत्यनेन क्रयविधिः स्पष्ट एवाभिहितः ।

लिङ्गपुराणस्थं क्रयविधिं स्पष्टयति--**कन्यामिति** । **लक्षणसंपन्नामिति** । 'अव्यङ्गाङ्गीम्०' ( म० स्मृ० । ३ । १० ) इत्यादिभिर्मनुनोक्तबाह्यलक्षणैः 'अष्टौ पिण्डान् कृत्वा' इत्याद्याश्वलायनोक्ताभ्यन्तरलक्षणैश्च युक्ताम् । **सर्वदोषेति** । सापिण्ड्यासवर्णत्वान्यत्रासक्तमनस्त्वादिभिः सकलदोषै रहिताम् । **आत्मीकृत्येति** । प्रचुरं धनं दत्त्वा स्वीयां संपाद्येत्यर्थः । **उभयोश्चित्तमिति** । द्वयोः परस्परानुरागं परीक्ष्येत्यर्थः । श्रोत्रियायाधीतवेदायेति द्वयेनाधीतज्ञातवेदवेदार्थायेत्यर्थः । ब्रह्मचारिणि

साक्षादधीतवेदाय विधिना ब्रह्मचारिणे ॥ इति।

अत्र सुवर्णेनाऽऽत्मीकृत्य धनं दत्त्वेत्यादिशब्दैः क्रयविधिः स्पष्ट एव।

कृत्रिमाया हरिवंशे शूरापत्यगणनायाम्—

महिष्यां जज्ञिरे शूराद्भोजायां पुरुषा दश।
वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः ॥ इत्युपक्रम्य—
देवभागस्ततो जज्ञे तथा देवश्रवाः पुनः।
अनावृष्टिः कनवको वत्सवानथ गृञ्जिमः।
श्यामः शमीको गण्डूषः पञ्च चास्य वराङ्गनाः ॥

इति मध्ये विधाय—

पृथुकीर्तिः पृथा चैव श्रुतदेवाः श्रुतश्रवाः।
राजाधिदेवी च तथा पञ्चैता वीरमातरः ॥

इति पश्चापि विगणय्य

पृथां दुहितरं चक्रे कुन्तिस्तां पाण्डुरावहत्।
यस्यां स धर्मविद्राजा धर्माज्जज्ञे युधिष्ठिरः ॥

अत्र चक्र इति कर्तुरेव व्यापारश्रवणादस्यां कृत्रिमत्वम्।

पाद्मे भौमव्रते च—

आसीत्सुनन्दिकः पूर्वं ब्राह्मणो वेदपारगः।

---

इत्यकृतविवाहस्योपलक्षणम्। नतु समावर्तनव्यावर्तकम्। तदन्तरेण विवाहाधिकाराभावात्। अत्र धनं दत्त्वेत्यनेन क्रयविधिरुक्तः।

कृत्रिमायां पुत्र्यां प्रमाणं दर्शयति—**महिष्यां जज्ञिर इत्यादिना**। शूरनामा कश्चिद्वृष्णिवंशीयो राजा। **महिष्यामिति**। कृताभिषेकायां पट्टराज्यामित्यर्थः। **भोजायामिति**। भोजकुलोत्पन्नायां महिष्यां शूराज्जज्ञिर इत्यन्वयेनार्थाच्छूरस्य महिष्यामित्यर्थः। पूर्वं दश पुरुषाः संभूताः। तानेव दश नामतः क्रमेण गणयति—**वसुदेव इत्यादिना**। अस्य शूरस्य राज्ञः पञ्च स्त्रियः पृथुकीर्तिरित्यादयः। पञ्चापि ता वीराणां पुत्राणां जनन्य इति गणयित्वा कुन्ती राजा पृथां दुहितरं चक्रे यां पाण्डुनामा राजा परिणीतवान्, इत्याद्युक्तं हरिवंशे। [अत्र वसुदेवभगिनीं पृथां कुन्तिर्दुहितरं चक्र इति कर्तरि प्रयोगात्कर्तुरेव व्यापारस्याभिधानेनास्या दुहितुः कृत्रिमत्वमुक्तम्।

कृत्रिमदुहितृत्वे पुराणान्तरस्थां कथां प्रमाणमित्युदाहरति—**आसीदिति**। **बन्ध्येति**।

तस्य सुनन्दिका भार्या वन्ध्या तु बहुलोभिनी ॥
तस्यापत्यं न संजातं वृद्धत्ववन्ध्यभावतः ।
तेनान्यस्य सुता जातु सुशीला रूपसंयुता ॥
ब्राह्मणस्य कुले जाता गृहीत्वा पोषिता स्वयम् ।
तां च पुत्रीं गृहे तस्य ब्राह्मणी सा ह्यपालयत् ॥
विवाहार्थं तु विप्रस्य दत्ता सोमेश्वरस्य च ।
वेदोक्तविधिना तत्र विवाहमकरोत्तदा ॥ इत्यादि ।

अत्रापि स्वयं गृहीत्वेति श्रवणं कृत्रिमत्वे लिङ्गम् । न च स्वयं पोषिते-त्यन्वयः साधुः । ग्रहणपोषणयोः क्त्वाप्रत्ययाभिहितसमानकर्तृकत्वेनैव स्वयं

---

प्रजोत्पत्तिरूपफलशून्या । प्रसवशक्तिरहितेति यावत् । अतिशयितलोभवती । **वृद्धत्व-वन्ध्यभावत इति** । वृद्धाऽपगतरजस्का । वन्ध्योक्ता । वृद्धत्वाद्वन्ध्यत्वाच्चेत्यर्थः । सुशीला–सुस्वभावा । रूपसंयुता–प्रशस्तरूपवती । **स्वयमिति** । अस्मिन्कथाप्रघट्टके स्वयं गृहीत्वेत्यन्वयेन स्वयंकर्तृकग्रहणस्योक्तेरस्याः कृत्रिमत्वं बोध्यम् ।

दुहितुः कृत्रिमात्वे प्रमाणभूतमर्थमाक्षेप्तुं शङ्कते–**न चेति** । स्वयमित्यस्याऽऽत्मनेत्यर्थकस्य पूर्वस्मिन्कस्मिंश्चिदर्थे संबन्धस्योचितत्वेन संनिहितत्वात्पोषणक्रियायां कर्तृत्वसंबन्धेनान्वयात्स्वयं पोषितेत्यर्थप्रतीतेः शब्दतो ग्रहणस्याप्रतीत्याऽस्याः कृत्रिमात्वं न प्रतिपादितं स्यात् । स्वयं पुत्रार्थिना धनक्षेत्रदर्शनादिप्रलोभेनैव तव पुत्रोऽसीत्यर्थमङ्गीकारित इत्यर्थक ‘ कृत्रिमः स्यात्स्वयंकृतः ’ ( या० स्मृ० २ । १३१ ) इति याज्ञवल्क्यप्रोक्तकृत्रिमलक्षणानाक्रान्तत्वादिति शङ्काभिप्रायः । इदमेव हि कृत्रिमत्वं यत्पुत्रार्थिकर्तृकग्रहणव्यापारप्रयोज्यपुत्रतावत्त्वमिति यावत् । उत्तरयति–**ग्रहणपोषणयोरिति** । ‘ गृहीत्वा पोषितां स्वयम् ’ इति हि पाठक्रमः । तत्र प्रथमतो गृहीत्वेति ग्रहणक्रियायाः केन गृहीत्वेति कर्तुराकाङ्क्षायां सत्यां योग्यत्वादुपस्थितत्वाच्च स्वयमित्यस्य कर्तृत्वसंबन्धेन ग्रहणक्रियायामन्वये कृते, समान एकः कर्ता ययोस्तादृशक्रिययोर्मध्ये पूर्वकालवृत्तिक्रियावाचकाद्धातोर्विहितेन क्त्वाप्रत्ययेन स्वप्रकृतिग्रहधातुवाच्यक्रियाकर्तुरेव स्वोत्तरधातुवाच्यक्रियायां कर्तृत्वेनान्वयस्याभिधानादनायासतः स्वयमित्यस्य पोषणेनाप्यन्वयस्य लाभात्स्वयं गृहीत्वेत्येवमन्वयः समञ्जसः । स्वयं पोषितामित्येवं स्वयमित्यस्य प्रथमतः पोषणक्रियायामन्वये कृते, तेन स्वयमित्यस्य ग्रहणक्रियायामन्वयोऽभिहितो न स्यात् । पोषितामित्यत्र त्वाप्रत्ययानुपादानात् । ततश्च स्वयं गृहीत्वेत्यर्थाप्रतीतेः कृत्रिमात्वं नोक्तं स्यादिति स्वयं पोषितामित्येवं नान्वयः समञ्जस इत्यर्थः ।

पोषणस्य सिद्धत्वात् । दत्तात्मिकायाः पुराणान्तरेषु मृग्यम् ।

अपविद्धायां महाभारत आदिपर्वणि शाकुन्तले दुष्यन्तशकुन्तलासंवादानुवादकमेव वाक्यम्—

जनयामास स मुनिर्मेनकायां शकुन्तलाम् ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ।
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥
तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समन्तात्पर्यवारयन् ॥
नेमां हिंस्युर्वने बालां क्रव्यादा मांसगर्धिनः ।
पर्यरक्षंस्तदा तत्र शकुन्ता मेनकात्मजाम् ॥
उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ।

---

**दत्तात्मिकाया इति** । आत्मानं स्पर्शयेद्यस्तु स्वयंदत्तस्तु सः स्मृतः ( म० स्मृ० ९ । १७७ ) इत्युक्तलक्षणस्वयंदत्ताख्यप्रतिनिधिपुत्रवत्स्वयंदत्तात्मिकायाः पुत्र्या इत्यर्थः । नतु दत्तिकायाः । तदुदाहरणस्यानुपदमेवोक्तत्वात । तादृशदत्तात्मिकायाः प्रतिनिधिदुहितुरुदाहरणं यत्र क्वापि पुराणान्तरेऽन्वेष्यम् । प्रयत्नेनान्विष्यमाणे तदुपलभ्येत नतु सर्वथा तन्नास्तीति मन्तव्यमिति भावः ।

**अपविद्धायामिति** । 'मातापितृभ्यामुत्सृष्टम०' ( म० स्मृ० ९ । १७१ ) इत्याद्युक्तापविद्धाख्यपुत्रवदपविद्धाख्याया प्रतिनिधिभूतायां दुहितरि प्रमाणमुपाख्यानं दर्शयति—**महाभारत इत्यादिना वाक्यमित्यन्तेन** । **जनयामास स मुनिरित्यादि** । मुनिरत्र विश्वामित्रः । प्रकरणानुसारात् । **मेनकायामिति** । मेनकानामाप्सरःसु । **प्रस्थ इति** । पर्वतस्य देवतादिनिवासयोग्ये प्रदेशे । **अभित इति** । मालिनीनद्याः समीपे । **मालिनीमन्विति** । मालिनीनद्यास्तीर इत्यर्थः । **कृतकार्येति** । कृतं संपादितं कार्यं विश्वामित्रस्य तपोभ्रंशरूपं कर्तव्यं यया सेत्यर्थः । तपस्यतो महामुनेरिन्द्रो नित्यमतीव बिभेति । यतोऽयं तपःप्रभावान्मम पदं समुपाहरेदिति । एतदेव सामान्यमुखेनोच्यते—अस्ति ह्यन्यसमाधिभीरुत्वं देवानामिति । बिभ्यता देवेन्द्रेणैव विश्वामित्रतपोभङ्गार्थं प्रेषिता अभूवन् मेनका नामाप्सरसः । सा च मेनका देवेन्द्रशासनानुसारेण तत्कार्यं संपादितवतीत्यर्थः । **सिंहेति** । सिंहव्याघ्रादिहिंस्रप्राणिसंकुले । **शकुनाः** पक्षिणः । **पर्यवारयन्निति** । सर्वत आवव्रुः । **क्रव्यादा इति** । क्रव्यमाममांसमदन्ति ते । **मांसगर्धिन इति** । मांसाभिकाङ्क्षिणः । **शकुन्ताः** पक्षिणः

निर्जनेऽपि वने रम्ये शकुन्तैः परिवारिताम् ॥
आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् ।
शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते ॥
क्रमेण ते त्रयोऽप्युक्ताः पितरो धर्मशासने ।
निर्जने तु वने यस्माच्छकुन्तैः परिवारिता ॥
शकुन्तलेति नामास्याः कृतं चापि ततो मया ।
एवं दुहितरं विद्धि मम विप्र शकुन्तलाम् ॥

शकुन्तलोवाच—

एतदाचष्ट पृष्टः सन् मम जन्म महर्षये ।
सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ॥
कण्वं हि पितरं मन्ये पितरं स्वमजानती ॥ इति ।

अत्रोत्सृष्टाग्रहणादपविद्धाविधिः स्पष्ट एव । तदेवं तत्तद्विध्यविनाभूतलिङ्गदर्शनैस्तत्तद्विधिसिद्धिः सुकरैवेत्यलं पल्लवितेन ।

---

**परिवारितामिति** । सर्वत आवृताम् । **दुहितृत्व इति** । आरोपिते दुहितृभावे । ममेयं दुहितेति बुद्ध्या न्यवेशयमित्यर्थः । तस्यां दुहितृबुद्धौ शास्त्रीयं वचनं प्रमाणत्वेनोदाहरति—**शरीरकृदिति** । जन्मदाता, चोरव्याघ्रादिक्रूरहिंस्रप्राणिभ्यो मोचनेन प्राणसंरक्षकः प्राणदाताऽन्नदाता च प्रसिद्ध इति त्रयोऽपि धर्मशास्त्रे पितृशब्देनोक्ताः । तत्र जन्मदाता मुख्यः पिता । द्वावन्यौ पितृसमत्वात्पितराविति त्रयोऽपि पितृशब्दाभिधेया इति भावः । अन्यत्र तु जन्मदातोपनेता विद्यादाताऽन्नदाता भयत्राता चेति पञ्च पितर उक्ताः । प्राणदातृत्वादन्नदातृत्वाच्चास्याः पिता कण्व इत्यर्थः । **शकुन्तलेति** । यस्माच्छकुन्तैः परिवारिताऽभूत्तस्माच्छकुन्तलेत्यस्या नाम कृतवान् मुनिः । शकुन्तैर्लायत आदीयते या सा शकुन्तलेति व्युत्पत्तिर्बोध्या । लाधातोर्षअर्थे कविधानमिति कः । एवं कण्वेन जीवदानेन पालितत्वात्पोषितत्वाच्चाहं कण्वमुनेः सुता न तु तच्छरीरजन्यत्वादिति भावः । अत एवाहं स्वं पितरं जनकमजानती कण्वं पितरं वेद्मीत्यादिः स्पष्ट एवार्थः । अत्र ‘ जातमुत्सृज्य तं गर्भम् ’ ‘ आनयित्वा ततश्चैनाम् ’ इत्यादिवाक्यार्थपर्यालोचनया मेनकयोत्सृष्टायाः कन्यायाः कण्वेन मुनिना ग्रहणान्मनुनोक्तापविद्धाख्यपुत्रप्रतिनिधिविधिवदपविद्धाख्यदुहितृप्रतिनिधिविधिः स्पष्ट एवाभिहितोऽस्ति । **तदेवमिति** । अयं भावः—पीनो देवदत्तो दिवा न भुङ्क्त इत्युक्ते रात्रिभोजनस्याविनाभूतं = रात्रिभोजनस्याव्यभिचारि = तन्नियतसहचरमित्यर्थः । रात्रिभोजनमन्तराऽशक्यावस्थितिकमिति यावत्

यद्वेवदत्तनिष्ठपीनत्वदर्शनं तेन लिङ्गेन यथा दिवाऽभुञ्जानस्य देवदत्तस्य रात्रौ भोजनमनुमीयते तद्वद् दत्तककृत्रिमक्रीतापविद्धाद्याख्यानां दुहितृप्रतिनिधीनां ये परिग्रहविधयस्तदविनाभूतानि तादृशविधिभिः सह नियतावस्थितिकानि यानि भारताद्युक्तलिङ्गानि दुष्यन्तशकुन्तलासंवादानुवादादीनि तेषां दर्शनैर्भारतादिदृष्टलिङ्गैरित्यर्थः । दत्ताकाख्यः पुत्रीप्रतिनिधिः कर्तव्यः क्रीताख्यः पुत्रीप्रतिनिधिः कर्तव्यः, इत्येवं ते ते विधयोऽनुमातव्या इत्यर्थः । एवं कृत्रिमस्वयंदत्तापविद्धानां दुहितृप्रतिनिधीनां विधयस्तेन तेन लिङ्गेनोहितुं सुशका इति बोध्यम् । न चैवं दुहितृप्रतिनिधीकरणं ग्रन्थकृदसंमतमिति मन्तव्यमिति तात्पर्यमित्यलम् ।

अथ दत्तकाशौचमुच्यते । दत्तकश्च द्विविधः—केवलो व्यामुष्यायणश्चेति । व्यामुष्यायणोऽपि नित्यानित्यभेदेन द्विविध इत्यन्यत् । केवलः प्रतिग्रहीतुरेव पुत्रः । व्यामुष्यायणस्तु दातृप्रतिग्रहीत्रोरुभयोरपि । अत एव संपादितप्रतिग्रहीतृगोत्रसापिण्ड्यादिः सन्निवृत्तजनकगोत्रसापिण्ड्यादिः केवलदत्तकः । अयमेव शुद्धदत्तक इत्युच्यते । संपादितजनकप्रतिग्रहीत्रुभयगोत्रसापिण्ड्यादिर्व्यामुष्यायणदत्तक इत्याहुः । आशौचं नाम शुचेर्भावः शौचमिति भावप्रत्ययान्तशौचशब्दस्य नञा समासे नञः शुचीश्वरेत्यादिपाणिनिसूत्रेण वैकल्पिकया पूर्वपदादिवृद्ध्या निष्पन्नत्वादाशौचशब्दस्य न शौचमशौचमिति व्युत्पत्त्या शौचाभावोऽर्थः । शौचं पुनः पापक्षयः । ततश्च पापक्षयः शौचं तदभावस्त्वाशौचं पापमित्यर्थः पर्यवस्यति । तच्च न युक्तम् । आशौचे पापलक्षणासंगतेः । तथा हि–' चोदनालक्षणोऽर्थो धर्मः ' ( जै० १ । १ । २ ) इति सूत्रेण धर्मलक्षणं कुर्वता जैमिनिमुनिना ' अनर्थोऽधर्मः ' इत्यधर्मलक्षणमप्यर्थात्सूचितम । अनर्थश्चानिष्टसाधनम् । यथोक्तं भाष्यकृता शबरस्वामिना–कोऽर्थो योऽभ्युदयाय, कोऽनर्थो योऽनभ्युदयाय ' इति । पापाधर्मशब्दौ च पर्यायौ । तथा चास्य पापक्षयाभावरूपस्याऽऽशौचस्यानिष्टसाधनताबोधकचोदनाभावान्नाधर्मतेति । यथा न कलञ्जं भक्षयेदिति कलञ्जभक्षणनिषेधबोधकश्रुतिवाक्येनानिष्टसाधनताबोधनात्कलञ्जभक्षणमधर्मस्तद्वदिति भावः । अथैवं मन्यसे कर्माधिकारः शुद्धिः । तद्विपर्ययश्चाशुद्धिः । शुद्धिः शौचमशुद्धिराशौचं चेत्यनर्थान्तरमिति । तदपि न । तथा सति ' आशौचे दानप्रतिग्रहस्वाध्याया निवर्तन्ते ' इत्यादावाशौचकर्मानधिकारयोरुद्देश्यविधेयभावो न स्यात् । तस्य भेदायत्तत्वात् । एतन्मते तयोरभेदस्य स्पष्टत्वात् । न च दानाद्यनधिकार एवाऽऽशौचमिति वाच्यम् । ' दशाहं शावमाशौचं सपिण्डेषु विधीयते ' ( म० स्मृ० ५ । ५९ ) इत्यादिवाक्यान्तरप्राप्ताशौचानुवादेन तदनधिकारबोधनात् । किंच

**अथ दत्तकाशौचनिर्णयः। तच्च जनककुले परस्परं नास्त्येव।**

**गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः।**

**गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥ इति मनुवचनात्।**

**अत्र च स्वधापिण्डशब्दावशौचादिसकलपितृकार्योपलक्षणम्। पिण्डदाना-**

---

कर्मानधिकार एवाऽऽशौचं सपिण्डेष्विति वदन् प्रष्टव्यः? किं कर्ममात्रानधिकारः कर्मविशेषानधिकारो वा?। नाऽऽद्यः। आशौचिनामप्युदकदानाद्यधिकारदर्शनात्। नापरः। ब्राह्मणादे राजसूयाद्यनधिकारेणाऽऽशौचित्वप्रसङ्गात्। अपि च यदि दानाद्यनधिकार एवाऽऽशौचं तर्हि पिण्डोदकदानाद्यधिकारोऽप्याशौचं स्यात्। न चेष्टापत्तिः। अनेकशक्तिकल्पनाप्रसङ्गात्। तस्मान्न कर्मानधिकार आशौचमिति। यत्तु 'अम्लादिसंयोगप्रयोज्यस्ताम्रादौ तत्तद्देवतासंनिधिरेव शुद्धिः। अस्पृश्यसंबन्धप्रयोज्यस्तत्तद्देवतासंनिध्यभावश्चाशुद्धिः' इति तार्किकलक्षणम्। तदपि न प्रकृतोपयोगि। अचेतनेषु तत्संभवेऽपि चेतनेषु यावज्जीवं तदसंभवात्। तदुक्तम्—जीवञ्जन्तुर्भवेद्यावत्तावत्तदभिमानिनी। देवता वर्तते तत्र मृते तस्मिन्निवर्तते॥ इति।

अत्राऽऽहुः—'कालस्नानाद्यपनोद्यः पिण्डोदकदानादिविधेर्हेतुभूतोऽध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषगतः कश्चनातिशय आशौचम्' इति याज्ञवल्क्यस्मृतिटीकायां मिताक्षरायां षडशीतिटीकायां च शुद्धिचन्द्रिकायां निरूपितमिति। तच्चाऽऽशौचं शुद्धदत्तकस्य जनककुले मिथो नास्तीत्याह-**तच्चेति**। **जनककुल इति**। प्रतिग्रहीत्रेकगोत्रस्य केवलदत्तकस्येति शेषोऽत्र बोध्यः। केवलदत्तकस्य जनकगोत्रसंबन्धाभावेनाऽऽशौचाभावस्यौचितत्वात्। **परस्परमिति**। शुद्धदत्तकनिरूपितं जनककुलनिष्ठं जनककुलनिरूपितं शुद्धदत्तकनिष्ठं चेति मिथ आशौचं नास्तीत्यर्थः। तत्र प्रमाणं मनुवचनं निर्दिशति-**गोत्ररिक्थे** ( म० स्मृ० ९। १४२ ) इति। अस्यार्थः—जनकपितृसंबन्धिनी गोत्ररिक्थे दत्तको न कदाचिदपि प्राप्नुयात्। पिण्डश्च गोत्ररिक्थानुगामी यस्य गोत्ररिक्थे भजते तस्यैव स पिण्डो दीयते। तस्मात्पुत्रं ददतो जनकस्य स्वधा पिण्डश्राद्धादि तत्पुत्रकर्तृकं निवर्तत इति। अत्र जनकपितृसंबन्धिगोत्ररिक्थयोर्निवृत्तिः श्रूयते। सा च शुद्धदत्तकस्थल एव संभवति। न व्यामुष्यायणस्थले। वाच्यार्थविरोधात्। व्यामुष्यायणशब्दस्य हि 'अमुष्य गोत्रापत्यमामुष्यायणः, द्वयोरामुष्यायणो व्यामुष्यायणः' इत्येवं निर्वचनीक्रियमाणस्य गोत्रद्वयसंबन्धभागित्वमित्यर्थः प्रतीयते। तथा हि—नडादित्वाद्गोत्रापत्यार्थे फक्प्रत्ययेन व्यामुष्यायणशब्दो निष्पन्नः। दत्तकश्चायं जनकपालकयोर्द्वयोः साक्षादपत्यं भवति, नतु गोत्रापत्यम्। गोत्रापत्यं तु तद्गोत्रभूतयोर्द्वयोर्गोत्रापत्यम्। अत्र तच्छब्देन

दिनिमित्तीभूतगोत्ररिक्थयोर्निवृत्तिश्रवणात् । प्रेतपिण्डदानादेश्चाशौचपूर्वकालत्वनियमात् । ततश्च पिण्डनिवृत्त्याऽशौचनिवृत्तिरर्थसिद्धैव ।

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥

---

जनकपालकपित्रोर्ग्रहणम् । गोत्रभूतयोरित्यनेन च गोत्रप्रवर्तकर्योर्ग्रहणम् । तथा चादिशब्देन जनकपालकपित्रोर्वंशप्रवर्तकौ प्रवराध्यायप्रसिद्धौ सागस्त्यकश्यपादिसप्तर्ष्यन्यतमौ यौ विप्रकृष्टावपि द्वावृषी तयोर्ग्रहणावश्यकत्वेन गोत्रभूतयोर्द्वयोर्गोत्रापत्यमित्यर्थेन गोत्रद्वयसंबन्धाभिधानप्रौढ्यात् । ततश्च जनकगोत्रसंबन्धनिवृत्तेर्द्व्यामुष्यायणशब्दवाच्यगोत्रद्वयसंबन्धविरोधित्वाद्व्यामुष्यायणेऽत्यन्तासंभविनी जनकपितृगोत्रनिवृत्तिः शुद्धदत्तक एवावशिष्यत इति भावः । 'गोत्ररिक्थे' इत्यस्मादेव वचनाच्छुद्धदत्तकोऽपि शास्त्रेऽस्तीत्यवगम्यते । अन्यथेदं वचनं निर्विषयं स्यात् । एतेन शुद्धदत्तकः शास्त्रे नास्तीति प्रत्युक्तम् । ततश्च गोत्ररिक्थनिवृत्तिश्रवणेन गोत्ररिक्थसंबन्धानिमित्तकस्य पिण्डदानादेरपि निवृत्तिर्व्यापकनिवृत्तौ व्याप्यनिवृत्तेरर्थसिद्धत्वादिति न्यायेनैव सिद्धा ।

नन्वेवं शुद्धदत्तकस्य जनकपितृगोत्ररिक्थग्राहित्वाभावेन जनकपित्रुद्देश्यकप्रेतपिण्डादिदातृत्वं मा भूत्तथाऽपि परस्परमाशौचाभावे किमायातं प्रमाणमित्याशङ्क्याऽऽह— **प्रेतपिण्डदानादेरिति** । अत्राऽऽदिशब्देन जलदुग्धदानं प्रेततर्पणमित्यादिसकलप्रेतकर्मणः परिग्रहः । **आशौचपूर्वकालत्वनियमादिति** । आशौचं पूर्वस्मिन्काले यस्य तस्य भावस्तत्त्वम् । तन्नियमादित्यर्थः । पिण्डदानादि यत्प्रेतसंबन्धि कर्म तत्सर्वमाशौचपुरःसरमेव प्रवर्तते । 'यावदाशौचं तावत्प्रेतोदकं पिण्डमेकं च दद्युः' इत्यादिस्मृतेः । ततश्च पिण्डदानादिप्रेततन्त्राशौचयोः साहचर्यनियमात्सहचारितयोश्च प्रेतपिण्डाद्याशौचयोर्मध्ये 'गोत्ररिक्थे' इति प्रेतपिण्डनिवृत्तिदर्शनात्संनियोगशिष्टानामन्यतरापाय उभयोरप्यपाय इति न्यायेनाऽऽशौचनिवृत्तेरर्थतः सिद्धत्वादिति भावः । एवं चात्र स्वधापिण्डशब्दावाशौचादिसकलपितृकर्मोपलक्षकाविति तात्पर्यम् । स्वस्य, स्वान्यस्वसंबन्धिनश्चाऽऽशौचादेरजहल्लक्षणया बोधकाविति यावत् । तेन शुद्धदत्तकमरणनिमित्तकमाशौचं जनकपितृकुले नास्ति, तथा जनकपितृकुलगतसपिण्डादिमरणनिमित्तकमाशौचं शुद्धदत्तकस्य न भवतीति च सिद्धम् । तदेतत्सर्वमनुसंधायाऽऽह— ततश्च **पिण्डनिवृत्त्येत्यादि** **समव्याप्तिसिद्धेरित्यन्तम्** । **असगोत्रः सगोत्रो वेति** । अनेन वचनेन सगोत्रासगोत्रस्त्रीपुंसमध्ये येन प्रथमेऽहनि प्रेततन्त्रं प्रारब्धं तेनैव तद्दशाहपर्यन्तं कृत्वा समापनीयं नान्येनेति प्रेतकृत्यारम्भसमाप्त्योरेककर्तृकत्वनियमः प्रतिपाद्यते ।

प्रग्राहिणां तु नैव स्यात्कर्तुः स्वस्ति तथाऽपि च ।
यावदाशौचमुदकं पिण्डमेकं च दद्युः ॥

अत्रेयमाशङ्का भवति । किं दाहमारभ्यैव प्रेतकृत्यारम्भो मन्तव्योऽथवा तदुत्तरभाविपिण्डदानाद्यारभ्येति । यदि दाहः प्रेतकृत्यारम्भो विज्ञायेत तदा मुख्याधिकारिण औरसादिपुत्रस्यासांनिध्यादमुख्याधिकारिणा केनचिद्दाहः प्रारब्धस्तत्र मुख्याधिकारिसांनिध्येऽपि दाहकर्त्रैव दशाहपर्यन्तं समापनीयं स्यात् । यदि तु प्रेतपिण्डादिदानं प्रेततन्त्रारम्भ इत्युच्यते तदा दाहानन्तरं कृतसांनिध्येन मुख्याधिकारिणा प्रेतपिण्डाद्यारब्धव्यं तेनैव च दशाहपर्यन्तं समापनीयमिति सिध्यति । परं तु ' असगोत्रः सगोत्रो वा योऽग्निं दद्यात्सखे नरः । सोऽपि कुर्यान्नवश्राद्धं शुध्येत्तु दशमेऽहनि ॥ अधिकार्यसंनिधानेऽन्येन दाहे कृते प्रथमपिण्डोपक्रमात्प्राक्पुत्रादेरागमनेऽपि दाहकर्तृभिन्नतया निषेध इत्यर्थस्य निर्णयसिन्धुटीकायां ( पृ० १९६५ ) वर्णितत्वाद्येनाग्निदानं कृतं तेनैव दशाहपर्यन्तं समापनीयं न मुख्याधिकारिणाऽपि पिण्डादिदानं प्रारब्धव्यं तस्य दाहकर्तृत्वाभावादित्यर्थकनिरुक्तदिवोदासीयवचनविरोधः स्यात् । इति चेदत्रोच्यते-यद्यप्यत्र ' दद्यात् ' इति सामान्येन दानमुक्तं, दानं च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं, परस्वत्वापत्तिश्च परप्रतिग्रहमन्तरेणानुपपन्नेति तदाक्षेपेण प्रतिग्रहघटितत्वाद्दानस्य द्विजाग्र्याय गां ददातीत्यादावेव मुख्यं दानं संभवति । तथाऽपि प्रतिग्रहांशाभावेऽपि पिण्डकर्मश्राद्धादौ तदुद्देशेन त्यागमात्राद्ददातिशब्दप्रयोगसंभवेन प्रथमेऽहनि यो दद्यात्स दशाहं समापयेदिति च प्रथमदिनपिण्डादिदानकर्मण एव दशाहसमाप्त्यन्वयप्रतीतेः । प्रथमेऽहनि यो दद्यात्प्रेतायान्नं समाहितः । अन्नं नवसु चान्येषु स एव प्रददात्यपि ॥ इति ब्राह्माच्च प्रेतपिण्डादेव प्रेततन्त्रारम्भ इति निश्चीयते । एतदाशयेनैव निर्णयसिन्धौ ( पृ० ४२५ ) ' प्रथमेऽहनि यो दद्यात् ' इति वचनव्याख्यावसरे दद्यादित्यत्र ' पिण्डम् ' इति शेषः पूरितः, नतु दाहः । तस्य तदुद्देशेन त्यागरूपासंभवेन ददातिशब्दार्थत्वाभावाद्दशाहसमाप्त्यन्वयाप्रतीतेरिति भावः । केचित्तु ' असगोत्रः सगोत्रो वा योऽग्निं दद्यात्सखे नरः । सोऽपि कुर्यान्नवश्राद्धं शुध्येत्तु दशमेऽहनि ॥ इति निरुक्तवचनाद्दद्यादित्यत्राग्निमिति शेषं पूरयित्वा ' असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् । यश्चाग्निदाता प्रेतस्य पिण्डं दद्यात्स एव हि ॥ इति शुद्धितत्त्वे वायवीयवचनाच्च दाहकर्त्रैव दशाहं कुर्यान्न प्रथमपिण्डोपक्रमात्प्राक्समागतः पुत्रोऽपीति वदन्तीति निर्णयसिन्धावुक्तम् ( पृ० ४३६ )। एवं दशाहान्तप्रेतपिण्डादिकर्मप्रारम्भसमाप्त्योरेककर्तृकत्वनियममुक्त्वा प्रेतपिण्डादिदानप्रकारं कथयति-याव-

इत्यादिवाक्यपर्यालोचनया पिण्डाशौचयोः समव्याप्तिसिद्धेः । तस्माद्दत्तक-तज्जनकादीनां च परस्परं नाशौचादि ।

---

दाशौचमिति । आशौचकालसमाप्तिपर्यन्तं प्रत्यहमेकं पिण्डमिति मिलित्वा दश पिण्डानुदकं च दद्युरिति तदर्थः । स्मृत्यन्तरेऽपि–नवभिर्दिवसैर्दद्यान्नव पिण्डान्समाहितः । दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ॥ इति । अत्र शुचित्ववचनमपरेद्युः क्रियमाणश्राद्धार्थब्राह्मणनिमन्त्रणाभिप्रायेण नतु सर्वथाऽऽशौचनिवृत्तिपरमिति वेदितव्यम् । एवमेव ' शुध्येत्तु दशमेऽहनि ' इत्यत्रापि बोध्यम् । तथा च ' येन . प्रेतपिण्डादितन्त्रं प्रक्रान्तं तेनैव तद्दशाहपर्यन्तं कृत्वा समापनीयम् । पिण्डश्च प्रत्यहमेक इति क्रमेण यावदाशौचसमाप्ति पिण्डदानमुदकदानं च कुर्युः ' इत्येवंरूपवाक्यार्थद्वयपर्यालोचनया प्रत्यासत्त्या पिण्डदानाशौचयोः समव्याप्तिः प्रतीता भवति ।

ननु यदा प्रेतपिण्डादितन्त्रप्रवर्तकः सगोत्रसपिण्डो भवति, भवतु तदा पिण्डाशौचयोर्व्याप्तिः, परं तु यदाऽसगोत्रोऽसपिण्डश्च प्रेतपिण्डादिप्रक्रान्ता भवति तदा कथमिव पिण्डाशौचयोर्व्याप्तिः ? ' दशाहं शावमाशौचं सपिण्डेषु विधीयते ' ( म० स्मृ० ५ । ५९ ) इति मनुना सगोत्रसपिण्डेष्वेव दशाहाशौचविधानादिति चेत्सत्यम् । उच्यते–गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् । प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ( म० स्मृ० ५ । ६५ ) ॥ निरन्वयेऽसपिण्डे तु मृते सति दयान्वितः । तदशौचं पुरा चीर्त्वा कुर्यात्तु पितृवत्क्रियाम् ॥ इत्यादिवचनैर्योऽसगोत्रादिर्यस्यौर्ध्वदेहिकं करोति स तज्जातिप्रयुक्तं संपूर्णाशौचं कुर्यादित्युत्सर्गतोऽवगम्यते । इदमेव कर्माङ्गं दशाहाशौचमित्युच्यते । तच्च दशाहप्रेतपिण्डादिकर्तुरेव, न केवलदाहकर्तुः । तदेतदुक्तं–' प्रग्राहिणां नैव स्यात् ' इति । प्रग्राहिणां शववाहकदाहकादीनां कर्माङ्गाशौचं तन्त्रसमाप्तिनियमश्च नैव भवति । प्रेतपिण्डादिदानकर्तृभिन्नत्वादिति भावः । यद्यसगोत्रादिरेव दाहादिसकलौर्ध्वदेहिकं करोति तदा तस्यापि दशाहाशौचं भवत्येव । तत्र प्रथमदिने दाहनिमित्तकाशौचसत्त्वात्तस्य च ' ततोऽपि शवदाहकः ' इति गुरुतरदोषग्रस्तत्वात्प्रथमदिने संध्यादिनित्यकर्मलोपः । द्वितीयादिदिनेषु तु नित्यकर्मलोपो नास्तीति युक्तं मम भाति । एवं पिण्डाशौचयोर्व्याप्तिं सुस्थिरां कृत्वा शुद्धदत्तकस्य तज्जनकादीनां चेति परस्परमाशौचविचारमुपसंहरति—**तस्मादित्यादिना नाऽऽशौचमित्यन्तेन** ।

नन्वेवं शुद्धदत्तकस्य जनककुले परस्परमाशौचं मा भूत् । किंतु ' बैजिका-

यत्तु-बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहम् ।

इति, तदपि व्यपैति ददतः स्वधेत्यनेनापोदितम् । दत्तकातिरिक्तस्थले तस्य

---

दभिसंबन्धादनुरुन्ध्यादघं त्र्यहम् ' ( म० स्मृ० ५ । ६३ )। अस्यार्थः—बीजनिमित्तो बैजिकः । अभिसंबन्धोऽपत्योत्पत्तिः । सपिण्डतादिसंबन्धासत्त्वेऽपि बीजं रेतः संबन्धो हेतुर्यत्रापत्योपत्तौ तस्मात् । केवलरेतःसंबन्धादेव त्रिदिनमाशौचं कुर्यादिति । इति वचनविहितमाशौचं स्यादित्याशङ्कते—यत्त्विति । तथा च शुद्धदत्तके जनकस्य पितुर्बीजकृतसंबन्धसत्त्वात्त्र्यहमाशौचं प्राप्नुयादिति शङ्ककाशय इति भावः । उत्तरयति—तदपीति । यथा ' दशाहं शावमाशौचं सपिण्डेषु विधीयते ' ( म० स्मृ० ५ । ५९ ) इत्युक्तं सपिण्डतादिसंबन्धनिमित्तं दशाहं शावमाशौचं ' गोत्ररिक्थे ' ( म० स्मृ० ९ । १४२ ) इत्यनेनापोद्यते तद्वद्बैजिकादभिसंबन्धादिति निरुक्तवचनेन विहितं बीजमात्रकृतसंबन्धनिमित्तं त्रिदिनाशौचमपि 'गोत्ररिक्थे...व्यपैति ददतः स्वधेत्यनेनापोद्यत इत्यर्थः । बैजिकादभिसंबन्धादिति सामान्यवचनस्य गोत्ररिक्थे इति विशेषवचनमपवाद इति यावत् ।

ननु यदि ' गोत्ररिक्थे, इत्यनेन बैजिकादिति वचनं बाध्यते ' तर्हि तद्वचनमचरितार्थं स्यादिति न शङ्कनीयं तस्य दत्तकव्यतिरिक्तस्थले सावकाशत्वादित्यभिप्रेत्याऽऽह—दत्तकातिरिक्तस्थल इति । परः पूर्वः पतिर्यस्या भार्यायाः सा परपूर्वभार्या । परपत्नीति यावत् । तस्यामपत्योत्पत्तौ सत्यां तादृशापत्योत्पत्तावुत्पादयितुर्न कश्चित्सापिण्ड्यादिः संबन्धः किंतु बीजमात्रकृतः संबन्ध इति तत्रोत्पादयित्रा त्र्यहमाशौचं बैजिकादभिसंबन्धादिति वचनात्कर्तव्यम् । अयं भावः—बैजिकादिति वचनेन बीजनिमित्तकसंबन्धनिमित्तं त्रिदिनमाशौचं विधीयते । बीजकृतसंबन्धश्च स्थलद्वये दृश्यते । दत्तकपुत्रे ( शुद्धदत्तके ) जनकपितुर्बीजकृतः संबन्धः । अथ च परपत्न्यां परेणोत्पादिते पुत्रे चोत्पादयितुर्बीजकृतः संबन्धः । अत्रोभयत्रापि स्थले बीजसंबन्धात्परस्परं त्रिदिनमाशौचं भवति । तदाह मरीचिः—सूतके मृतके चैव त्रिरात्रं परपूर्वयोः । एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ॥ इति । अत्र परपूर्वयोरित्यत्र परः पूर्वः पतिर्यस्या भार्यायाः सा परपूर्वा । परः पूर्वः पिता यस्य दत्तकादेः पुत्रस्य स परपूर्वः । परपूर्वा च परपूर्वश्च परपूर्वौ । ' पुमान् स्त्रिया ' इत्येकशेषः । तयोः परपूर्वयोरित्यर्थो बोध्यः । तत्र दत्तकस्थले बीजसंबन्धप्रयुक्तत्रिदिनाशौचस्य ' गोत्ररिक्थे ' इत्यनेनापवादत्वाद्बाधेऽपि परपूर्वभार्यायां जातापत्यविषयत्वेन बीजसंबन्धप्रयुक्तत्रिदिनाशौचविधायकवचनस्य चारितार्थ्यमवशिष्यत इति भावः । अत एव मन्वर्थमुक्तावल्यां

सापेक्षत्वात् । किंचाशौचोदकदानादौ गोत्रसापिण्ड्ययोर्मिलितयोर्निमित्तत्वाव-गमादन्यतरापाये न तन्निमित्तमशौचादि । तथा च शङ्खलिखितौ—

सपिण्डता तु विज्ञेया गोत्रतः साप्तपौरुषी ।
पिण्डश्चोदकदानं च शौचाशौचं तदानुगम् ॥ इति ।

प्रतिग्रहीतृपित्रादीनां तु दत्तकादिमरणे त्रिरात्रमाशौचम् । तदाह बृहस्पतिः—

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
मृतेष्वाप्लुत्य शुध्यन्ति त्रिरात्रेण द्विजोत्तमाः ॥

---

कुल्लूकभट्टेन बैजिके तु संबन्धे परपूर्वभार्यायामपत्योत्पत्तौ त्र्यहमाशौचं भवति । तथा च विष्णुः—'परपूर्वभार्यासु त्रिरात्रम् । यत्र रेतःपातमात्रेण स्नानं तत्रापत्योत्पत्तौ त्रिरात्रमुचितम्' इति तद्वचनं व्याख्यातम् । किंच 'सपिण्डता तु विज्ञेया गोत्रतः साप्तपौरुषी । पिण्डश्चोदकदानं च शौचाशौचं तदानुगम् ॥ इति शङ्खलिखितवचने स्वगोत्रे बीजिनमारभ्य सप्तमपुरुषात्वधिकं सापिण्ड्यमुक्त्वा पिण्डश्चोदकदानं चेत्याद्युक्तत्वान्मलिनं त वपुः स्नायादित्यत्र स्नाने मलिनवपुष्ट्वस्येव सिद्धसाध्यसमभिव्याहारन्यायेनाऽऽशौचोदकदानादौ गोत्रसापिण्ड्ययोर्मिलितयोर्हेतुत्वावगमेन सगोत्रत्वसमानाधिकरणसापिण्ड्यस्याऽऽशौचादिप्रयोजकत्वेनेति यावत् । तयोर्मध्ये शुद्धदत्तके 'गोत्ररिक्थे' इत्यनेन जनकगोत्रनिवृत्तेः प्रतिपादनादन्यतरापाये सति पिण्डनिवृत्तेरप्यर्थसिद्धत्वेन गोत्रपिण्डनिमित्तकमाशौचमपि निवर्तते । आशौचस्य पिण्डानुसारित्वात् । तदुक्तं तदानुगमिति । पिण्डानुगं पिण्डानुसार्याशौचं पिण्डाभावेऽभावो भवतीत्यर्थः ।

एवं शुद्धदत्तकस्य जनककुले परस्परमाशौचाभावं सिद्धीकृत्य दत्तकादीनां प्रतिग्रहीतृकुले त्रिरात्रमाशौचं प्रतिजानीते—प्रतिग्रहीत्रिति । प्रतिग्रहीतृरूपपितृपितामहप्रपितामहानां त्रयाणामित्यर्थः । दत्तकादीत्यादिपदेन क्षेत्रजादेर्ग्रहणम् । ते च क्षेत्रजपुत्रिकापुत्रगूढजापविद्धकानीनसहोढक्रीतकपौनर्भवस्वयंदत्तपारशवेत्येकादश नवमाध्यायोक्ता मनूक्ता बोध्याः । एतेषां मरणे पालकपितृपितामहप्रपितामहानां त्रिदिनमाशौचं भवतीत्यर्थः । तत्रैव प्रमाणं बृहस्पतिवचनमुपन्यस्यति—अन्याश्रितेष्विति । स्वभार्यात्वमन्यं प्रतिलोमव्यतिरिक्तं परपुरुषमाश्रितासु पुनर्भूष्वित्यर्थः । मृतासु सतीषु, तथा परपत्नीसुतेषु दत्तकक्षेत्रजादिष्वित्यर्थः । मृतेषूपरतेषु सत्सु त्रिरात्राशौचानन्तरं स्नानेन द्विजोत्तमाः शुध्यन्तीत्यर्थः । प्राधान्याद्द्विजोत्तमग्रहणम् । तेन क्षत्रियादयः शूद्रान्ता अप्येवं शुध्यन्तीति बोध्यम् । एतेषु मृतेषु त्रिरात्राशौचं कस्य भवति, किं पूर्वपतेर्वोत्तरपतेर्वा तथा जनकस्य वा प्रतिग्रहीतुर्वेत्याशङ्क्याऽऽह—

**इदं च त्रिरात्राशौचविधानं यत्प्रतियोगिकं भार्यात्वं पुत्रत्वं च तस्यैव ।**

---

**इदं चेति** । यः प्रतियोगी निरूपकः संबन्धी तस्य भार्यात्वस्य पुत्रत्वस्य वा भवति तस्यैवेदं त्रिरात्राशौचम् । भार्यापुत्रशब्दयोः संबन्धिशब्दत्वान्नाम निरूपितार्थप्रतिपादकत्वान्निरूपितार्थस्य च निरूपकविषये नित्यसाकाङ्क्षत्वात् । पुनर्भ्वां यन्निरूपितं भार्यात्वं दत्तकादिषु च यन्निरूपितं दत्तकादिपुत्रत्वं तस्यैव निरूपकस्यैव तदाशौचं भवतीत्यर्थः । पुनर्भ्वां भार्यात्वं च परिपाल्यत्वोपभोग्यत्वादिना मुख्यभार्यासादृश्याद्बोध्यम् । तथोत्तरपतेः पतित्वमपि मुख्यपतिसादृश्याद्बोध्यम् । एवं दत्तकादिपुत्रेष्वप्यूह्यम् । ततश्चेदमुक्तं भवति—यदन्याश्रितेषु दारेषु मृतेषु गौणपतेरेवेदं त्रिरात्रमाशौचं न मुख्यपतेः । तथा परपत्नीसुतेषु दत्तकादिषु मृतेषु पालकपितुरेवाशौचं न जनकपितुरिति । तथा च यदिदं बृहस्पतिवचनेन त्रिरात्राशौचमुक्तं तत्तु जनककुले सुतरां नास्त्येव किंतु प्रतिग्रहीतृकुल एव भवति । तत्रापि प्रतिग्रहीतुरेकस्यैव तद्भवति नतु प्रतिग्रहीतृरूपपित्रादित्रिपुरुषसपिण्डानामिति कथं मूलकारेण प्रतिग्रहीतृपित्रादीनामित्यादिशब्दः प्रयुक्तः, कथं चाग्र एकाहाशौचप्रतिपादकस्ववाक्ये 'त्रिपुरुषानन्तरवर्तिनाम्' इत्येवं प्रतिग्रहीतृसपिण्डानां विशेषणं प्रयुक्तमिति चेत् । दत्तकमीमांसाकारस्यायमाशयो लक्ष्यते—यत्तन्मते निर्वाप्यपिण्डान्वयेन सापिण्ड्यं नाऽऽद्रियते । तस्याव्यापकत्वात् । अपि तु श्रुतिसिद्धत्वादुत्पन्नत्वाच्चैकशरीरावयवान्वयेनैव सापिण्ड्यम् । तच्च यद्यपि दत्तकस्य प्रतिग्रहीतृकुले सर्वथाऽसंभवि तथाऽपि शुद्धदत्तकस्य प्रतिग्रहीतृकुलेऽशौचाविवाह्यत्वप्रयोजकं त्रिपुरुषं सापिण्ड्यं वाचनिकं पूर्व( पृ० १८७ )मुक्तम् । ततश्च गोत्रसापिण्ड्ययोर्मिलितयोर्दत्तके सत्त्वेन दत्तकमरणे प्रतिग्रहीतृपित्रादिसपिण्डानां 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' ( म० स्मृ० ५ । ५९ ) इति दशाहमाशौचं प्राप्तम् । तच्च 'सामान्यस्य विशेषं बाधकम्' इति न्यायेन विशेषणानेन त्रिरात्रेणापवादत्वाद्बाध्यते । ततश्च 'उत्सर्गसमानदेशा अपवादाः' इति महाभाष्यकारसंमतेन न्यायेनेदं त्रिरात्रं प्रतिग्रहीतृपित्रादित्रिपुरुषसपिण्डानामेव भवितुं युक्तं, नैकस्य प्रतिग्रहीतुरेवेति । ततश्च यदुक्तं प्रतिग्रहीतृपित्रादीनां त्वित्यादि तत्सम्यगेव । एवं च 'यत्प्रतियोगिकं भार्यात्वम्' इत्यस्य ग्रन्थस्य पूर्वपतौ जनके चेदं त्रिरात्रं सर्वथा न प्रवर्तत इत्यर्थे परमतात्पर्यं नतु प्रतिग्रहीतुरेकस्यैवेदं त्रिरात्रमित्यर्थ इति रहस्यम् । त्रिपुरुषानन्तरवर्तिनामित्यस्य स्थाने त्रिपुरुषान्तर्वर्तिनामिति पाठे 'यत्प्रतियोगिकं भार्यात्वं पुत्रत्वं च तस्यैव' इत्यत्रस्यैवकारेण प्रतिग्रहीतुः पितृपितामहयोर्व्यावृत्तिर्बोध्या । अत एव त्रिपुरुषान्तर्वर्तिनामित्युक्तिः संगच्छते । तथा चैतत्पाठे प्रतिग्रहीतुरेव त्रिरात्रं प्रतिग्रहीतृव्यतिरिक्त-

**त्रिपुरुषानन्तरवर्तिनां पितृसपिण्डानां तु पृथगाह मरीचिः—**

**सूतके मृतके चैव त्रिरात्रं परपूर्वयोः।**

**एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः॥ इति।**

**यद्यपि दत्तकादीनामुत्पन्नानामेव स्वीकारात्परिग्रहीतुस्तदुत्पत्त्याशौचं न घटते**

---

त्रिपुरुषान्तर्वर्तिनां त्वेकाह इति सिध्यति। अत्र युक्तायुक्तं सद्भिर्विचारणीयम्। एतत्पाठे ' प्रतिग्रहीतृपित्रादीनाम् ' इत्युपक्रमस्थ आदिशब्दो न साधु संगच्छत इति भाति।

नन्वेवं दत्तकादिमरणे तत्पालकपितृपितामहप्रपितामहानामेव त्रिदिनाशौचोक्त्या तत्परवर्तिनां वृद्धप्रपितामहादीनां त्रयाणां पालकपितृसपिण्डानामाशौचं नैव प्राप्नोतीत्याशङ्कयाऽऽह—**त्रिपुरुषानन्तरेति**। पालकपितृपितामहप्रपितामहास्त्रिपुरुषाः। तदनन्तरवर्तिनां वृद्धप्रपितामहादीनां त्रयाणां पालकपितृसपिण्डानां पृथगेव मरीचिनाऽऽशौचमुक्तमित्याह—**सूतके मृतके चेति**। परपूर्वा च परपूर्वश्च परपूर्वौ। पुमान्स्त्रियेत्येकशेषः। परोऽन्यः पूर्वः पतिर्यस्या भार्यायाः सा परपूर्वा भार्या, पुनर्भूरित्यर्थः। परोऽन्यः पूर्वः पिता यस्य पुत्रस्य स परपूर्वः पुत्रो दत्तकादिरित्यर्थः। तयोः पुनर्भूदत्तकयोः सूतके मृतके चाऽऽशौचे प्रसक्ते त्रिरात्रं स्यात्। उत्तरपत्तेः पालकपित्रादित्रयस्य चेति शेषः। सपिण्डानां पालकपितृसपिण्डानां वृद्धप्रपितामहादीनां त्रयाणां त्वेकाहमाशौचं स्यादित्यर्थः। यत्र स्थले पितुः पालकपितुः पालकपित्रादित्रयस्येति यावत्। त्रिरात्रमाशौचमुच्यते तत्र तत्सपिण्डानामेकाहमाशौचं युक्तमिति भावः। अत्र ' यत्र वै पितुः ' इति पितृग्रहणं पत्युरप्युपलक्षणं ज्ञेयम्। परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च। भर्तृपित्रोस्त्रिरात्रं स्यादेकाहं तु सपिण्डतः॥ इति हारीतवचने भर्तृग्रहणादित्यर्थः। हारीतवाक्येनैकवाक्यत्वलाभादिति यावत्। तेन यत्रोत्तरस्य पत्युस्त्रिरात्रं तत्र तत्सपिण्डानामुत्तरपतेः सपिण्डानामेकाहमाशौचमित्यप्यर्थो बोध्यः। ननु पुनर्भूदत्तकयोर्मरणे तत्परिग्राहिणोर्मृतकं संघटत इत्यत्र वचने तन्निर्देशो युक्त आस्तां नाम। किंतु पुनर्भूदत्तकादीनामुत्पत्त्यनन्तरमेव परिग्रहकरणात्परिग्राहिणोस्तदुत्पत्तिनिमित्तकं सूतकं न घटत इति कथमत्र तन्निर्देश इत्याशङ्कय यद्यपि पुनर्भूदत्तकयोः साक्षादुत्पत्तिनिमित्तं सूतकं तत्परिग्राहिणो( पुनर्भ्वाः पत्युः, पालकपितुश्च )र्न संभवति तथाऽपि पुनर्भ्वा दत्तकस्य च यदपत्यं तदुत्पत्तिप्रयुक्तं सूतकं पुनर्भूपतेः पालकपितुश्च संघटत इत्याशयेनात्र वचने सूतकनिर्देशो युक्त एवेत्याह—**यद्यपीत्यादि सूतकनिर्देश इत्यन्तम्**। दत्तकादिरूपपुत्राणां मरणे तत्प्रतिग्रहीतृरूपपितृपितामहप्रपितामहानां यत्त्रिरात्रमाशौचमुक्तं

तथाऽपि तदपत्योत्पत्त्याशौचं भवत्येवेति सूत्रकाराशयः। इदमपि समानजातीयानामेव पुत्राणाम्। तथा च ब्रह्मपुराणम्—

औरसं वर्जयित्वा तु सर्ववर्णेषु सर्वदा।
क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च॥
अशौचं तु त्रिरात्रं स्यात्समानामिति निश्चयः॥ इति।

सर्वदा सर्वकालमुपनयनानन्तरमपि।

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्त्ववित्॥ इति।

---

तत्र च दत्तकादयः पुत्राः प्रतिग्रहीतृसमानजातीयाः स्युश्चेत्तदैव भवति नान्यथेत्याह—इदमपीति। तदेवोपपादयति—तथा चेति। औरसं वर्जयित्वेति। क्षेत्रजादिष्वेकादशसु पुत्रेषूत्पन्नेषूपरतेषु च त्रिरात्रमाशौचं स्यात्। प्रतिग्रहीतृरूपपित्रादीनामिति शेषः। किमविशेषेण, नेत्याह—समानामितीति। समानां तुल्यानाम्। प्रत्यासत्त्या दत्तकादिभिः समानानां प्रतिग्रहीतृपित्रादीनामित्यर्थः। समानत्वं च जात्या। 'सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः' इति शौनकेन सजातिष्वेव दत्तककर्तव्यताभिधानात। तथा च दत्तकप्रतिग्रहीत्रोः समानजातीयत्वे सत्येवेदं त्रिरात्रं प्रवर्तते नतु तयोर्विजातीयत्व इति 'समानाम्' इत्युक्तेरवगम्यत इत्यर्थः। ब्रह्मपुराणस्थसर्वदेत्यस्यार्थमाह—सर्वकालमिति। तस्यापि स्पष्टार्थमाह—उपनयनान्तरमपीति। अपिनोपनयनात्प्रागपीत्यर्थः। तथा च स दत्तकादिरुपनयनात्प्रागनन्तरं वा म्रियतां सर्वदाऽपि त्रिरात्रमित्यर्थः। एतन—आदन्तजननात्सद्य आचूडान्नैशिकी स्मृता। त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम्॥ ( या० स्मृ० ३। १८ ) इत्याद्याशौचप्रकाराणां नात्र प्रवृत्तिरिति सूचितम्। प्रतिग्रहीतुस्त्रिरात्रमाशौचमित्यर्थकं प्रजापतिवचनमुदाहरन्ति—अन्याश्रितेष्वित्यादि। गोत्रिणः सपिण्डभिन्नाः सोदकाः सगोत्राश्चेत्यर्थः। स्नानेन शुद्धा भवेयुरिति शेषः। तत्त्ववित्—प्रतिग्रहीतेत्यर्थः। त्रिरात्रेणैव शुद्धो भवति। मिताक्षरायां तु 'त्रिरात्रेणैव तत्पिता' इति पाठो दृश्यते। स चासंदिग्धः। अनेन प्रजापतिवचनेन पालकपितुरेव त्रिरात्रं सपिण्डानां त्वाशौचाभाव एवेति लभ्यते। व्याख्यातं च तथैव विज्ञानेश्वरेण 'अनौरसेषु पुत्रेषु० ( या० स्मृ० ३। २५ ) इति श्लोके मिताक्षरायाम्। प्रकृतग्रन्थकारेण तु तत्पितेत्यत्र पितृग्रहणं सपिण्डोपलक्षणं मत्वा सपिण्डव्यतिरिक्तानामाशौचाभावसाधकत्वेनोपन्यस्तमिति भाति।

ननु निरुक्तब्रह्मपुराणवचनपर्यालोचनया प्रतिग्रहीतृसमानजातीयदत्तकमरणे प्रति-

यद्यपि [illegible] न घटते [illegible]-

---

ग्रहीतृपितॄणां त्रिरात्रमाशौचमित्यर्थपर्यवसानेन दत्तके समानजातीयत्वविशेषणं फलति। तेन चासमानजातीयदत्तको व्यावर्त्यते। ततश्चासमानजातीयदत्तकमरणे प्रतिग्रहीतुरिदं त्रिरात्रं न भवतीति तात्पर्यम् । इदमयुक्तमिव भासते । यद्यसमानजातीयः पुत्रो दत्तकः शास्त्रेण सिध्येत्तदा समानजातीयत्वविशेषणं सार्थकं भवेत् । न चासमानजातीयः पुत्रो दत्तकः शास्त्रसिद्धोऽस्ति । ‘ सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः ’ इति शौनकेन जातिष्वेवेति नियमेन सजातीयेषु दत्तकविधानेन विजातीयेषु दत्तकप्रतिषेधात् । अत एव ‘ तस्मादसमानजातीयो न पुत्रीकार्य इति सिद्धम् ’ इति मूल एवोक्तं पुरस्तात् । इति चेत्सत्यम् । शौनकोक्तनियमसिद्धो यो विजातीयदत्तकप्रतिषेधस्तस्यैव फलतोऽनुवादकं ब्रह्मपुराणमिति केचिद्वदन्ति । दत्तकचन्द्रिकाकारस्तु–‘ जातिष्वेव न चान्यतः ’ इति नियमस्तु सजातीयदत्तकसंभवे विजातीयदत्तकनिषेधार्थः, नतु विजातीयो दत्तको न भवतीति सर्वथा विजातीयदत्तकनिषेधार्थः । तथा सति ‘ उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः सुताः । सवर्णा असवर्णास्तु ग्रासाच्छादनभाजनाः ॥ इति विजातीयदत्तकानामौरसोत्पत्त्यनन्तरं ग्रासाच्छादनभागित्वप्रतिपादककात्यायनवचनविरोधः स्यात् । तथा शौनकः—यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् । अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत् ॥ यदि सर्वथा विजातीयो दत्तको नास्ति तदा विजातीयदत्तकस्यांशभागित्वनिषेधोऽनुपपन्नः स्यात् । याज्ञवल्क्योऽपि सजातीयस्य पिण्डदातृत्वांशहरत्वे विहिते नतु विजातीयस्य पुत्रत्वं निषिद्धमित्याह । तदेव स्पष्टमुक्तं वृद्धयाज्ञवल्क्येन–सजातीयः सुतो ग्राह्यः पिण्डदाता स रिक्थभाक् । तदभावे विजातीयो वंशमात्रकरः स्मृतः ॥ अत्र विजातीये पिण्डोदकाद्यनर्हत्वेऽपि नामसंकीर्तनादिप्रयोजनकतया पुत्रत्वमुत्पद्यत एवेति प्रतिपादितम् । इत्यार्षवचनप्रामाण्याद्विजातीयोऽपि दत्तको भवत्येवेत्याह । स च नामसंकीर्तनाद्यल्पोपकारकतया ग्रासाच्छादनमात्रभागित्यन्यदेतत् । तथा च तादृशविजातीयदत्तकमरणे प्रतिग्रहीतुस्त्रिरात्रवारणाय दत्तके समानजातीयत्वविशेषणं सुतरां चरितार्थमिति बोध्यम् ।

एवं दत्तकादिमरणे प्रतिग्रहीतृपितॄणां त्रयाणां त्रिरात्रमाशौचमुक्त्वेदानीं प्रतिग्रहीतृमरणे दत्तकस्य ‘ त्र्यहं शावमाशौचं सपिण्डेषु विधीयते ’ ( म० स्मृ० ५ । ५९ ) इत्युक्तं त्र्यहमाशौचं संभवति नवेति विचार्यते–संभवतीति । सपिण्डता तु निवृत्ता, इत्यादिवृद्धहारीतवचनेन गोत्ररिक्थे इति शौनकवचनेन सप्तपुरुषपर्यन्तं सपिण्डतामुक्त्वा पिण्डोदकदानं च शौचाशौचं तदनुगमित्वाभि-

मिलितयोरभावात् । अशौचविशेषश्चाऽऽहत्य नोपलभ्यते तथाऽपि-

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥

इति मरीचिवचनेन शिष्यस्य गुरुप्रेतकार्यकरणानिमित्तदशाहाशौचमुक्तं भवति। अत्र गुरुशब्द आचार्यादिरूपः । गुरुत्वमत्राप्यस्ति । उपनयनादिकर्तृत्वात् ।

---

हितत्वादाशौचोदकदानादौ गोत्रसापिण्ड्ययोरुभयोः सिद्धसाध्यसमभिव्याहारन्यायेन हेतुताऽवगता भवति । सा च पुनर्न प्रत्येकपर्याप्ता किंतु दण्डचक्रन्यायेन गोत्रसापिण्ड्यैतदुभयपर्याप्ता भवतीत्युक्तं पुरस्तात् । दत्तके तु प्रतिग्रहीतृगोत्रसंबन्धो यद्यपि वर्तते तथाऽपि दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्यं सुतरां नास्ति । सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥ इति वृद्धगौतमेन दत्तके प्रतिग्रहीतृसापिण्ड्यस्यानुत्पत्त्यभिधानात् । अत एव देवलेन ' धमार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् । अंशपिण्डविभागित्वं तेषु केवलमीरितम् ॥ इति पुत्रप्रतिनिधितया परिगृह्य वर्धितेषु पुत्रेषु केवलं परिग्रहीत्रंशपिण्डविभागित्वमेव न सापिण्ड्यमिति दत्तके प्रतिग्रहीतृसापिण्ड्यं निषिद्धमिति प्राग् ( पृ० १६९ ) उक्तत्वाच्च । यच्च पूर्वं ( १८७ पृष्ठे ) दत्तकस्य प्रतिग्रहीतृकुले त्रिपुरुषं वाचानिकं सापिण्ड्यमुक्तं तत्त्रिरात्राशौचप्रयोजकमेव भवति, नतु दशरात्राशौचप्रयोजकम् । विशेषेण त्रिरात्रविधिना सामान्यस्य दशरात्रस्यापवादत्वेन बाधात् । एतदाशयेन ' यद्यपि ' इत्यादिग्रन्थप्रवृत्तिर्बोध्या । तथा च दशरात्राशौचोदकदानादिनिमित्तयोः प्रतिग्रहीतृगोत्रसापिण्ड्ययोर्मिलितयोर्दत्तकेऽभावात्प्रतिग्रहीतृमरणे दत्तकस्य दशाहमाशौचं यद्यपि न प्राप्नोति नापि वा दशाहप्रतिपादकमाहत्य विशेषवचनमुपलभ्यते तथाऽपि ' गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् । प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥ ( म० स्मृ० ५ । ६५ ) । निरन्वयेऽसपिण्डे तु मृते सति दयान्वितः । तदशौचं पुरा चीर्त्वा कुर्यात्तु पितृवत्क्रियाम् ॥ इत्यादिवचनैर्यः शिष्यादिर्गुरोराचार्यादेरसपिण्डस्य मृतस्यान्त्येष्टिं कृत्वा प्रेतनिर्हारकै र्गुरुसपिण्डैस्तुल्यो दशरात्रेण शुध्यतीत्यर्थकैः शिष्यस्य गुरोर्यत्प्रेतकार्यकरणं तन्निमित्तकं दशाहमाशौचमुच्यते । अत्र गुरुराचार्यादिरूपोऽपि नतु पित्रादिरूप एव । प्रतिग्रहीतरि गुरुत्वमाचार्यत्वमपि भवति । उपनयनादिकर्तृत्वादिति भावः । एवं च दत्तकस्य प्रतिग्रहीतृक्रियाकरण एव दशाहमाशौचं सिध्यति । दत्तकस्य प्रतिग्रहीतृक्रियाकरणाधिकारश्चौरसाभाव एव । सति त्वौरसे तस्यैव क्रियाकरणाधिकारः । ' पिण्डदोऽशहरश्चैषां पूर्वाभावे परःपरः ' ( या० स्मृ० २ । १३२ ) इति वचनात् ।

ततश्च दत्तकस्य प्रतिग्रहीतृक्रियाकरण एव दशरात्राशौचं सिध्यति । अन्यथा त्रिरात्रमेव पूर्वोक्तवचनात् । एवं दत्तकस्य प्रतिग्रहीतृत्रिपुरुषानन्तरवर्तिसपिण्डमरण एकाहः। एकाहस्तु सपिण्डानामिति पूर्वोक्तमरीचिवचनात् । सोदकस-

---

**अन्यथेति** । उक्तवैपरीत्ये । दत्तकेन प्रतिग्रहीतृक्रियाया अकरणे । औरसस्य स्वेनेत्यकरणे हेतुर्बोध्यः। दत्तकस्य प्रतिग्रहीतृमरणे त्रिरात्रमेवाऽऽशौचम्। 'अन्याश्रितेषु' इति पूर्वोक्तबृहस्पतिवचनादिति भावः । एवं प्रतिग्रहीतृरूपपित्रादिपुरुषत्रयादनन्तरवर्तिनो ये प्रतिग्रहीतृपितृसपिण्डाः, अर्थाद्दत्तकस्य वृद्धप्रपितामहादयस्तेषां मरणे दत्तकस्यैकाहमाशौचं 'एकाहस्तु सपिण्डानाम्' इति पूर्वोक्तमरीचिवाक्यात् ।

ननु दत्तकमरणे त्रिपुरुषानन्तरवर्तिनां प्रतिग्रहीतृपितृसपिण्डानामेकाहमाशौचमुक्तमुक्तमरीचिवचनेन, न तु त्रिपुरुषान्तरवर्तिसपिण्डमरणे दत्तकस्यैकाहमाशौचमुच्यत इति तत्कथमुच्यते पूर्वोक्तमरीचिवाक्यादिति चेत् । उच्यते—पूर्वोक्तमरीचिवचनेनोक्तं यत् 'यत्प्रतियोगिकं यन्निष्ठम्' आशौचं, तस्मात्तुल्यन्यायेनोहितं 'त्रिपुरुषानन्तरवर्तिसपिण्डमरणे दत्तकस्यैकाहमाशौचम्' इति 'पूर्वोक्तमरीचिवाक्यात्' इत्यस्य तात्पर्यमिति भावः । तुल्यन्यायश्च 'यन्मरणे यस्य यदाशौचं भवति तन्मरणे तस्य तदाशौचं भवतीति' । यथा—यन्मरणे—दत्तकमरणे, यस्य—त्रिपुरुषानन्तरवर्तिसपिण्डस्य, यदाशौचम्—एकाहमाशौचम् । उक्तमिति शेषः । तन्मरणे—त्रिपुरुषानन्तरवर्तिसपिण्डमरणे, तस्य—दत्तकस्य, तदाशौचम्—एकाहमाशौचम्, भवतीति बोध्यम् । मरीचिवाक्यार्थाद्धेतोस्तुल्यन्यायेनोहिताद्वाक्यादिति मरीचिवाक्यादित्यस्यार्थ इति यावत् । एवमेव पूर्वोक्तस्य 'बृहस्पतिवचनात्' इत्यस्यार्थोऽनुसंधेयः । तदिदं तुल्यन्यायस्वरूपमाशौचरूपविशेषकार्यापेक्षयोक्तम् । अन्यकार्येष्वप्येवं तुल्यन्यायो योज्यः ।

बौधायनेन 'मातुः सपत्न्या भगिनीम्' इति वचनेन स्वमातुः सपत्न्या भगिनी स्वस्याविवाह्येत्युक्तम्। यथा—स्वं—देवदत्तः । स्वमाता—राधिका । स्वमातुः सपत्नी—चन्द्रिका । स्वमातुः सपत्न्या भगिनी—ज्योत्स्ना । सा ज्योत्स्ना देवदत्तेन नैव परिणेयेत्यर्थः । अत्र यथा देवदत्तस्य ज्योत्स्नया विवाहो निषिध्यते स्वमातुः सपत्न्या भगिनीत्वात् तद्वज्ज्योत्स्नाया अपि देवदत्तेन सह विवाहस्तुल्यन्यायेन निषिध्यते । तुल्यत्वं चात्रैवं वर्णनीयम्—स्वं—ज्योत्स्ना । स्वभगिनी—चन्द्रिका । स्वभगिन्याः सपत्नी राधिका । स्वभगिनीसपत्न्याः सुतो देवदत्तः । स देवदत्तस्तया ज्योत्स्नया नैव परिणेयः । यथा स्वमातुः सपत्नीभगिनीत्वाज्ज्योत्स्ना स्वस्य निषिद्धा तद्वत्स्वभगिन्याः सपत्नीसुतत्वाद्देवदत्तो ज्योत्स्नाया निषिद्ध इति यावत् । प्रतिग्रहीतृकुलीयसोदकसगोत्रयोर्मरणे दत्तकस्य स्नानमात्रेण शुद्धिः। अन्याश्रितेषु......गोत्रिणः स्नान-

गोत्रयोर्मरणे स्नानमात्रम् । ' अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ' इति पूर्वो-क्तप्रजापतिवाक्यात् ।

अथ दत्तकपुत्रकर्तृकश्राद्धनिर्णयः । तत्र च जातूकर्ण्य(र्ण्यः):-

---

सुताः स्युस्त्रिरात्रेणैव तत्त्ववित्, इति पूर्वोक्तप्रजापतिवाक्यादित्यर्थः । अत्रापि ' प्रजापतिवाक्यात् ' इत्यस्य प्रजापतिवाक्यार्थात्तुल्यन्यायेनोहितात् ' सोदकसगोत्रयोर्मरणे दत्तकस्य स्नानमात्रम् ' इत्येवंरूपाद्वाक्यादित्यर्थ इति ज्ञेयम् । इदं सर्वं शुद्धदत्तकस्य प्रतिग्रहीतृकुले परस्परमाशौचं प्रतिपादितम् । व्यामुष्यायणस्य तु जनकपालकैतदुभयोरपि कुलयोर्गोत्रसापिण्ड्योर्मिलितयोः सत्त्वादुभयत्राप्याशौचेन भाव्यम् । तच्चोभयत्रापि कुले त्रिरात्रमेव न दशरात्रम् । उभयत्र सापिण्ड्यं प्रदर्शितं संग्रहकारेण-दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात्त्रिपौरुषम् । जनकस्य कुले तद्वद्ग्रहीतुरिति धारणा ॥ इति । तथा च दशरात्राशौचप्राप्तौ तदपवादकं त्रिरात्राशौचं ब्रह्मपुराण उक्तम्---दत्तकश्च स्वयंदत्तः कृत्रिमः क्रीत एव च । अपविद्धाश्च ये पुत्रा भरणीयाः सदैव ते ॥ भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकराः स्मृताः । जनने मरणे चैव त्र्यहाशौचस्य भागिनः ॥ इति । अत्र त्र्यहाशौचस्य भागिनो दत्तकादयः पुत्रा इत्यन्वयाद्दत्तकादीनां त्र्यहाशौचं प्रतीयते । तथा च जनने मरणे चैवेत्यत्र कस्य जनने मरणे चेत्याकाङ्क्षायां प्रत्यासत्त्या जनकपालककुलगतसपिण्डजननमरणयोरिति लभ्यते । ततश्च यन्मरणे यस्य यदाशौचं तन्मरणे तस्य तदाशौचमिति तुल्यन्यायेन दत्तकादीनां जननमरणयोस्तत्पालकजनकुलेऽपि त्र्यहाशौचं भवति । तच्च त्रिपुरुषसपिण्डानामेव । व्यामुष्यायणस्योभयकुले त्रिपुरुषसापिण्ड्योक्तेः । किंचायं दत्तको यद्यसपिण्डः स्यात्तदैवेदं त्रिरात्रं प्रवर्तते । ब्रह्मपुराणे ' पृथक्पिण्डाः ' इत्युक्तत्वात् । असपिण्डा इति तदर्थात् । एतेन सपिण्डे दत्तीकृते तु सपिण्डमरणादिनिमित्तकं दत्तकस्य, दत्तकमरणादिनिमित्तकं सपिण्डानां च दशरात्रमेव । सपिण्डदत्तके ब्रह्मपुराणस्थत्रिरात्रस्याप्रवृत्तावुत्सर्गतः प्राप्तस्य दशरात्रस्यावस्थानादिति सूचितम् ।

अथ दत्तकपुत्रकर्तृकं श्राद्धं निर्णीयते । तत्र पितुः सपिण्डीकरणान्तषोडशश्राद्धे दत्तकस्य पूर्वमेव गृहीतत्वेऽप्यौरसपुत्रसत्त्वे तस्यैवाधिकारो न दत्तकस्य । ' औरसे पुत्रउत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते ' इति देवलेन दत्तकादीनां ज्येष्ठत्वनिषेधात् । ज्येष्ठ एव हि पुत्रः पितुरौर्ध्वदेहिकाधिकारीति भावः । ' पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ' ( या० स्मृ० २ । १३२ ) इति याज्ञवल्क्येनौरसादिद्वादशपुत्राणां मध्ये पूर्वस्य पूर्वस्याभावे परस्य परस्य पिण्डदत्वा-

प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश॥ इति।

प्रत्यब्दमिति सामान्योपादानेन मघादिश्राद्धप्राप्तावपि क्षयाहश्राद्धमेवात्र विवक्षितम्।

पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम्।
सर्वत्रानेकगोत्राणामेकोद्दिष्टं क्षयेऽहनि।

इति पराशरवाक्ये क्षयाहपदोपादानात्। न चात्राप्यनेकगोत्रपदं मातामहादिपरम्। तस्य पित्रौरसपदसमभिव्याहारेणौरसप्रतियोग्यनौरसपुत्रपरत्वस्यैवौचित्यात्।

---

भिधानाच्च। क्षयाहश्राद्धे विशेषमाह जातूकर्णः—**प्रत्यब्दमिति**। औरसः क्षेत्रजश्च पुत्रः पितुः प्रत्यब्दं सांवत्सरिकं पार्वणेन कुर्यात। इतरे दत्तकादयो दश पुत्राः पितुरेकोद्दिष्टं कुर्युर्न पार्वणमिति तदर्थः। क्षेत्रजौरसयोर्यत्पितुः क्षयाहे पार्वणमुक्तं तदपि क्षेत्रजौरसयोः साग्न्योरेव नतु निरग्न्योः। निरग्न्योस्तयोस्त्वेकोद्दिष्टमेव। 'पार्वणेन विधानेन देयमग्निमता सदा' इति जाबालमत्स्यपुराणैकवाक्यत्वात्। औरसक्षेत्रजेतरेषां तु साग्निनिरग्निसाधारणानामेकोद्दिष्टमिति दत्तकचन्द्रिकायां विशेषः। अत्राब्देऽब्दे क्रियमाणं श्राद्धं प्रत्यब्दमिति व्युत्पत्त्या यद्यपि ब्दशब्देन मघादिश्राद्धमपि प्राप्तं प्रत्यब्देऽब्दे क्रियमाणत्वाविशेषात्तथाऽप्यत्र प्रत्यब्दशब्देन क्षयाहश्राद्धमेव विवक्षितम्। तत्र प्रमाणं प्रदर्शयन्नाह—**पितुर्गतस्येति**। औरसकर्तृके मृतस्य पितुः क्षयेऽहनि क्षयाहश्राद्धे त्रिपुरुषं त्रीन् पुरुषानभिव्याप्य देवत्वं श्राद्धदेवतात्वं भवति। अनेकगोत्राणां स्वभावतो द्विगोत्राणां दत्तकादीनां तु पित्रादिश्राद्धे क्षयेऽहन्येकोद्दिष्टं भवतीति तदर्थः। ततश्चौरसः सर्वत्र पितृश्राद्धे मातामहादिश्राद्धे च क्षयेऽहनि पार्वणमेव कुर्यात्। अनेकगोत्रशब्दाभिधेयो दत्तकादिस्त्वेकोद्दिष्टमेव क्षयाहे कुर्यादिति यावत्। अस्मिन् पराशरवचने क्षयेऽहनीत्युपादानात्प्रत्यब्दशब्देन क्षयाहश्राद्धमेवोच्यते तदेकवाक्यत्वादिति भावः।

नन्वनेकगोत्राणामिति भिन्नगोत्राणां मातामहादीनामित्यर्थपरं स्यात। ततश्च येन पुत्रेण स्वपितुः क्षयाहे पार्वणं करणीयं तेनैव पुत्रेण स्वमातामहानां क्षयाहश्राद्ध एकोद्दिष्टं कर्तव्यमित्यर्थपर्यवसानान्नेदमनेकगोत्रैः स्वभावतो द्विगोत्रैर्दत्तकादिभिः स्वपित्रादिक्षयाह एकोद्दिष्टं कर्तव्यमित्यर्थं प्रतिपादयतीत्याशङ्कते—**न चात्रापीति**। शङ्कां निरस्यति—**तस्येति**। पितुर्गतस्य देवत्वमौरसस्येत्यत्र पितृपदस्यौरसपदस्य च समभिव्याहारेण—समीपोच्चारणेन तस्य—अनेकगोत्राणामिति पदस्यौरसविरोध्यनौरसपुत्रार्थ-

अन्यथा पितुः पुत्रेण क्षयेऽहानि त्रिपुरुषं कर्तव्यमित्येतावतैवार्थसिद्धावौरसपदोपादानानर्थक्यापातात् । न च मातामहादीनामपि क्षयाह एकोद्दिष्टमेव भवतीति नियमोऽस्ति । तथा च मरीचिः-

मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।
तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः ॥ इति ।

---

प्रतिपादकत्वस्यैवोचितत्वान्मातामहपरत्वं न शङ्कितुमपि शक्यमित्यर्थः । **अन्यथेति** । अनेकगोत्राणामित्यस्य दत्तकादिपरत्वाभावेन मातामहपरत्वे सतीत्यर्थः । दत्तकेन स्वपितुः पालकस्य क्षयाह एकोद्दिष्टं कर्तव्यमित्यर्थस्यात्यन्ताप्रतीत्या दत्तकेनापि स्वपितुः क्षयाह औरसपुत्रवत्त्रिपौरुषं नाम पार्वणमेव कर्तव्यमित्यर्थादिवाऽऽयाति । ततश्च ‘ पितुर्गतस्य देवत्वं तत्सुतस्य त्रिपौरुषम् ’ इत्येवमौरसशब्दस्थाने सामान्यतः पुत्रशब्द एव निवेशयितुं योग्यो भवति । तथा च विशेषस्यौरसशब्दस्योपादानं व्यर्थं भवति । यतश्च पितुः क्षयाहश्राद्धे पार्वणकर्तरि पुत्रे वैशेष्याकाङ्क्षोत्पादकमौरसशब्दं प्रयुङ्क्ते ततोऽनेकगोत्राणामित्यस्य न मातामहपरत्वं किंत्वौरसप्रतियोग्यनौरसदत्तकादिपुत्रपरत्वमेव युक्तम् । किंच पुत्रेण स्वपितुः क्षयाहश्राद्धं पार्वणं कर्तव्यमिति पितुर्गतस्येति वचनपूर्वार्धेन विहिते सति तेन पुत्रेण पितृव्यतिरिक्तस्य स्वमातामहस्य क्षयाहश्राद्धे पार्वणं न कर्तव्यमित्यार्थिकपार्वणनिषेधात्परिशेषन्यायेन पार्वणाभाव एकोद्दिष्टमेव मातामहानामवशिष्यत इत्युत्तरार्धं सुतरामवक्तव्यं स्यात् ।

ननु मातामहानां क्षयाहे पार्वणविधानार्थमुत्तरार्धं किं न स्यात् । मातामहानां क्षयाहे त्रिपौरुषं देवत्वमित्यन्वयेनाऽऽर्थिको यः पार्वणनिषेधस्तन्निवारणार्थं किं न स्यादित्यर्थः । मातामहक्षयाहश्राद्धकर्तृत्वं च यन्निरूपितं मातामहत्वं तस्य दौहित्रस्यैवेत्यर्थः । तथा च दौहित्रेण मातामहानां क्षयाहश्राद्धे पार्वणं कर्तव्यमित्येवं विधानार्थमुत्तरार्धं स्यादिति शङ्कितुराशय इति भावः । तन्न । मातामहानां क्षयाह एकोद्दिष्टमित्यन्वयस्यैव संनिहितत्वेनोचितत्वात् । पार्वणं कुरुते यस्तु केवलं पितृकारणात् । मातामहानां न कुरुते पितृहा स प्रजायते ॥ इति वचनेन मातामहानां क्षयाहे पार्वणाकरण दोषश्रवणेन पार्वणानुष्ठानसूचनाच्च ।

ननु मातामहानां क्षयाह एकोद्दिष्टमेवेति नियमार्थं किं न स्यादिति चेन्मरीचिना मातामहानां क्षयाहे पार्वणविधानान्नैवमित्याह--**न च मातामहादीनामिति** । मरीचिवचनं पठति-**मातुः पितरमारभ्येति** । अत्र दौहित्रेण मातुः पितरमारभ्य त्रयाणां मातामहानां श्राद्धं कर्तव्यमित्येवं श्राद्धकर्तव्यताया अभिधानात्पार्वणमित्यर्थोऽवगम्यते । तथा च मातामहानां क्षयाह एकोद्दिष्टमेवेति नियमो वक्तुमशक्य इति भावः ।

अत्र त्रयाणां मातामहानां श्राद्धविधानात्पार्वणमवगम्यते । न च पितृवदि-त्यनेन मातामहानामपि पार्वणैकोद्दिष्टयोर्विकल्पः । तस्य मातामहश्राद्धनित्यता-विधानपरत्वात् । किंच—

कर्षूसमन्वितं मुक्त्वा तथाऽऽद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं तु शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥

इत्यत्रापि प्रत्याब्दिकशब्दस्यापि प्रत्यब्दशब्दवन्मघादिश्राद्धपरत्वं कुतो न स्यात् । इष्टापत्तिरिति चेन्न । मघादिष्वपि दत्तकादीनामेकोद्दिष्टापत्तेः । न

---

एवं चानेकगोत्राणामिति पदं न मातामहादिपरं किंत्वरौसप्रतियोग्यनौरसदत्तकादि-पुत्रपरमित्यङ्गीकृत्यैव मरीचिवचनार्थविषये शङ्कते—**न च पितृवदिति** । अयं भावः—मरीचिवचने पितृवच्छ्राद्धं कुर्यादित्युक्त्या यथौरसपुत्रेण क्षेत्रजपुत्रेण च स्वपितुः क्षयाहे पार्वणं क्रियते दत्तकादिभिश्चैकोद्दिष्टं, तथौरसदौहित्रेण क्षेत्रजदौहित्रेण च स्वमातामहस्य क्षयाहश्राद्धे पार्वणमेव कार्यम् । अथ चौरसक्षेत्रजदौहित्रव्यतिरिक्तैर्दत्तकादिदौहित्रैः स्वमातामहस्य क्षयाह एकोद्दिष्टमेव कर्तव्यमित्येवं मातामहानां पार्वणैकोद्दिष्टयोर्विकल्पोऽवगम्यत इति । तदयुक्तम् । यथा पितुः श्राद्धं नित्यमवश्यानुष्ठेयं भवति तद्वन्मातामहश्राद्धमवश्यानुष्ठेयमित्येवं मातामहश्राद्धनित्यताप्रतिपादनपरत्वात्पितृवदित्युक्तेरित्याह—**तस्येति** । मातामहश्राद्धकर्तृत्वेनाविशेषेण दुहितृसूनव इत्यभिधानादौरसादिभिः सर्वैरेव दौहित्रैर्मातामहानां क्षयाहे पार्वणकर्तव्यतावगमान्निरुक्तविकल्पात्यन्तासंभवेन पितृवदित्यस्य मातामहश्राद्धनित्यतापरत्वमेवेति भावः ।

जातूकर्णवचने प्रत्यब्दशब्देन मघादिश्राद्धग्रहणे बाधकमप्यस्तीत्याह—**किंचेति** । **कर्षूसमन्वितमिति** । सर्वतश्चतुरङ्गुला चतुरस्रा तावत्येवाधः खाता भूमिः कर्षूः । तादृशकर्षूत्रयसमीपेऽग्नित्रयमुपसमाधाय तस्मिन्नाहुतित्रयं हूयते यस्मिंस्तत्कर्षूसमन्वितं श्राद्धम् । छन्दोगैः क्रियमाणमन्वष्टकाश्राद्धमिति यावत् । **श्राद्धषोडशमिति** । द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा । सपिण्डीकरणं चैव इत्येतच्छ्राद्धषोडशम् ॥ इति वचनोक्तमित्यर्थः । प्रत्याब्दिकं प्रतिसांवत्सरिकम् । इत्येतान्यष्टादश श्राद्धानि वर्जयित्वा शेषेषु श्राद्धेषु पितृपार्वणं मातामहपार्वणं चेति मिलित्वा षट्पिण्डा भवेयुः । निरुक्ताष्टादशसु तु पिण्डत्रयमेवेति फलितमिति तदर्थः । पिण्डाः स्युः षडित्यनेन पार्वणमुक्तं भवति । अत्र प्रत्याब्दिकशब्देन मघादिश्राद्धमपि कुतो न गृह्यते ? प्रत्यब्दं क्रियमाणत्वाविशेषादिति शेषः । **इष्टापत्तिरिति** । प्रत्याब्दिकशब्देन मघादिश्राद्धस्यापि ग्रहणमिष्टमेवेत्यर्थः । यथा प्रत्यब्दशब्देन मघादिकमपि श्राद्धं गृह्यते तत्तुल्यन्यायादत्रापि प्रत्याब्दिकशब्देन मघादिश्राद्धग्रहणमिष्टमेवास्माकमिति चेद्वदसि तन्न

चैतत्कस्यापीष्टम् । प्रत्याब्दिकशब्देन श्राद्धमात्रसंग्रहे शेषपदाभिधेयश्राद्धान्तराभावेन पर्युदासासंभवात् । तस्मादौरसेन क्षयाहे मातापित्रोः पार्वणमेव कार्यम् । इतरैर्दत्तकादिभिरेकोद्दिष्टमेवेत्येव व्यवस्था साधीयसीत्यलं विस्तरेण ।

अथ दत्तकविभागः । तत्र वसिष्ठः—तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतु-

---

युक्तमित्याह—नेति । प्रत्यब्दशब्देन मघादिश्राद्धग्रहणं नेष्टमित्यर्थः । अनेन दृष्टान्तासिद्धिरुक्ता । दृष्टान्त एवाऽऽदौ मघादिश्राद्धग्रहणं नेष्यत इति यावत् । यदि तु प्रत्यब्दशब्देन मघादिश्राद्धमपि गृह्येत तदा क्षेत्रजौरसौ प्रत्यब्दं सर्वं सांवत्सरिकमघादिश्राद्धं पार्वणेनैव कुर्याताम् । इतरे दत्तकादयो दश सुतास्तु सर्वं मघादिश्राद्धमेकोद्दिष्टेन कुर्युरित्येवं जातूकर्णवचनार्थपर्यवसानाद्दत्तकादिभिः सांवत्सरिकश्राद्धवन्मघादिश्राद्धमप्येकोद्दिष्टेन कर्तव्यं स्यादित्यनिष्टं प्रसज्येत । तथा प्रत्याब्दिकशब्देनापि मघाश्राद्धादिसकलश्राद्धग्रहणं नेष्यते । यदि च प्रत्याब्दिकशब्देन मघाश्राद्धादिश्राद्धमात्रं गृह्येत, तदा सर्वस्य श्राद्धस्य वर्ज्यकोटिप्रविष्टत्वेनावशिष्टश्राद्धान्तराभावात् 'शेषेषु पिण्डाः स्युः षडिति स्थितिः' इति वाक्यं निर्विषयं स्यात् । शेषेष्विति शेषशब्दवाच्यश्राद्धान्तराभावेन पर्युदास एव न संगच्छेतेति यावत् । एवं च प्रत्यब्दशब्देन प्रत्याब्दिकशब्देन च सांवत्सरिकश्राद्धमेव विवक्षितं नतु मघादिश्राद्धमात्रम् । उक्तानिष्टप्रसङ्गापातात् । तस्मादौरसेन मातापित्रोः क्षयाहश्राद्धे पार्वणमेव कर्तव्यमितरैर्दत्तकादिभिरेकोद्दिष्टमेवेत्येव व्यवस्था साध्वीति बोध्यम् ।

अथ दत्तकस्य दायविभागो निरूप्यते । यद्धनं स्वामिसंबन्धादेव निमित्तादन्यस्य स्वं भवति स दायः । साधारणस्वत्वाश्रयस्य व्यवस्थाविशेषादिभिः प्रतिनियतस्वत्वाधानं विभागः । तथा च स्वामिसंबन्धवशाल्लब्धस्य धनस्य विभागो दायविभाग इत्यर्थः । स च दत्तकस्य यादृशो भवति स प्रतिपाद्यत इति यावत् । तत्र वसिष्ठ आह—**तस्मिंश्चेत्प्रतिगृहीत इति** । दत्तके प्रतिगृहीते सति तदनन्तरमौरस उत्पद्यते चेत्स दत्तकः पित्र्यस्य यावतो द्रव्यस्य चतुर्थांशं लभत इति तदर्थः ।

ननु दत्तकस्य प्रथमं गृहीतत्वेन ज्येष्ठत्वादौरसस्य च पश्चादुत्पन्नत्वेन कनिष्ठत्वादौरसेनैव किंचिदंशभागिना भवितव्यं, दत्तकेन तु धनहारिणा भवितव्यम् । तदुक्तं मनुना—ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः । शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥ इति चेत्तन्न । 'उत्पन्ने त्वौरसे पुत्रे तेषु ज्यैष्ठ्यं न विद्यते' इति देवलेनौरसोत्पत्तौ सत्यां पूर्वं गृहीतेष्वपि दत्तकादिषु ज्येष्ठत्वप्रतिषेधात् ।

नन्वेवम्—एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं

र्थभागभागी स्याद्दत्तक इति । तदभावे तु सर्वहरः ।

इति श्रीधर्माधिकारिरामपण्डितात्मजश्रीनन्दपण्डितविरचिता
दत्तकमीमांसा समाप्ता ॥

---

प्रदद्यात्तु प्रजीवनम् ॥ ( म० स्मृ० ९ । १६३ ) इति वचनानुसारेणौरसस्य समग्रधनहारित्वाद्दत्तकेन जीवनमात्रपर्याप्तांशहारिणा भवितुं युक्तमिति कथमुच्यते चतुर्थांशभागी दत्तक इति चेदुच्यते । ' उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः स्मृताः ' दत्तकक्षेत्रजादय इति शेषः । इति कात्यायनेन दत्तकस्य विशिष्य चतुर्थांशभागित्वाभिधानात् । तदिदं चतुर्थांशभागित्वं दत्तकादीनां सवर्णानां सतामेव नासवर्णानाम् । तदप्युक्तं तेनैवोत्तरार्धे–' सवर्णाः, असवर्णास्तु ग्रासाच्छादनभागिनः ' इति । सवर्णा दत्तकक्षेत्रजादयस्ते सत्यौरसे चतुर्थांशहराः । असवर्णाः कानीनगूढोत्पन्नसहोढजपौनर्भवास्ते त्वौरसे सति न चतुर्थांशहराः किंतु ग्रासाच्छादनभाजनाः । सर्वथौरसाद्यभावे दत्तकः समग्रधनहारी भवति । तदुक्तं वसिष्ठेन–' यस्य तु सर्वेषां वर्णानां न कश्चिद्दायादः स्यादेते तस्य भागं हरेयुः ' इति । औरसपुत्रिकापुत्रक्षेत्रजगूढजकानीनपौनर्भवदत्तकक्रीतकृत्रिमस्वयंदत्तसहोढजापविद्धाख्यान् द्वादश पुत्रान् क्रमेणाभिधाय ' पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ' ( या० स्मृ० २ । १२८ ) इति याज्ञवल्क्येनौरसादिपौनर्भवान्तानामभावे दत्तकस्य समग्रधनहारित्वाभिधानात् । अत्र पौनर्भवान्तानामभावे दत्तकस्य समग्रधनहरत्वाभिधानेनौरसाभावेऽपि पुत्रिकापुत्रादिसत्त्वे दत्तकस्य न समग्रधनहारित्वं, किंतु चतुर्थांशभागित्वमेवेति प्रतीयते । अत एवौरसाद्यभाव इत्यत्राऽऽदिपदमुपात्तम् । कलौ तु ' दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ' इति कलिवर्ज्यप्रकरणपठितवचनेनौरसदत्तकव्यतिरिक्तपुत्राणां निषेधादौरसाभावे दत्तक एव समग्रधनहारीति निर्विवादम् । इति शम् ।

न मञ्जर्या व्याख्या विबुधजनसंतोषकरणी
न वाऽऽस्ते सद्बोधा ललितमधुरा वाक्यरचना ।
न चार्थो गम्भीरः सुविशदतयाऽस्यां विवरित-
स्तथाऽप्येषा नव्येति हि खलु विलोक्या बुधवरैः ॥
नेत्रषड्वसुभू( १८६२ )वर्षे शाके विक्रमसंज्ञिते ।
वैशाखे मास्यर्पितेयं सच्चिदानन्दपादयोः ॥

इति श्रीपरमपूज्यगोडबोलेइत्युपाभिधरामशास्त्रिचरणान्तेवासिनो रङ्गनाथभट्टात्मजशंकरशास्त्रिणः कृतिर्नन्दपण्डितकृतदत्तकमीमांसाया
व्याख्या मञ्जरी नाम समाप्तिमगमत् ॥



# दत्तकमीमांसाग्रन्थस्थशिरागतैकद्व्याद्यङ्कविषयिण्यष्टिप्पणयः ।

लेखकः—विनायक विष्णु देशपाण्डे एल्. एल्. एम्.

प्राध्यापकः हिन्दुविद्यापीठं काशी ।

**पृष्ठम् पङ्क्तिः साङ्कं प्रतीकम्**

० ३ ( १ ) दत्तकमीमांसेति । नन्दपण्डितस्य सर्वेषु[ग्रन्थेषु] प्रसिद्धो ग्रन्थो दत्तकमीमांसा नाम । अस्य ग्रन्थस्य राजकीयन्यायवित्पण्डितमध्ये प्रसिद्धेर्मुख्यं कारणं ‘ सदरलंड ’ आङ्गलपण्डितेन दत्तकविषयोपरि प्रमाणभूतोऽयमेक एव ग्रन्थ इत्याङ्ग्लभाषायां व्याख्यानमकारीति । परमार्थदृष्ट्याऽवलोक्यते चेत्पुण्यपत्तनपण्ढ- रीक्षेत्रेत्यादिप्रदेशीयपण्डिता दत्तकसंबन्धेन शास्त्रार्थनिर्णयप्रदानसमये स्वेतरविषयव- देव निर्णयसिन्धुसंस्कारकौस्तुभव्यवहारमयूखधर्मसिन्धुमिताक्षरादिग्रन्थाधारेणैव निर्णयं ददते स्म । तैरयं दत्तकमीमांसाग्रन्थो नाऽऽलोकित इति न । परमेत- द्ग्रन्थकर्ताऽसावस्मिन्प्रदेशे समन्तत इयती मान्यतां प्राप्तो नाऽऽसीत् । किंत्वस्य ग्रन्थस्य भाषान्तरादारभ्याऽऽङ्ग्लन्यायालयेषु दत्तकसंबन्धिविवादनिर्णयप्रदान- कृतेऽस्य महती समादृतिप्रथा प्रवर्तते स्म । मदुरादेशाधिकारिकलेक्टरविरुद्धं मुट्टुरामलिङ्ग ( १२ मू० इं० अ० पृ० ३९७ ) एतत्प्रिव्हीकौन्सिलकृतनिर्णयेन त्वस्य ग्रन्थस्य श्रेष्ठतमाधिकारविषय एकप्रकारकं राजमुद्राङ्कितमनुशासनपत्रमिव संजातम् । तस्मिन्विवादनिर्णयमध्ये न्यायमूर्तय एवमवादिषु.—यद्दत्तकमीमांसादत्तक- चन्द्रिकाभिख्यं ग्रन्थद्वयं दत्तकसंबन्धेन शास्त्राधारावलोकनकृतेऽखिलहिन्दुस्थानमभि- व्याप्य प्रमाणभूतमिति विज्ञायते । परंतु यदि तयोर्मध्ये कियानपि भेदः स्यात्तर्हि दत्तकमीमांसानुसारी निर्णयः काशी, मिथिला, तयोरासमन्ताद्गतप्रदेशाश्चेत्येतत्प्रदेशस्थ- लोकैः शिरसा वन्द्यते । अथ च बङ्गाल–मद्रासप्रदेशस्थजनैर्दत्तकचन्द्रिका शिरो- धार्या मन्यते । तस्मान्निर्णयादनन्तरं दत्तकप्रकरणविषये मोहमयीमहाप्रान्तेऽपि दत्तकमीमांसाधिकारः पुष्कलवेलासु मान्यः कृतोऽस्ति । सत्यतया वक्तव्ये सति नीलकण्ठभट्टकृतव्यवहारमयूखः, विज्ञानेश्वरीयमिताक्षरा चेतीत्येतद्ग्रन्थशास्त्रा- धारानुसारं मुम्बामहाप्रान्तीयो धर्मशास्त्रविषयकः सर्वो व्यवहारः प्रचालयितुं योग्य इति न्यायमन्दिरैरेव निश्चितम् । परं केषु केषु विषयेषु व्यवहारमयूखादेशान्दूरम- पसार्य दत्तकमीमांसाप्रतिपादितशास्त्रार्थो न्यायालयैरङ्गीकृतः । उदाहरणम्——व्यव- हारमयूखानुसारेण द्विजानामपि दौहित्रभागिनेयमातृष्वसृसुतानां दत्तकत्वेन स्वीकारे न कोऽपि प्रतिबन्धः । परंतु मुम्बापुरीयमहान्यायालयेन दत्तकमीमांसाधारमव- लम्ब्य निरुक्तपुत्रत्रयस्य ग्रहणमशास्त्रीयमिति प्रस्तावोऽकारि । एवंत्वेऽपि दत्तक- मीमांसायां वर्णिताः सर्व एव निर्णया मानिता इत्येवं नैव मन्तव्यम् । कारणं— दत्तकमीमांसाकारः स्त्रीणां पुत्रग्रहणाधिकारो नास्तीति प्रतिपादयति । किंतु मिथिलाप्रदेशं वर्जयित्वाऽन्यत्र सर्वत्र न्यायालयैरसावधिकारो मान्यः कृतोऽस्ति । वयसः पञ्चमवर्षानन्तरमपु-

त्यस्य दत्तकविधानं न भवितुं शक्नोतीति नन्दपण्डिता मन्यन्ते। परमद्य साक्षात्काशीप्रान्तेऽप्युपनयनसंस्कारपर्यन्तमनुष्ठितं दत्तकविधानं मान्यं भवति । मद्रासदेशे विवाहपर्यन्तं, मोहमय्यां तु विवाहोत्तरमपि दत्तकविधानं शास्त्रीयमित्युररीकृतम् । तथैव विरुद्धसंबन्धविषये पुत्रच्छायावहत्वविषये च नन्दपण्डितकृतानि विधानानि न्यायालयैः सर्वत्रैव मानितानीति न मन्तव्यम् ।

पृ० प० सा० प्रतीकम्

० ५ ( २ )। नन्दपण्डित इति । नन्दपण्डितस्य पूर्वजा बेदरग्रामनिवासिनः । तद्वंशीयो मूलपुरुषो लक्ष्मीधरः । तस्मात्षष्ठ्यां वंशपीठिकायां नन्दपण्डितजन्म । लक्ष्मीधरोऽसौ नैरन्तर्येण काश्यां निवस्तुं गतोऽभूत् । शालिवाहनशकीयैकोनविंशतितमशतकप्रारम्भसमये धुण्डिराजधर्माधिकारी नन्दपण्डितान्नवमवंशपीठिकापुरुषः काश्यां जीवद्वयस्थ आसीत् । तेन काश्यां दत्तकमीमांसाग्रन्थस्याऽऽवृत्तिः पण्डितैः संशोध्य मुद्रापिताऽस्ति । अद्यापि तत्कुलं काश्यां स्वास्तित्वे वर्तते । सोऽसौ नन्दपण्डितः शालिवाहनशकीय १५०० आरभ्य १५५० पर्यन्ते काले बहुधा स्वास्तित्वेऽभूदित्यनुमानेनावगन्तुं शक्यते । विष्णुधर्मसूत्रोपरि या वैजयन्तीनाम्नी तत्कृता टीका प्रसिद्धाऽस्ति सा काशीक्षेत्रे विक्रमसंवत् १६७९ कार्तिकपौर्णमास्यां पूर्णाऽभूदिति तस्यैव लेखो ग्रन्थान्ते दृश्यते । १६७९ विक्रमः, अर्थात् १५४५ शकः । वैजयन्तीत्यसौ बहुधा ( तत्कृतग्रन्थेषु ) चरमो ग्रन्थः । नन्दपण्डितपितुर्नाम ' रामपण्डितः ' इति भूत्वा ' विनायकपण्डितः ' इत्याकारकं द्वितीयमप्यभिधानमस्ति स्म । नन्दपण्डितस्य धर्मशास्त्रविषयोपरि ग्रन्थरचना बहुतरा वर्तते । पराशरस्मृतौ विद्वन्मनोहरा, विज्ञानेश्वरकृतमिताक्षरायां प्रमिताक्षरा, श्राद्धकल्पलता, स्मृतिसिन्धुः, शुद्धिचन्द्रिका, विष्णुधर्मसूत्रोपरिगता वैजयन्ती च । स्मृतिसिन्धुरित्यभिख्यो ग्रन्थोऽतीव विशाल इति हेतोस्तदन्तःपातिनो मुख्यमुख्यविषयानेकत्र सारांशरूपेण सुसंगतान्संगृह्य ' तत्त्वमुक्तावली ' नाम ग्रन्थस्तेनैव व्यरचि । त एते नन्दपण्डितग्रन्थाः सर्वत्र शास्त्रिपण्डितसमाजे मान्यतां प्राप्ताः सन्ति । नैतावदेव, किंतु काशीप्रान्ते विवादनिर्णयलापनवेलायां वैजयन्तीग्रन्थाधारो राजकीयमहान्यायमन्दिराध्यक्षैरपि गृह्यते । एतद्व्यतिरेकेणापि ' नवरात्रप्रदीपः ' हरिवंशविलासः, बालभूषा, तीर्थकल्पलता, कालनिर्णयकौतुकम् , माधवानन्दम् , काशीप्रकाश इत्येवं भूयसी ग्रन्थरचना नन्दपण्डितसकाशादाविर्भूत । परं त्वद्य नन्दपण्डितनाम सर्वत्र यद्धिन्दुनीतिनियमवित्पण्डितमुखेषु नित्यं क्रीडति तद्दत्तकमीमांसाग्रन्थकर्तृत्वेनैवेति मन्ये । ( प्रकृतग्रन्थसंबन्धिस्थूलविषयाणां संक्षेपतः परिचयो दत्तः स प्राक्तनटिप्पण्यां द्रष्टव्यः ) ।

नन्दपण्डितस्तद्वंशजाश्च स्वनाम्नः पूर्वं ' धर्माधिकारी ' इत्युपपदं लापयन्ति । तेन तत्कुले काशीस्था यत्रकुत्राऽपि वा धर्माधिकारिवृत्तिरासीदित्यनुमातुमवकाशोऽस्ति।

प्रकृतपण्डिताधिवासो यद्यपि काशीक्षेत्रे समभूत्तथाऽपि नानादेशनिवासिराजाधिराजसकाशादस्य महतो विदुषो योगक्षेमौ प्रचलितौ स्त इति प्रतीयते । यत्कारणं स्वतः कृतभिन्नभिन्नग्रन्थादौ भिन्नभिन्नराज्ञां नामान्युल्लिख्य तदाश्रयेण ग्रन्थविरचने प्रावर्तिष्यहमित्येवमर्थको वाक्यसंदर्भो व्यलेखि । उदाहरणम्—श्राद्धकल्पलतानामको ग्रन्थः साहराजपुरीयवंशस्थपरमानन्दराजप्रोत्साहनेन, महेन्द्रकुलीयहरिवंशवर्मणो राज्ञः सूचनया स्मृतिसिन्धुः, मदुरास्थितकेशवनायकाज्ञया वैजयन्ती व्यरचीति तेनोल्लिखितम् ।

पृ० प० सा० प्रतीकम्—

९ ३ (३) अपुत्रेणैवेत्येवकारेण पुत्रवतोऽनधिकारो बोधित इति । मानवव्यक्तेर्धार्मिकक्रियानुष्ठानाधिकारविषयिण्यः कल्पना अस्मद्धर्मशास्त्रे पाश्चात्यानामेतद्विषयककल्पनापेक्षयाऽतीव सूक्ष्मा वर्तन्ते । पाश्चात्यशास्त्रज्ञा विवक्षितराष्ट्रान्तर्गतसर्वमानवानां सामान्यतः समानाधिकाराः सन्तीति गृहीतं धरन्ति । तेषां मते निरुक्तसमानाधिकारस्यापवादः—अज्ञानावस्थानतीतवयसः स्त्रीपुरुषाः, अथ च यासां बुद्धिभ्रमः संजातस्तादृश्यो व्यक्तयः । एतादृशानामेव केवलमधिकारा मर्यादिता भवन्ति । वैदिकधर्मशास्त्रानुसारेण बह्वंशेन कर्मस्वरूपानुरूपा अधिकाराणां कक्षा निश्चीयन्ते । विवक्षितगुणयुक्ता एव व्यक्तयो विशिष्टकर्माचरणयोग्या भवन्तीत्येवंप्रकारेण निर्णीता भवन्ति । दत्तकपुत्रग्रहणाधिकारो येऽसंजातपुत्रा मृतपुत्रा वा तेषामेव । अर्थात्तैर्गृहस्थाश्रमिभिर्भाव्यमित्येवं पृथक्प्रतिपादनापेक्षा नास्ति । पुत्रोत्पादनविधिप्रवृत्तिर्हि गृहस्थाश्रमिण्येव युक्तिसहा भवति । ब्रह्मचर्यवानप्रस्थसंन्यासाश्रमिणां पुनर्नैवायं विधिर्विहित इति सुव्यक्तं वर्तते । एवंत्वेऽपि यस्य समग्रायुषि कदाऽपि हि विवाहो नैव संपन्नः, एतादृगपि पुरुषो दत्तकग्रहणे योग्याधिकारीत्याधुनिकन्यायालयैर्निरचायि । ( द्रष्टव्यं—गोपाळ वि० नारायण १२ मुं० ३२९ ) । औरसपुत्राभावे दत्तकः पुत्रप्रतिनिधिर्ग्राह्य इति धर्मशास्त्रानुशासनं वरीवर्ति, अस्य सरलोऽर्थोऽसौ—यत्पुत्रोत्पादनस्य शास्त्रदृष्टाः सर्वे मार्गा यस्य कुण्ठितास्तस्यैवायमधिकार उत्पत्तुं शक्यो न पुत्रोत्पादनमार्गाक्रमणात् प्राक् । तत्राविवाहितपुरुषेण द्वितीयाश्रममास्थाय तत्रत्यपुत्रोत्पादनावश्यकतायाः पारं गन्तुं यावन्न प्रयतितं तावत्तत्र पुत्रग्रहणाधिकारो नाङ्कुरतां प्राप्स्यति । परंतु गृहस्थाश्रमस्वीकृतौ संजातायां सत्यां यदि किंचिद्विशिष्टकारणं स्याच्चेत्तदाऽयमधिकारोऽव्यवहितक्षण एवाङ्कुरितो जायते । उदाहरणम्—कश्चित्पुरुषो विवाहोत्तरक्षण एव रुग्णो भूत्वा मृत्युशय्यां यद्यधिशयीत तदैतस्यां परिस्थितौ पिण्डोदकक्रियावंशनामादिना न लोप्तव्यमित्येतदर्थं तादृशव्यक्तेः पुत्रप्रतिनिधिस्वीकाराधिकारो भवत्येव । आधुनिकराजकीयन्यायालयैस्तु यस्य स्त्री गर्भवती स्यादेतादृशोऽपि पुरुषस्य दत्तकग्रहणाधिकारोऽस्तीति गृहीतं धृतम् । ( हनुमंत वि०, भीमाचार्य १२ मुं० १०५ ) । एतद्विषये न क्वापि स्पष्टं वचनमुपलभ्यते । परंतु शास्त्राशयलौकिकपरिस्थित्योः पर्यवेक्षणेन स्त्रिया गर्भधारणावस्थायां तद्भर्तुरनेनाधिकारेण न भवितव्यमन्यत्र विशिष्टकारणादिति प्रतीयते । तद्वत्कस्यचिदेकाक्येव पुत्रो निरतिशयद्ारि-

मृत्यादिना व्याध्यादिना वा सुतरां संत्रस्यापुनरावृत्तये गृहात्क्वापि नष्टोऽथवा वैराग्यादिना विवाहात्प्रागेव संन्यस्तवानपि वा परित्यक्तप्रपञ्चः सन् व्यावहारिक-विरागी ( बैरागी गोसावी वगैरे ) भूत्वा गृहीतभिक्षादीक्ष आमरणान्तं गोदान-र्मदाप्रदक्षिणादितीर्थयात्राः पर्यटितुं गतः स्यात्तर्हि तस्य पितुर्दत्तकग्रहणाधिकारोऽस्ति । १८७२ संबन्धिविशिष्टविवाहनियमानुसारेण यद्येकाकिना पुत्रेण विवाहो न कृतः स्यात्तर्ह्यपि तस्य पितुः पुत्रग्रहणाधिकारो भवति । ( कलम २६ ) यवनादिधर्मस्वीकारेण स्वर्णस्तेयादिपातकाचरणेन वा यः पातित्यं प्राप्तस्तस्य दत्तको ग्राह्यः स्यात् । परंतु १८५० निर्मितैकविंशतितम( २१ )नियमानुसारेणैतादृशदत्तकपुत्राणां दायभागसंबन्धिनः केचिदधिकारा न लभ्यन्ते । मूकान्धबधिराद्यनंशपुत्राणां सत्त्वे दत्तको ग्रहीतुं शक्यः, परंतु १९२८ संबन्धिद्वादश( १२ ) नियमानुसारेण तेषां ( मूकादीनां ) इतरधनग्रहणाधिकारित्वद्दायाधिकारित्वं कल्पितम् । सत्येवं यदि पित्रा दत्तको गृहीतस्तथाऽपि तादृशदत्तकपुत्रस्य पितृधनीयवंटको न लब्धो भविष्यति । अनंशानां मध्ये ये जन्मत एव जडमूढास्तेषामनधिकारित्वमद्यापि रक्षितम् । तस्माज्जन्मतो जडमूढपुत्राणां सत्त्वे गृहीतस्य दत्तकपुत्रस्य सर्वेऽधिकारा लब्धा भविष्यन्ति । यः पुरुषः स्वत एवान्धमूकत्वादिदोषेणानधिकार्यस्ति तस्य, मिताक्षराकारदायविभागकारयोरभिप्रायानुसारेण दत्तकग्रहणाधिकारो नास्ति । ( या० स्मृ० २ । १४१ श्लो० मिताक्षरा–औरसक्षेत्रजयोर्ग्रहणमितरपुत्रव्युदासार्थम् ) । परमधुनैवोपर्युल्लेखित१९२८संबन्धिद्वादश( १२ )नियमानुसारेणैकं जन्मतो जडपुत्रं वर्जयित्वेतरेषां दायाधिकारित्वस्य कल्पितत्वाज्जडवर्जमन्धादिपुरुषेणौरसाभावे दत्तके गृहीते सति स दत्तको दायग्रहणे पात्रं स्यात् । संप्रति ब्रह्मचर्यावस्थायामपि दत्तकग्रहणाधिकारस्य कल्पितत्वाद्दत्तकप्रतिग्रहीतुर्ब्रह्मचारिणो वयसः षोडशवर्षपर्यन्तत्वेऽपि तदुपयुक्तं स्यात् ( यमुना वि० वामा सुन्दरी ३ इं० अ० ७२ ) । एकस्मिन् प्रसङ्गे द्वादशवर्षपरिमितवयसा स्त्रिया गृहीतो दत्तकपुत्रो मान्यः कृतोऽस्ति ( मन्दाकिनी वि० आदिनाथ १८ कलकत्ता ६९ ) ।

दत्तकग्रहणाधिकारवती व्यक्तिरितरदृष्ट्याऽपि धार्मिकविध्याचरणेऽधिकारिण्यपेक्षिता । कश्चिदेकः पुरुषो महाकुष्ठपीडितः स्याच्चेत्सोऽपि सामान्यतो धर्मकृत्याचरणेऽनधिकार्येव । तद्वद्दत्तकग्रहणेऽप्यनधिकारी । सोऽयमर्थः प्रिव्हीकौन्सिलनामकसर्वोच्चन्यायालयाध्यक्षैरपि मान्यः कृतः ( रमाबाई वि० हरणाबाई ५१ इं० अ० १७७ )। तथाऽपि सर्वोच्चन्यायालयेन तत्रापि सूक्ष्मो विशेषो निष्काशितः–द्विजवच्छूद्रस्य धार्मिकविध्याचरणेऽधिकारित्वाभावात्कुष्ठिशूद्रेण यदि दत्तको गृह्येत तर्हि सोऽपि शास्त्रीयः परिगण्येत ( सुकुमारी वि० अनन्त २८ कलकत्ता १६८ ) ।

एवमितःपर्यन्तमौरसाभावे दत्तकग्रहणे विचारः समजनि । धर्मशास्त्र और-

सेन सहेतरपुत्राणां वर्णनस्य कृतत्वात्कस्यचिदौरसोऽभूत्वा कश्चिद्गौणपुत्रः स्वाभोगाह-शगौणपुत्रवता पुरुषेण दत्तको ग्राह्यो न वेति जिज्ञासायामुच्यते । प्राचीने कालेऽना-थापत्यानां संरक्षणार्थत्वेन प्रायो मुख्यगौणपुत्राणां कल्पनोद्यममगात् । दत्तकस्य गौण-पुत्रत्वात् पुत्रसंख्यामर्यादानियमाभावाच्चौरसे विद्यमानेऽपि क्षेत्रजादिपुत्रैः सह यदि कोऽपि दत्तक ग्रहीतुमुत्सहेत तर्हि तस्य प्रत्यवायं न मन्यन्ते स्म जनाः । मूलग्रन्थे निर्दिष्टं विश्वामित्रोदाहरणं सुतरामत्र मननीयं भवेत् । उत्तरस्मिन्काले यदा गौण-पुत्राणां मध्ये दत्तक एवैक औरसप्रतिनिधित्वेन विज्ञातोऽभूत्तदौरसपुत्रासत्त्वे तदि-तरपुत्रसत्त्वेऽपि दत्तकग्रहणाधिकारसत्त्वं यत्तदतिस्वाभाविकमेव । बहावेवाऽऽधुनिके काले न्यायालयैरौरसाभावे दत्तकाधिकार उपरिनिर्दिष्टवन्मान्यः कृतः । औरसो दत्तकश्च ( केवलं मिथिलादिप्रान्ते कृत्रिमपुत्रः ) एतानुवर्जयित्वा इतरः कोऽपि गौणपुत्रः पुत्रत्वेन नैव मान्यः कृतः । कलिवर्जप्रकरणीयमादित्यपुराणस्थं–' दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ' इत्येवं वचनमस्मिन्निर्णय आधारभूतमप्यस्ति ।

अथान्यदप्येकं मनसि धार्यं तदिदम्—दत्तकविषये विवरणे प्रचलिते सति धर्मशास्त्रकारा एवमेवं विशिष्टगुणयुक्तव्यक्तीनामेवायमधिकारोऽस्तीति प्रतिपादयन्ति । सामान्यतः कस्याश्चिदपि व्यक्तेर्जन्मसिद्धोऽधिकार इति तैर्न क्वापि प्रतिपादितम् । अर्थाद्विशिष्टपरिस्थितिप्राप्तौ शास्त्रोद्दिष्टव्यक्तिभिः पुत्रपरिग्रहः कर्तव्य एव, तद्विना शास्त्रमनुसृतं न स्यात् । एतदनुसृत्यैव च ' अपुत्रेणेत्यपुत्रताया निमित्तता श्रव-णात्पुत्राकरणे प्रत्यवायोऽपि गम्यते । पुत्रोत्पादनविधेर्नित्यतया तल्लोपस्य प्रत्यवाय-निमित्ततापर्यवसानात् ' सोऽयं वाक्यसंदर्भो नन्दपण्डितैः स्वग्रन्थ आरचितः । आधुनिकविचारसरण्यनुसारेणोच्यते चेत्पुत्रपरिग्रहोऽयं विशिष्टव्यक्त्यधिकारस्य विषय इति न मान्यः कृतः किंतु तासां व्यक्तीनां जन्मतः सिद्धाधिकारस्य विषयो भूत्वाऽवस्थितः । तेन तत्तद्व्यक्तिभिः पुत्रपरिग्रहाकरणेऽपि कश्चिद्धर्मातिक्रमः संजात इत्येवं न मन्यन्ते लौकिकाः । जन्मतः सिद्धाधिकारविषयिण्यः कल्पना धर्मशा-स्त्रेण नैव मानिताः । कारणं तादृशाधिकारो यस्यां व्यक्तौ कल्प्यते तव्द्य-क्तीच्छाधीनतया तादृशाधिकारस्य स्वाचरण आनयनं ( हक्काची अंमलबजावणी ) स्थापयितव्यं भवति । धर्मशास्त्रेऽनुष्ठेयत्वेन ये विधयोऽभिहितास्तेषां परिपालनं हि न कर्तुरिच्छामवलम्ब्य वर्तते । अपि तु शास्त्रनिर्दिष्टस्थलकालप्रसङ्गव्यक्तीनामेतेषां सर्वेषां संप्राप्तौ सत्यां शास्त्रप्रोक्तविधेः परिपालनं कर्तव्यमेवेति शास्त्रेणाभिप्रेयते । व्यक्तेः पुनः ' वैकल्पिके आत्मतुष्टिः प्रमाणम् ' अनेन न्यायेन केवलमात्मसंतोषः साधयितुं शक्यः । आधुनिकलोकशालिराज्यपद्धत्यनुसारेण मानवोऽयं बहुवंशैः स्व-तन्त्रो भूत्वा बाह्यव्यवस्थासंरक्षणार्थमतिशयितमेवाल्पेषु कायिकाचारेष्वेतस्यानिर्बन्धं स्वातन्त्र्यमबाधि । अथ च जन्मसिद्धाधिकारस्य प्रदेशोऽतीव विस्तृततां नीतः । धर्मशास्त्रस्य तु मानवानामिहपरलोकीयकल्याणस्य विवक्षितत्वान्न केवलं बाह्याचारा-

णामेवापि तु तेषां मानासिकवाचिककर्मणामपि नियन्त्रणकरणमत्यन्तमावश्यकं भवति । तेन हेतुना कर्मणा चित्तशुद्धिभवमात्प्राङ्मानवैः कर्मप्रदेशे जन्मसिद्धाधिकारा उपभोक्तुं न शक्यन्ते । विशिष्टाधिकारप्राप्तौ सत्यां शास्त्रविहितं विशिष्टं कर्म कर्तव्यमेव । तत्र मनस्तुष्टिर्भवतु मा वेति ।

पृ० प० सा० प्रतीकम् ।

१८ ३ ( ४ ) पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणामिति । भूमिकायां दत्तकप्रतिनिधीकरणहेतूनां या मीमांसा कृता तस्याः सकाशात् कस्याश्चिद्व्यक्तेः पुत्रस्थाने यदि पौत्रः स्यात्तर्ह्यपि तद्व्यक्तेः समाजव्यवस्थायां यत्कर्तव्यं तत्संपन्नमित्यवगन्तुं न कोऽपि प्रतिबन्धः। पुत्रस्थाने पौत्रप्रपौत्रयोः सर्वश्रेष्ठः प्रतिनिधिरिति निर्वृत्तिः ( निवड )कृता धर्मशास्त्रे सर्वत्राऽऽलक्ष्यते । श्राद्धाधिकारिणां मध्ये पुत्राभावे सोऽधिकारः पौत्रप्रपौत्रयोरस्त्येव । दायविभागस्वीकृतावपि तौ स्त एव । नैतावदेव, किंतु कस्यचिद्धनिनः पुत्रत्रयमध्ये द्वितीयस्तृतीयश्चेति द्वौ पुत्रौ निधनं गतौ । तत्र द्वितीयो जीवत्पुत्रस्तृतीयस्तु जीवत्पौत्रः । एवं च धनिन एकः पुत्र एकः पौत्र एकः प्रपौत्रश्च जीवन्वर्तते । तत्र जीवत्पुत्रेण सह पौत्रप्रपौत्रयोरपि समो धनग्रहणाधिकारः । नित्यपार्वणश्राद्धे श्राद्धकर्ता यजमानोऽयं स्वपितृत्रयीमुद्दिश्य श्राद्धं करोति । अर्थादेकसमयावच्छेदेन पितृपितामहप्रपितामहेभ्यः पूर्णपिण्डदानाधिकारो व्यक्तेर्वर्तते । एतस्य मुख्यं कारणं प्राचामार्याणां दीर्घतरजीवितकालेनाऽऽधारितं भवेदिति भाति । प्रपौत्रो यावता कालेन ज्ञानदशां प्राप्य कुलधर्मकुलाचाराञ्जानीयात्तावन्तं कालं तत्प्रपितामहेन जीवदवस्थेन भाव्यम् । शक्यं चेदं जीवदवस्थानम् । तस्मादेतावतीनां प्राक्तनीनां वंशपीठिकानां श्राद्धकर्तुर्यजमानस्य साक्षात्स्मृतिसत्त्वेन पार्वणश्राद्धे निरुक्तपितृत्रय्युद्देशेन पुत्रं प्रति पिण्डदानविधिः पुत्रेण सह पौत्रप्रपौत्रयोरपि पिण्डदानविधौ कर्तृत्वेन योजनं च कृतं स्यादिति भाति । अर्थाद्यस्य पौत्रः प्रपौत्रो वा जीवन् स्यात् पुत्रस्तु जीवन्न स्यात्तथाऽपि पितामहप्रपितामहयोर्दत्तकग्रहणाधिकारेण न भवितव्यमित्योर्थेनैवाऽऽयाति ।

पृ० प० सा० प्रतीकम्

१९ १ ( ५ ) अपुत्रेणेति पुंस्त्वश्रवणान्न स्त्रिया अधिकार इति गम्यते । अत एव वसिष्ठः—' न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः ' इति । अनेन विधवाया भर्त्रनुज्ञानासंभवादनधिकारो गम्यत इति । तदिदं दत्तकसंबन्धि नन्दपण्डितमतमाधुनिकन्यायालयैस्तु नैव मानितम् । परंतु प्राचीनैः कतिपयैष्टीकाकारैर्भाष्यकारैरपि न स्वीकृतम् । स्त्रियाः पुत्रग्रहणाधिकारप्राप्तौ तद्भर्त्रनुज्ञाऽऽवश्यकी । विधवानां स्त्रीणां भर्त्रभावेनेयमनुज्ञाप्राप्तिर्दुर्घटा । सधवा स्त्री भर्त्राऽनुज्ञा दत्ता स्याच्चेदमन्त्रकं परिग्रहहोमादिविधिं कृत्वा दत्तकं ग्रहीतुं शक्नुयादित्येवं नन्दपण्डितमतम् । एतस्माद्विवरणात्पुत्रपरिग्रहानुज्ञा भर्त्रा पुत्रपरिग्रहसमय एव दत्ता सती

स्त्रियास्ताहृशाधिकारप्राप्तिर्भवतीत्येवं नन्दपण्डिताभिप्राय आलक्ष्यते । परमेतद्व्यतिरिक्ताः कतिपयेऽपि विद्वट्टीकाकारा इयमनुज्ञा भर्त्रा स्वमरणात्प्राग्दीयेताथ च तदनुसारेण पतिमरणोत्तरं तया स्त्रिया दत्तको गृह्यते चेत्स शास्त्रशुद्ध एवेत्यलेखिषुः । एतदनुसारेणैव काशीबङ्गालप्रान्तस्थितन्यायमन्दिरैर्विधवां प्रति स्वमरणात्प्राक् तद्भर्त्रा पुत्रग्रहणानुज्ञायां दत्तायां तदाज्ञामनुसृत्य तया दत्तको गृहीतश्चेत्स राजकीयनियमानुरीति निर्णयो दत्तः ( तुलसीराम वि० बिहारीलाल १२ अ० ३२८ ) । अ० इत्यस्य अहलाबाद इत्यर्थो ज्ञेयः ।

भर्त्रा दत्ताया अनुज्ञाया उपयोगो विधवयैव कर्तव्यो भवति, तस्याः स्थाने तदनुज्ञयाऽप्यन्येन केनापि दत्तको नैव ग्राह्यो भवति ( लक्ष्मीबाई वि० रामचन्द्र २२ मुंबई ५९० ) । लब्धानुज्ञया स्त्रियाऽमुष्मिन्नमुष्मिन्नित्येवं मर्यादितकाल एव दत्तको ग्राह्य इत्येवं निर्बन्धं तदुपर्यारोपयितुं न कोऽपि शक्नुयात् । तया स्वेच्छया कदाऽपि दत्तको ग्राह्यः ( मुत्रुद्दीलाल वि० कुन्दनलाल ३३ इं० अ० ५५ ) । भर्तृदयाऽनुज्ञा लेखतो मुखतो वा यथा कथा च भवतु तथाऽपि सा राजकीयनियमानुसारिण्येवेति निरुक्तनिर्णयप्रसङ्गे निरचायि । अनुज्ञादानसमये भर्त्रा योग्या ये केचनापि निर्बन्धाः स्वेच्छया ग्राहयितव्याः । तादृशनिर्बन्धपरिपालनेनैव विधवया दत्तको ग्रहीतुं शक्यो न निर्बन्धबाधेन ( वेलकी वि० वेङ्कटराम ४ इं० अ० १ ) । कारणं स्वभर्तुः सर्वेच्छानां यावच्छक्यं परिपालनं हिन्दुविधवाया धर्म इत्येवं मान्यतया गृहीतं धृतम् ( सीताबाई वि० बापू ४७ इं० अ० २०२ ) । एकापेक्षयाऽधिकानां विधवानां जीवनदशायां ययाऽनुज्ञा लब्धा तस्या एव दत्तग्रहणाधिकारः । यदि तु सर्वासामेवानुज्ञा दत्ता स्याच्चेत्प्रथमतो ज्येष्ठस्त्रियाः सोऽधिकारः । ज्येष्ठा च दत्तकं नेच्छति चेत्कनिष्ठविधवायास्तादृशाधिकारः प्राप्नुयात् ( मन्दाकिनी वि० आदिनाथ १८ कलकत्ता ६९ ) । ज्येष्ठविधवायां मृतायां कनिष्ठविधवाया दत्तकग्रहणे प्रतिबन्धो न । तथा ज्येष्ठविधवाऽनीतिमती स्याच्चेदर्थादेव कनिष्ठविधवाया अधिकारोऽस्त्येव ( पद्माजीराव वि० रामराव १३ मुंबई १६० ) । कारणं भर्तृमरणानन्तरमपि सा स्त्री स्वभर्तरि एकनिष्ठा स्याच्चेदेव भर्त्रा क्रियमाणानि धर्मकृत्यान्याचरितुं दत्तकग्रहणे तस्या अधिकारोऽस्तीत्येवं मान्यं कृतमस्ति ।

मद्रासप्रदेशे स्मृतिचन्द्रिकापराशरमाधवीयेत्यादयो ग्रन्थाः प्रमाणत्वेन गृह्यन्ते । तेषु ग्रन्थेषु वसिष्ठवचनस्थभर्तृशब्दस्य ‘ रक्षणकर्ता पालनकर्ता ’ इत्येवमर्थो गृहीतः । तेन विधवाया भर्त्रभावे यः पालनकर्ता श्वशुरो देवरो वाऽन्यः कोऽपि भर्तृकुटुम्बान्तर्गतः कर्ता पुरुषो वा स्यात्तदनुज्ञया विधवया दत्तको ग्रहीतुं शक्य इत्येवं निर्णयस्तद्देशीयन्यायालयैर्दत्तोऽस्ति ( मदुराकलेक्टर वि० मुदुरामलिंग १२ मू० इं० अ० ३९७ ) । कश्चिदेकः पुरुषः स्वजीवनदशायां सगोत्रसपिण्डैः सहैक-

त्रकुटुम्बनिवासी सन् मृतश्चेत्तद्भार्यया तत्कुटुम्बवर्तिनः कर्तुः पुरुषस्याऽऽज्ञया दत्तकः स्वीकार्यः । यदि तु सगोत्रसपिण्डेभ्यो विभक्तत्वेन निवसन् मृतश्चेत्तर्ह्यपि तद्भार्यया स्वभर्तुः सगोत्रसपिण्डानां विद्यमानानामनुज्ञया दत्तकः स्वीकर्तव्य इत्येवं मद्रासप्रदेशस्थन्यायालयैर्निश्चितम् ( अ० कृष्णय्या वि० अ० लक्ष्मीपति ४७ इं० अ० ९९ ) । एवं प्रकारेण विधवाया दत्तकग्रहणाधिकारस्य सगोत्रीयस्वसंबन्धिश्वशुराद्यनुज्ञासापेक्षत्वेन यदि केनचिद्देवरादिसंबन्धिना मनसि कंचिद्धेतुमनुसंधाय ( यद्यीयं भ्रातृजाया पुत्रग्रहणं विनैव म्रियेत तर्हि तद्भर्तुर्धनमहं लभेयेत्येवमनुसंधाय ) अनुज्ञां न दद्यात्तर्हि तत्सगोत्रीयसंबन्धिनाऽन्येन केनाप्यनुज्ञा धर्मबुद्ध्या दीयेत चेत्तावताऽपि विधवाया दत्तकग्रहणाधिकारः प्राप्नोतीत्येवं नियमनिश्चितिकरणं सुतरामावश्यकं संजातम् ( व्यंकटकृष्णम्मा वि० अन्नपूर्णम्मा २३ मद्रास ४८६ ) । यदा तु सगोत्रीयः स्वसंबन्धी कोऽपि जीवन् न स्यात्तदाऽसगोत्रः सन्नपि सपिण्डो यः स्वसंबन्धी तदनुज्ञया विधवया दत्तको ग्रहीतुं शक्यः ( केसरसिंग वि० सेक्रेटरी ऑफस्टेट, ४९ मद्रास ६५२ । बालसुब्रह्मण्य वि० सुब्बय्या ६५ इ० अ० ९३ ) । एतद्वद् येन स्वसंबन्धिनाऽनुज्ञा दत्ता स दत्तकग्रहणात्प्राङ् मृतश्चेदपि विधवया राजकीयनियमानुसारी दत्तको ग्रहीतुं शक्यते, किंतु दत्तकग्रहणविषये तया विधवया विना कारणं कालविलम्बो न कृत इति सिध्येच्चेत ( अन्नपूर्णम्मा वि० अप्पय्या ५२ मद्रास ६२० ) । अनया रीत्या कस्याश्चिदेकस्या विधवाया औरसपुत्रः स्यात्तेन च स्वमरणानन्तरं दत्तको ग्राह्य एवमनुज्ञां स्वमात्रे दत्त्वा पश्चात्स मृतस्तर्हि तादृशविधवयाऽन्यस्य कस्याप्यनुज्ञामनपेक्ष्यैव दत्तको ग्राह्यः । स च राजकीयनियमानुसारी भवतीत्येवं निर्णय उपरिनिर्दिष्ट ( अन्नपूर्णम्मा वि० अप्पय्या ५२ मद्रास ६२० ) इति विवादोत्तरदानसमयेऽदायि । एकदा दत्ताऽनुज्ञा तादृक्किंचिन्महत्कारणं विना प्रत्यादातुं नव शक्या ( शिवसूर्यनारायण वि० आदिनारायण [ १९२७ ] मद्रास ३४७ ) । परंतु याऽसावनुज्ञा स्वार्थबुद्ध्या प्रेरितो भूत्वा दत्ता स्यादथवा तस्याः सकाशाद्धनादिग्रहणेन दीयेत तादृशानुज्ञानुसारेण गृहीतो दत्तकोऽशास्त्रीयो राजकीयनियमाननुसारी एव ( बेकायदेशीर ) निश्चीयताम् ( गणेश वि० गोपाळ ७ इं० अ० १७३ ) ।

मुम्बापुरीनागपूरप्रभृतिप्रदेशमध्ये तु मद्रासप्रान्तापेक्षयाऽपि विधवाया दत्तकग्रहणाधिकारमर्यादाऽतिविस्तृता वर्तते । सत्येऽवलोकिते तु निर्णयसिन्धुधर्मसिन्धुव्यवहारमयूखमिताक्षरयो ये ग्रन्था एतस्मिन् प्रान्ते मान्याः संजाताः सन्ति तेषु स्त्रीणां सर्वसाधारणाः पारतन्त्र्यविषयका विचाराः, स्वेतरप्रान्तीयमान्यग्रन्थकारविचारवदेव सन्ति । अर्थात्कौमारे पिता, यौवने भर्ता, वार्धके पुत्रः, एतेषामभावे तत्कुटुम्बवर्ती

अथवा तज्ज्ञातीयो वयोवृद्धः पुरुषः, एते स्त्रियाः पालनकर्तारः सन्ति, सेयं व्यवस्थोपर्युद्धृतग्रन्थेष्वपि प्रथिताऽस्ति । सत्येवं यस्याः पतिर्जीवनदशायां स्वबान्धवेभ्यः पृथङ्न्यवात्सीत्तादृशविधवायाः स्वसंबन्धिदेवरादिबान्धवानामनुज्ञां विनैव दत्तको ग्राह्यो भवेदिति मोहमयीमहान्यायालयाध्यक्षेण निर्णयो दत्तः ( रखमाबाई वि० राधाबाई ५ मुं० हा० कौ० ( अ० ) १८१ ) । सोऽसौ निर्णयः, व्यवहारमयूखस्य स्खलितभाषान्तरादुन्नीतत्वेनार्थात्स्खलित आसीत् । परंतु यस्या विधवायाः पतिः स्वजीवनदशायां स्वबन्धुभिः सहैकत्रकुटुम्बे निवसति स्म तादृशविधवायास्तन्मरणोत्तरं दत्तकजिघृक्षायां सत्यामविभक्तसपिण्डादिबान्धवानां संमतिमन्तरेण तद्ग्रहणमशक्यमिति निर्णयो मोहमयीमहान्यायालयेन तदनन्तरं कृतः ( रामजी वि० घमाऊ ६ मुं० ४९८ ) । अस्मान्निर्णयादेतन्निश्चीयते—यदेककुटुम्बवर्तिनी विधवा स्त्री तु दत्तकग्रहणविषये पारतन्त्र्यवती । तस्याः श्वशुरस्य देवरस्य वाऽनुमतिमन्तरेण तृतीयः कश्चिदसंबन्धी पुत्रः सपिण्डत्वेन स्वकुले प्रवेशयितुं न शक्य इति । परं 'प्रिव्हीकौन्सिल' इत्याख्यसर्वश्रेष्ठन्यायालयस्य मोहमयीन्यायालयकृतोऽयं निर्णयो नातोचितेति कृत्वेदानीं तेन सर्वश्रेष्ठन्यायमन्दिराध्यक्षेणैवं नियमोऽकारि यन्मोहमयीप्रदेशेऽथवा नागपुरप्रदेशे कृतवसतिर्विधवा विभक्ता वाऽविभक्ता वा कथमप्यस्तु तस्याः कस्याप्यनुमतिमन्तरेणव दत्तकग्रहणे पूर्णं स्वातन्त्र्यं वर्तते [ भीमाबाई वि० गुरुनाथगौडा ६० इं० अ० २५ ] । अथ कस्याश्चित्पत्यौ जीवति सति तेन यदि स्वस्त्रीं प्रति दत्तको नैव त्वया ग्राह्य इति निर्बन्धः स्वमरणसमये कृतः स्याच्चेत्तर्ह्येव *तस्याः स्त्रिया दत्तकग्रहणविषयकं स्वातन्त्र्यं संकुचितं भवितुं* शक्यते नान्येन केनापि ।

नन्दपण्डितवचनानुसारेण केवलं मिथिलाप्रदेशे तराईविभागे च विधवाया दत्तकपुत्रग्रहणविषये सर्वथाऽधिकारो नास्तीत्येवं न्यायमन्दिरेऽपि मान्यं जातमस्ति । उपरितनविचारचर्चायां ये प्रान्ता नोल्लिखितास्तादृशप्रान्तगतविधवाया दत्तकग्रहणाधिकाराः स्थलवैशिष्ट्येनाथवा प्रान्तवैशिष्ट्येन रूढ्यनुसारेण निश्चिता भवन्ति । इतःपर्यन्तं भिन्नभिन्नप्रान्तेषु संजातनिर्णयानुसारेण विधवाया दत्तकग्रहणाधिकारश्चर्चितः । अधुना विधवाया दत्तकग्रहणाधिकारे सति कुतः पर्यन्तं सा स्त्री तमधिकारमुपयोक्तुं शक्नुयादिति निरीक्षणीयं भवति । एतत्प्रश्नसंबन्धेन न्यायमन्दिरगतविवादनिर्णयेष्वद्यपर्यन्तमेकवाक्यता नाऽऽसीत् । केचिदित्थं प्रतिपादयन्ति—यत्पतिः स्वबन्धुभ्यो विभक्तः सन्मृतः, अथ च तत्संपादितं धनं ( धनग्रहणाधिकारानुसारेण ) तद्भार्यायत्तं चेत्तर्ह्येव तस्या दत्तकग्रहणाधिकारः समस्तीति मन्तव्यम् । यदि च तद्धनं तदधिकारानुरोधाद् भार्याव्यतिरेकेणान्यस्य कस्याप्यायत्तं चेत्संजातं तर्हि तथा स्त्रियास्तादृशाधिकारो नास्तीति मन्तव्यं भवति, [ *भुवनमयी वि० रामकिशोर १० मुं० इं० अ० २७९* ] । एतदाशयानुसारं

बहून् दिवसान् न्यायमन्दिरेषु निर्णया भवन्त आसन् । किंतु सांप्रतं धनग्रहणाधिकारप्राप्तिरितीदं दत्तकग्रहणाधिकारलब्धौ योग्यं कारणमित्येवं यद्विज्ञायते तन्म-हत्स्खलितमित्यमानि [ अमरेन्द्र वि० सनातन ६० इं० अ० २४२ ] । तस्मिन्नेव निर्णय एवं निरचायि–पत्यनुज्ञानुसारेण विधवया दत्तको गृहीतः सोऽपि च स्वपत्नीं स्वपुत्रं वाऽवशेष्य मृतः । परिग्रहीत्री माताऽवशिष्टैव । एतस्यां परिस्थितौ तादृशमातुस्तद्भर्त्रा यद्यपि दत्तकग्रहणाधिकारो दत्त आसीत्तथाऽपि तादृशाधिकारानुसारेण तया मात्रा दत्तको ग्रहीतुं न शक्यते । कारणं निरुक्तपरिस्थितौ तस्या अधिकारः सर्वात्मना निवृत्तो भवतीति [ रामकृष्ण वि० शामराव २६ मुं० ५२६ ] ।

| पृ० | प० | सा० प्रतीकम् । |
|---|---|---|
| २५ | २ | [६] न द्वाभ्यां त्रिभिर्वैकः पुत्रः कर्तव्य इति । |
| २६ | ३ | [७] द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः । |

गोत्रद्वयेऽप्यनुद्वाहः शौङ्गशैशिरयोर्यथा ॥ इति ।

तदेतत्प्रतीकद्वयसंबन्धनकटिप्पणीलेखनमेव श्रेयस्करम् । ग्रन्थकारस्यायमभिप्रायः–अपुत्रेणेत्येकवचनान्तशब्देन गृह्यमाणस्यैकस्य पुत्रस्य परिग्रहीताऽप्येक एव विवक्षितो न द्वौ त्रयो वेति । द्व्यामुष्यायणस्य जनकपरिग्रहीतृभेदेन द्वौ पितरौ भवितुं शक्नुतः । परं त्वेकस्य दत्तकपुत्रस्य प्रतिग्रहीतृपितृद्वयं नो भवितुं शक्नोति । सोऽयमर्थो मञ्जरीटीकायां विशदीभूत एव । न्यायालयैरपि यो ह्येकदा यस्य दत्तकपुत्रत्वं स्वीकृतवान्सोऽन्यस्य कस्यापि दत्तकपुत्रत्वमङ्गीकर्तुं समर्थो नैव भवतीत्येवं निरचायि । तथैवैकस्यामेव वेलायां द्वौ पुरुषावेकं पुत्रं दत्तकं ग्रहीतुं नो शक्नुतः । यदि तु तेन प्रकारेण दत्तकग्रहणं कावपि कुर्यातां तर्हि तदशास्त्रीयं भवेदिति कृत्वा तन्नैव जातमिति मन्यं क्रियेत [ राजकुमार वि० विश्वेश्वर १० कलकत्ता ६८८ ] । तथैवैकेनैव पुरुषेणैकस्मिन्नेव समय एकापेक्षयाऽधिकाः पुत्रा दत्तकत्वेन गृहीताश्चेत्ते सर्वेऽप्यशास्त्रीयत्वान्निषिद्धाः क्रियन्ते [ अक्षयचन्द्र वि० कल्पहार १२ कलकत्ता ४०६ ] । एवंत्वेऽपि शास्त्रवचनमनुसृत्य द्व्यामुष्यायणस्यास्तित्वं न्यायालयैरपि मानितम् । आवयोरयं पुत्र इति पणबन्धं कृत्वा जनकेन प्रतिग्रहीत्रे स्वपुत्रो विधिना दीयते चेत्स उभयोरपि पुत्रो भवितुं शक्नोति अथ चोभयकुले दायग्रहणाधिकारास्तस्य लभ्यन्ते [ उमा वि० गोकुलानन्द ३ कलकत्ता ५८७, कृष्ण वि० परमश्री २५ मुंबई ५२७ ] । केषुचिदाङ्ग्लग्रन्थेषु यदा जनकपिता स्वस्यैककं पुत्रं स्वस्यैव भ्रात्रे ददाति तदा आवयोरयं पुत्र इत्युभयोर्मध्ये पणबन्धाभावेऽपि स उभयोः पुत्रोऽर्थाद्व्यामुष्यायणो विज्ञेय इत्येवं गृहीतमभूत् किंतु मुंबईमहान्यायालयेनतान्ग्रन्थानमान्यान् कृत्वा एवं निश्चितम्–दत्तकग्रहणात्प्रागथवा दत्तकग्रहणसमय आवयोरयं पुत्र इति जनकप्रतिग्रहीत्रोः पणबन्धो जातोऽभूदिति सिद्धे

जाते सत्येव स जनकप्रतिग्रहीत्रोरुभयोः पुत्रः—द्व्यामुष्यायणो भवितुमर्हति नान्यथा । अन्यथा तु परिग्रहीतुरेव स पुत्रो न जनकपितुरिति [ लक्ष्मीपतिराव वि० व्यंकटेश ४१ मुंबई ३१५ ) ।

| पृ० | प० | सा० प्रतीकम् । |
|---|---|---|
| २६ | ६ | [८] प्रतिनिधिश्चक्षेत्रजादिरेकादशविध इति । |
| ४० | ३ | [९] तत्रापि कलौ—अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः । न शक्यास्तेऽधुना कर्तुं शक्तिहीनतया नरैः, इति । |

एतत्प्रतीकद्वयस्य व्याख्यानमेकस्यामेव टिप्पन्यां बोध्यम् । औरसपुत्राभावे कः प्रतिनिधीभवितुमर्हतीत्येतद्विवेचनं भूमिकायां १० पृष्ठे द्रष्टव्यम् । औरसपुत्राभावे तत्स्थाने पिण्डोदकाद्यर्थं शास्त्रोक्तप्रयत्नतो यः पुत्रो निर्मीयते स मुख्यः पुत्रप्रतिनिधिः । तादृशस्याभावे पालितः पुत्र औरसस्थाने केऽप्यंशैरर्हो विज्ञायते । मातापितृभ्यां जन्मत एव परित्यक्तयोः कन्यापुत्रयोः रक्षणसंवर्धनकर्तव्यताधर्मशास्त्रेण यस्मिन्नुसमर्पिता स पालनादेव तयोः पिता स्मर्यते तौ च कन्यापुत्रौ तस्य पालितकन्यापुत्रौ भण्येते । अर्थादौरसमुख्यप्रतिनिध्योरभावे तत्स्थानं प्राप्तः पालितपुत्रः कतिपयैरंशैस्तयोः कर्तव्यं निर्वहेदिति सत्यम् । अत एव—एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् । ( म० स्मृ० ९ । १६३ ) उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः सुताः । सवर्णाः, असवर्णास्तु ग्रासाच्छादनभागिनः । ( कात्यायनः । इत्यादिवचनानि संगच्छन्ते । औरसाभावे दे जपुत्रिकापुत्रिकापुत्रदत्तकक्रृत्रिमपुत्राणां स्थानं भिन्नभिन्नेषु कालेषु प्रदेशेषु वा औरससममेवाऽऽसीदित्यत्र न संशयः । कारणमौरसाभावे गृहस्थाश्रमधर्माणां परिपालनं भवत्वित्येतदर्थं धार्मिकविधिनैते पुत्रा निर्मीयन्ते । भूमिकायां प्रदर्शितवद्दत्तकक्रृत्रिमौ वर्जयित्वाऽन्येषां क्षेत्रजपुत्रिकापुत्रिकापुत्राणां निर्माणपद्धतयः सांप्रतमलुप्तन् । आदित्यवचनानुसारेण दत्तकमन्तरेणेतरगौणपुत्रनिर्माणं कलियुगेऽधर्म्यमेव । न्यायालयैरपि औरसप्रतिनिधित्वाधिकारो दत्तकस्यैवेत्यमानि । परंतु मिथिलाप्रदेशे कृत्रिमपुत्रस्य मलबारप्रान्ते पुत्रिकापुत्रिकापुत्रयोश्चास्तित्वं न्यायालयैर्गृहीतम् ।

| पृष्ठम् | पङ्क्तिः | साङ्कं प्रतीकम् |
|---|---|---|
| ४० | ८ | (१०) दत्तपदं कृत्रिमस्याप्युपलक्षणमिति । आदित्यपुराणे—दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः । इति दत्तकं वर्जयित्वेतरेषां प्रतिनिधिपुत्राणां स्पष्टं निषेधे कृतेऽपि नन्दपण्डितैः प्रतिनिधित्वेन कृत्रिमपुत्रस्वीकारे मान्यता प्रदर्शिता, एतत्कारणं बहुधा तेषां जीवनकाले कृत्रिमपुत्रस्वीकरणरूढ्या बलवत्या मान्यतां प्राप्तया च भवितव्यमिति । यदा च मिथिलाप्रान्त इंग्रजायत्ततां गतस्तदा तत्रत्यन्यायालयानामपि कृत्रिमपुत्रस्वीकृतिरूढेः सार्वत्रिक्याः प्रचलितत्वं दृष्टिपथमगमत् । औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः, इत्येवं पराशरवचनस्य नन्दपण्डितैराधारं कृत्वा |

कृत्रिमपुत्रस्वीकरणं स्वमान्यता प्रदर्शिता । परंतु तद्वचने निर्दिष्टस्य क्षेत्रजस्य तु मान्यता तैर्दापिता नाभूत् । विकल्पाष्टदोषापत्तिर्माभूदिति क्षेत्रजो मान्यीकर्तुं नार्हति, इत्येवं तत्र कारणं प्रदर्शितम् । परंतु तुल्यन्यायादियं विकल्पाष्टदोषापत्तिः कृत्रिमपुत्रमान्यीकरणेनाप्यायात्येव । कारणं दत्तौरसेत्यत्र दत्तपदार्थे यावत्या योग्यरीत्या कृत्रिमपुत्रोऽन्तर्भाव्यते तावत्या योग्यरीत्या औरसपदार्थे क्षेत्रजोऽन्तर्भावयितुं शक्यः । सोऽयमर्थः स्वयं मूलकारेणैव क्षेत्रजशब्दस्य औरस इत्यर्थकरणेनाप्रत्यक्षरीत्या प्रदर्शितः । तथाऽपि नियोगविधिना क्षेत्रजोत्पादनपद्धतेः सर्वात्मना विलयं गतत्वेन नियोगविधिनिषेधकानामार्षवचनानां धर्मग्रन्थे बहुश उपलभ्यमानत्वेन च निरुक्तपराशरवचनव्यवस्था क्षेत्रे जातः क्षेत्रज इति केवलयोगेन क्षेत्रजशब्द औरसविशेषणमित्येवंप्रकारेण लापयितव्याऽभूत् । आस्ताम् ।

न्यायालयैर्मिथिलाप्रदेशे कृत्रिमपुत्रस्वीकरणरूढिर्ग्राह्यत्वेन मान्यीकृतेत्युक्तं तत्संबन्धेनाग्रिमाः केचन निर्बन्धा गनीरा संनिधातव्या भवन्ति । ( १ ). यः पुत्रः कृत्रिमपुत्रत्वेन स्वीकरणीयस्तस्य पुत्रस्य स्वतस्त्वेनास्मिन्विधौ संमतिरपेक्षितव्या, अर्वाचीन पुत्रेण यादृश्यामवस्थायां विशेषतो विधिसमये स्वसंमतिं दातुं प्रभूयेतैतादृशीं महतीं वयोवस्थां दधानेन भाव्यम् । तत्संमतिर्धर्मशास्त्रीयवचनादप्यावश्यकयालक्ष्यते । यतः सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् । पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः । ( म० स्मृ० ९ । १६ ) एतन्मनुवचनस्थगुणदोषविचक्षणमितिपदेन स गुणदोषान् विवेक्तुं शक्नुयादित्येवं वयसा महानपेक्षित इति स्पष्टं भवति । ( २ ) तथा स्वीकरणीयकृत्रिमपुत्रेण परिग्रहीतृपितृसजातीयेनैव भाव्यम् । अयमप्यर्थो धर्मशास्त्राभिप्रेतः सजातीयष्वयं प्रोक्तस्तनयेषु मया विधिः ( या० स्मृ० २ । १३३ ) तदिदं याज्ञवल्क्यवचनं द्रष्टव्यम् । ( ३ ) कृत्रिमपुत्रोऽयं पत्या तत्पत्न्या चेति द्वाभ्यामपि ग्रहीतुं शक्यः । भर्त्रैकः पुत्रो गृहीतस्तर्हि तत्पत्न्या स्वातन्त्र्येण द्वितीयः पुत्रः स्वीकर्तुं शक्यः । परंतु दत्तकपुत्रवत्पत्न्याः स्वभर्त्रर्थं तदनुज्ञास्याच्चेदपि कृत्रिमपुत्रस्वीकरणेऽधिकारो नास्ति । उपरितनपञ्चमाङ्कीयटिप्पन्यां निर्दिष्टवन्मिथिलाविभागे नन्दपण्डितमतानुसारेण विधवाया दत्तकग्रहणाधिरो नास्तीति न्यायालयैरपि मान्यमकारि । परं मिथिलाविभागे विधवाया दत्तकग्रहणाधिकाराभावे सति तस्य स्थाने कृत्रिमपुत्रस्वीकाराधिकारोऽस्तीति संमानितमस्ति । ( ४ ) कृत्रिमपुत्रस्य जनककुले दायाधिकार औरसपुत्रवदेवास्ति । तस्य कृत्रिमकुले तु येन पुरुषेण तस्य पुत्रत्वेन स्वीकारः कृतः तस्यैव पुरुषस्य यद्धनं तादृशधनसंबन्धेनैव कृत्रिमपुत्रस्य दायाधिकारोऽस्ति । ( ५ ) कृत्रिमपुत्रग्रहणसमये कीदृशोऽपि धार्मिकविधिरथवा समारम्भो राजकीयनियमदृष्ट्या कर्तुं नापेक्ष्यते । एतद्विषये तु नन्दपण्डितमतस्य न्यायालयैर्मान्यता नादायि । दत्तकमीमांसायामग्रे नन्दपण्डिता एवं लिखन्ति—' दत्ताद्या इत्याद्यपदेन

कृत्रिमादीनां ग्रहणमित्युक्तमेव । तेषामपि संस्कारैरेव पुत्रत्वम् ' इति । तस्माद्दत्तको वाऽस्तु कृत्रिमो वा भवतु तयोः पुत्रत्वोत्पादनार्थं केचन विशिष्टसंस्कारा भवितुमावश्यकाः । तेभ्य ऋते तत्र पुत्रत्वं नैवोत्पद्यतेत्येवमभिप्रायः सर्वधर्मशास्त्रकाराणामस्ति । यद्यपि दत्तकविषये केचन धार्मिकविधयो न्यायालयैरावश्यकां अमानिषत तथाऽपि - कृत्रिमपुत्रविषये कीदृशस्यापि विधेरावश्यकता नास्तीति स्पष्टं तेषामभिप्रायोऽस्ति । तेन संप्रति मिथिलाप्रदेशे यदि कस्यापि कृत्रिमपुत्रः स्वीकार्यः स्याच्चेद धार्मिकं वा लौकिकं वा कीदृशमपि विधिं विनैव कृत्रिमपुत्रो ग्रहीतुं शक्यः । स च राजनियमानुसारी भवति । संस्काराणामावश्यकत्वे त्रयोविंशाङ्कगतटिप्पनी द्रष्टव्या ।

पृ० प० सा० प्रतीकम्

४१ ५ (११) तत्र क इत्याह शौनक इति । आधुनिकन्यायालयेषु यदा दत्तकसंबन्धेन प्रश्ना उपतिष्ठन्ते तदा तदन्तर्गतानां मुख्यतः पञ्चानां प्रश्नाना विचारः करणीयो भवति । ( १ ) दत्तकग्रहणे को वाऽधिकारी ? ( २ ) दत्तकः केन देयः ? ( ३ ) को वा दत्तको भवितुमर्हति ? ( ४ ) दत्तकग्रहणसमये के के धार्मिकविधय आवश्यकाः ? ( ५ ) दत्तविधाने राजकीयनियमानुसारीति निश्चिते जाते सति जनकपालककुलीयद्रव्यसंबन्धिनस्तस्य तदितरेषां वा कोऽत्र अधिकारः ? इति । नन्दपण्डितैः स्वग्रन्थेऽनेन क्रमेण विषयाः प्रत्यपादिषत । ( १ ) दत्तकः केन ग्राह्यः ? ( २ ) दत्तकावश्यकता । ( ३ ) व्यामुष्यायणः । ( ४ ) कृत्रिमपुत्रः । ( ५ ) दत्तकः कीदृशो ग्राह्यः ? ( ६ ) पुत्रदानाधिकारिणः के ? ( ७ ) दत्तकत्वेन ग्राह्यपुत्रस्य वयसा किंत्परिमितेन भाव्यम् ? तस्य कीदृशाः संस्काराः प्रतिग्रहीतृपितृहस्तेनेव भवितुमावश्यकाः ? ( ८ ) दत्तकविधानसंबन्धिन आवश्यका धार्मिकविधयः, ( ९ ) विरुद्धसंबन्धः, ( १० ) संस्कारैः पुत्रत्वम्, ( ११ ) दत्तकस्य धनग्रहणाधिकारः, ( १२ ) दत्तकसापिण्ड्यनिर्णय, व्यामुष्यायणसापिण्ड्यनिर्णयः, ( १३ ) दत्तकदुहिता, क्षेत्रजादिदुहितरश्च, ( १४ ) दत्तकाशौचनिर्णयः, ( १५ ) औरसे सति दत्तकस्य द्रव्याधिकारः, इति । उपर्युक्तविषयानुक्रमादेवं मनस्यायास्यति–यदेतद्ग्रन्थे ( १ ) ( ५ ) ( ६ ) ( ७ ) ( ८ ) ( ९ ) ( १० ) ( ११ ) ( १५ ) एतदङ्कनिर्दिष्टा विषया अद्य न्यायालयेषु मुख्यतश्चर्च्यन्ते । ( ३ ) ( ४ ) एतदङ्कनिर्दिष्टा विषयाः कदा कदा न्यायालयेषूत्पत्तुं शक्नुवन्ति । सापिण्ड्यनिर्णयसंबन्धी प्रश्नः कदाचिद्विवाहविषय उपस्थितो भवेत् । परंत्वाशौचनिर्णयदत्तकदुहितृक्षेत्रजादिदुहितृसंबन्धिनां प्रश्नानामुत्पत्तौ मार्ग एव नास्ति । यः कोऽपि प्रश्नो न्यायालयपुरतः समागच्छति तन्मूलप्रदेशे धनग्रहणसंबन्धी कश्चन विवादोऽवतिष्ठत एव । आशौचादयः प्रश्ना ये केवलं धार्मिकस्वरूपमधिप्राप्तास्तेषां विचारं कर्तुं न्यायालया नैव प्रवर्तन्ते । अस्तु, एवमुपोद्घातात्

नन्तरं प्रकृतविषये मनःप्रवृत्तिः क्रियते । दत्तकः केन ग्राह्य इत्येतद्विषये न्याया-लयेषु ये निर्णया जाताः सन्ति तत्संबन्धी विचारः ( ३, ४, ५ ) टिप्पनीषु कृत एव । अधुना दत्तकः को ग्राह्य इत्येतत्संबन्धेन न्यायालयेषु कीदृशा निर्णयाः सन्ति तदवलोक्यते—

दत्तकोऽयं पुत्र एवेति कृत्वा दत्तकदुहिता स्वीकर्तुं नैव शक्या भवति । ( गंगाबाई वि० अनन्त १३ मुंबई ६९० ) । परं मद्रासीयन्यायालयेनैवं नि-श्चितं यद्वारस्त्रीनर्तकीप्रभृतिजातीयस्त्रीभिः स्वपश्चात्स्वधनस्य कोऽप्यधिकारी स्यादिति हेतुना यदि दत्तकविधिना दुहिता परिगृह्येत, सा च दत्तकन्या स्वीयहीनजीवनवृत्तेरलिप्ता परिस्थाप्येत तर्हि तादृशं दत्तकविधानं राजकीयानियमानुसारि ( कायदेशीर ) धर्तव्यमिति [ व्यंकू वि० महालिंग ११ मद्रास ३९३ ] । मोहमयीकलिका-तान्यायालयाभ्यां त्वेवं निरचायि—यत्तादृश्यां रूढौ सत्यामपि निरुक्तं गणिका-विकर्तृकदत्तकदुहितृग्रहणं राजनियमाननुसार्येव ( बेकायदेशीरच ) ज्ञेयमिति ( मथुरा वि० येसू ४ मुंबई ५४५ ) ।

जिघृक्षितो दत्तकपुत्रोऽयं परिग्रहीतृपितृवर्णीय एवापेक्षितः । अर्थात् ब्राह्म-णेन ब्राह्मणजातीय एव दत्तको ग्राह्यो न क्षत्रियादिजातीयः । परमसौ समा-नान्तर्जातीय एवापेक्ष्यत इत्येवमनभिमतनिर्बन्धो ( सक्तीचा कायदा ) नास्ति । ( शिवदेव वि० रामप्रकाश ४६ अलाहाबाद ६३७ ) । तेन ऋग्वेदिनो यजुर्वेदी, देशस्थस्य च कोंकणस्थ इत्येवमन्तर्जातिवैपरीत्येनापि दत्तको ग्राह्यो भवेत् । नन्द-पण्डितैर्जिघृक्षितदत्तकपुत्राणां या मालिका प्रोक्ता तस्यां सर्वतः प्राधान्यं भ्रातृष्पुत्र-स्यादीयत, भ्रातृष्पुत्रालाभसंभव एव सगोत्रसपिण्डः, तदभावेऽसगोत्रसपिण्डः, तदभावे सगो-त्रासपिण्डः, ततः समानजातीयः, इत्येवमनुक्रमेण ग्राह्यपुत्राः प्रतिपादिताः सन्ति । तत्रापि द्विजातीयैर्दौहित्रः, भागिनेयः, मातृस्वसृसुतश्चेति त्रयः पुत्राः सर्वथा वर्ज्या एवेती-त्येवं तेषां कटाक्षो लक्ष्यते । अपि चैवमप्येको नियमस्तैर्दत्तोऽस्ति—यस्य पुरु-षस्य यया स्त्रिया सह तत्कन्यावस्थायां विवाहो भवितुं न शक्योऽशास्त्रीयत्वात्ता-दृशस्त्रियाः पुत्रस्तेन पुरुषेण दत्तकत्वेन नैव ग्रहीतव्य इति ( एतद्विषये विशि-ष्य विवरणं मञ्जरीव्याख्यायां १४६–१४७ पृष्ठे द्रष्टव्यम् ) । मोहमयीं विनाकृत्यान्यन्यायालयैर्यया सह विरुद्धसंबन्धो भविता तादृशास्त्रियाः पुत्रो दत्तको न ग्राह्य इत्येवं मतं ग्राह्यत्वेन धृतमस्ति ( मीनाक्षि वि० रामानन्द ११ मद्रास ४९ ) । परंतु मुम्बापुरीस्थन्यायालयस्य निरुक्तमतं मान्यं नास्ति । मोहमयीयन्यायालयमते द्विजातीयस्य दौहित्रभागिनेयमातृष्वसृसुतान् विना कृत्वा की-दृशोऽपि समानजातीयः पुत्रो दत्तकत्वेन ग्रहीतुमर्हो भवति ( सुब्राव वि० राधा ५२ मुंबई ४९७ ) । इतरत्रत्यन्यायालयैरपि हि निरुक्तनिर्बन्धविषये दृढि-शैथिल्यं व्यधायि । सर्वमहान्यायालयमते शूद्रविषयेऽसौ दौहित्रादिनियमोऽपि लब्धो भवितुं शक्नोति ( भगवानूसिंग वि० भगवानसिंग २१ अलाहाबाद ४१२ ) ।

परं तथा रूढिः प्रचलिता स्याच्चेद्दौहित्रादीनां दत्तकविधानं द्विजातीयेष्वपि राजनियमानुसारि (कायदेशीर) धर्तुं यायात् (बाईनानी वि० चुनीलाल २२ मुंबई ९७२)। भ्रातृपुत्रादीनां योऽनुक्रमः प्रोक्तः स केवलं प्रशस्तिमात्रमिति हेतोर्भ्रातृपुत्रसद्भावेऽपि यद्यन्यः पुत्रो दत्तको गृह्येत तर्हि सोऽपि राजनियमानुसारी ( कायदेशीर ) धृतो भवेत्, इति सर्वन्यायालयीयं व्यक्तं मतमस्ति । दत्तकपुत्रस्य वयोवस्थासंबन्धेन प्रतिग्रहीत्रा क्रियमाणसंस्कारसंबन्धेन चानेकविधन्यायालयानां नैकविधानि मतानि सन्ति । बंगाल बिहार ओरिसा काशीप्रान्त, इत्येवं चतुर्षु देशेषु द्विजातीयैरुपनयनात्प्रागुद्दत्तको गृह्येत चेत्तदैव दत्तकविधानं राजनियमानुसारि मन्येत ( गंगासहाय वि० लेखराज १० अलाहाबाद २५३ ) । मद्रासप्रान्त इत्थं निर्णयोऽकारि यज्जिघृक्षितः पुत्रः सगोत्रः स्याच्चेत्तद्विवाहपर्यन्तं तादृशः पुत्रो द्विजातीयानां ग्राह्यो भवेत् ( वीरराघव वि० रामलिंग ९ मद्रास १४८ ) । अर्थाद्ग्राह्यपुत्रस्योपनयनं जनककुले संजातमपि न क्षतिः किंतु तद्विवाहः प्रतिग्रहीतृकुल एव संपादनीयः । असगोत्रदत्तकस्य तूपनयनमपि प्रतिग्रहीतृकुल एव निष्पाद्यं भवति । मुम्बापुरीयमहान्यायालयेनैवं निरचायि–यज्जिघृक्षितः पुत्रोऽयं सगोत्रो वाऽसगोत्रो वा, उपनायितो वाऽनुपनायितो वा, विवाहितो वाऽविवाहितो वा, सपुत्रो वाऽपुत्रो वा कथमप्यास्त्वितरैः कैरपि कारणैः शुद्धं तादृशपुत्रस्य दत्तकविधानं राजनियमानुसार्येव ध्रियेत ( वाळाबाई वि० महादू ४८ मुंबई ३८७ ) । तथैव सर्वमहान्यायालयानामित्थं निर्णयोऽस्ति–यद्ग्राह्यः पुत्रोऽयं स्वप्रतिग्रहीतृपित्रपेक्षया वयसाऽधिकोऽपि स्यात्तर्हि न क्षतिः ( चन्द्रेश्वर वि० विश्वेश्वर ५ पाटणा ७७७ ) । शूद्रादिषूपनयनं भवितुमेव न शक्यं, तथाऽपि तेषां तत्स्थाने विवाहोऽस्मारि । अतो मोहमयीनागपूरप्रभृतिप्रान्तान् विनाकृत्य विवाहितः शूद्रपुत्रो दत्तकत्वेन राजनियमाननुसृत्य ग्राह्यो न भवति ( लिंगय्या वि० चेनगलम्मल ४८ मद्रास ४०७ ) ।

एककः पुत्रो न देयो नापि ग्राह्य इत्येवं स्पष्टं शास्त्रवचनं वर्तते ( वसिष्ठधर्मसूत्रम् ) । परं तु यदैकाकिपुत्रदत्तकविधानस्य राजनियमानुसारित्वविषये ( कायदेशीरपणाबद्दल ) न्यायमन्दिरेषु प्रश्न उपस्थितस्तदा पूर्वमीमांसीयहेतुवन्निगदाधिकरणस्यानवधानतयाऽन्यथैवार्थं विधाय यद्विधिवाक्यं कारणघटितं स्यात्तद्वाक्यस्य विधिस्वरूपत्वमेव नश्यति, अतस्तद्वाक्यमर्थवादात्मकं भवतीत्येवं न्यायमन्दिरेषु गृहीतं ध्रियते स्म । अथ चैतस्माद् यतः ' नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा, स हि संतानाय पूर्वेषाम् ' अस्मिन्वाक्य एकाकिपुत्रदाननिषेधमुक्त्वा तत्साहित्येन ' स एककपुत्रः कुलपरम्परां प्रचालयितुमावश्यकः ' इत्येवं कारणमदायि तत एतद्वाक्यीयप्रतिषेधोऽर्थवादात्मको धर्तव्यः, एककपुत्रस्य दत्तकविधानं राजनियमानुसारीति धर्तव्यं चेत्यसौ निर्णयो न्यायमन्दिरैर्दीयते स्म ( श्रीबलुसु वि० श्रीबलुसु २६ इं० अ० ११३ ) । वस्तुतोऽवलोकिते ' शूर्पेण जुहोति तेन ह्यन्नं क्रियते '

एतस्मिन् विधिवाक्ये शूर्पं ह्यन्ननिष्पादनक्रियोपकारकमित्येवं यद्यपि शूर्पस्य महत्ताभिधायकं कारणं निर्दिष्टं तथाऽपि तद्वाक्यस्य विधिस्वरूपं नैव नश्यतीत्येवमेव निर्णयो हेतुवन्निगदाधिकरणे कृतोऽस्ति ( जै० १ । २ । ३ ) । तमनुसृत्य ' नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा ' इदं वाक्यं तत्त्वतः प्रतिषेधस्वरूप एव पर्यवसन्नमित्येव धर्तुं योग्यम् । कारणं ' स हि संतानाय पूर्वेषाम् ' इतीदं कारणवाक्यं यद्यपि प्रतिषेधेन सह निगदितं तथाऽपि तद्वाक्यस्य प्रतिषेधात्मकत्वं नैव नश्यति । अस्तु, अधुना न्यायालयैर्मुक्ततया ( मुभा ) दत्तत्वेनैककपुत्रस्य दानप्रतिग्रहकरणे प्रतिबन्धो नास्ति ।

एवमेककपुत्रस्य दत्तकविधानं राजनियमान्विते जायमानेऽपि यस्य ग्राह्यपुत्रस्य मातापितरौ मृतौ तादृशपुत्रस्य दत्तकविधानं राजनियमान्वितं भवितुं न शक्नोति ( बशेतियाप्पा वि० शिवलिंगाप्पा १० मुंबई हा० को० २६८ ) । एतत्कारणमिदमस्ति––पुत्रदानाधिकारस्तन्मातापित्रोरेवास्ति नेतरस्येति न्यायालयैर्निश्चितत्वात्तयोरजीवतोः सतोस्तत्पुत्रस्य दत्तकविधानं राजनियमानुसारेण भवितुमेव न शक्नोतीति ।

पृ० प० सा० प्रतीकम् ।

४५ २ [१२] तदसंभवेऽनुकल्पमाहेति । कस्मिंश्चित्कर्मणि मुख्यत्वेन शास्त्राभिहितो यः पदार्थो विधिर्वा स यदा केनचित्कारणेन ग्रहीतुमशक्यो भवति तदा तत्प्रतिनिधित्वेन योऽन्यः पदार्थो विधिर्वाऽऽदिश्यते सोऽनुकल्प इत्युच्यते । यथा यदि सोमं न विन्देत पूतीकानभिषुणुयादित्यादि । एवमौरसपुत्राभावे दत्तकं परिगृह्णता सगोत्रसपिण्डः पुत्रो मुख्यतया ग्राह्यत्वेनोक्त्वा तदलाभेऽसगोत्रसपिण्डस्तस्याप्यलाभे सगोत्रासपिण्डो ग्राह्य इत्येवमिदं द्वयमनुकल्पा उक्ताः । एतस्मात् सगोत्रसपिण्डसद्भावे योऽन्यं पुत्रं ग्रहीतुं प्रवर्तेत, न तद्धस्तान्मुख्यविधिपरिपालनं जातमिति दत्तकमीमांसाकारा मन्यन्ते । परंत्वेतन्नियमानां सगोत्रसपिण्डग्रहणप्रशस्तिमात्रे पर्यवसानान्मुख्यकल्पसद्भावेऽप्यनुकल्पाश्रयेण दत्तके गृहीतेऽपि तस्य राजनियमाननुसारित्वदोषापत्तेर्न भयम् । केवलं न्यायालयैः प्रोक्तानामितरनियमानां परिपालने कृते सति न काचित्क्षतिः ।

पृ० प० सा० प्रतीकम् ।

५० २ [१३] संदेहोऽत्र कुलशीलादिविषय इति । संदेहे चोत्पन्ने ' [अ] दूरबान्धवं शूद्रमिव स्थापयेत् ' एतद्वसिष्ठवचनाद्दत्तकनिर्वृत्तौ ( निवड ) कर्तव्यायां सुतरां दक्षतया ग्रहणमावश्यकमित्यवगम्यते । पातित्यादिदोषविषयकः कुले संदेहः । परंत्वाधुनिकराजनियमानुसारेण पातित्यदोषो दायाधिकारं नापहर्तुं शक्नोति । कस्यचित्पुत्रो महापातकेन म्लेच्छसंसर्गेण वा पातित्यं प्राप्तस्तथाऽपि स पितृधनांशं लभेतैव । किंतु पतितपुत्रापेक्षयाऽन्यं शुद्धं पुत्रं दत्तकं गृहीत्वा तद्द्वारा स्वौर्ध्वदेहिकश्राद्धादिधार्मिकविधिसंपादने कः प्रतिबन्धः । केवलं पित्रा स्वकष्टार्जितद्रव्यांश-

प्रदानमन्तरा स दायविभागग्राही न भवेदित्येव । भूमिकायां वर्णितरीत्या पुत्रोऽयं मुख्यतः समाजतदन्तर्गतविशिष्टसंघगतस्य स्वपितृस्थानस्य संरक्षणार्थं भवति । तस्मात्स पितृसदृश एवापेक्षितः । किं बहुना, पितृपेक्षयाऽपि तत्ताद्विशिष्टगुणेषु यदि सोऽधिकश्रेष्ठः स्यात्तर्हि समाजकार्यसंपादनेऽतीव समर्थः स्यादिति कथनस्यापेक्षा नास्ति । परं त्वथेयं दत्तकविषयिणी दृष्टिर्न्यायालयानां नास्ति ।
नैतावदेव, किंतु यस्मिन् समाजे दत्तकपुत्रो गृह्यते तेषां पुरुषाणामपीयं दृष्टिर्नास्तीति खेदावहमेतत् ।

| पृ० | प० | सा० प्रतीकम् । |
|---|---|---|
| ५२ | ५ | —[१४] तस्माद्समानजातीयो न पुत्रीकार्य इति । |
| ५४ | ९ | —[१५] भ्रातृपुत्र एव पुत्रीकार्य इति । |
| ८० | ७ | —[१६] दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः, इति । |
| १०१ | १ | —[१७] तदेतत्स्पष्टमाचष्ट शाकलः—सपिण्डापत्यकं |

चैव...सुतं विनेति । य इमे चत्वारो नियमा निर्दिष्टास्तेषां मध्ये द्वौ नियमौ न्यायालयैरपि मान्यौ कृतौ स्तः । ( १ ) असमानवर्णीयः पुत्रो दत्तकत्वेनाग्रहणीयः । अत्र नन्दपण्डिताः—'असमानजातीयः पुत्रो दत्तकत्वेनाग्राह्यः' इति वदन्ति । वैदिकसमाजरचना मनसि गृहीता चेद् वर्णव्यवस्थावदेव जातिव्यवस्थायां शास्त्रकारैर्दृष्टिर्दत्ता । यावती वर्णरक्षणस्याऽऽवश्यकता तावत्येव जातिरक्षणस्याप्यावश्यकता शास्त्रकाराणां भासते । अत एव ग्राह्यपुत्रस्तत्प्रतिग्राही चेति द्वावपि ब्राह्मणवर्णीयौ स्त इति कृत्वा द्राविडजातीयस्य कान्यकुब्जजातीयो मैथिलजातीयो वा पुत्रो ग्राह्यो न भवेत् । द्राविडजातीयेन द्राविडजातीय एव ग्राह्यः । नैतावदेवापि तु ग्राह्यग्राहकयोः शाखोपशाखे अपि समाने एवापेक्षिते भवतः । अत एव दत्तकमीमांसाकाराः स्पष्टं प्रतिपादयन्ति—सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः, इति वाक्यशेषेण सपिण्डासपिण्डानां सजातीयत्वेन विशेषणादसमानजातीयाः सपिण्डा असपिण्डाश्च व्यावर्त्यन्ते । अप्रतिषिद्धमनुमतं भवतीति न्यायेनानुकल्पतया तत्प्राप्तिसंभवात् । अर्वाचीनेयं दृष्टिर्न्यायालयानां नास्ति । तस्मात्सवर्णो दत्तकपुत्रो भिन्नावान्तरजातीयः सन्नपि स राजनियमानुसारी भवेत् । ( २ ) शूद्रं वर्जयित्वाऽन्यस्य कस्यापि तादृशी रूढिर्न स्याच्चेद्दौहित्रभागिनेयमातृष्वसृसुता ग्राह्या न भवेयुः । इतरौ द्वौ नियमौ केवलं प्रशस्तिपरावित्याधुनिकराजकीयनियममतमित्युपरि कथितमेव ।

| पृ० | प० | सा० प्रतीकम् । |
|---|---|---|
| १०१ | ७ | —(१८) युक्तं चैतद्विरुद्धसंबन्धस्य त्रिष्वपि समा- |

नत्वादिति । विरुद्धसंबन्धविषयकं विवरणमग्रे द्वात्रिंशदङ्कीयटिप्पन्यां निरीक्षणीयम् ।

| पृ० | प० | सा० प्रतीकम् । |
|---|---|---|
| १११ | १ | —[१९] इदानीं कीदृशः पुत्रीकार्य इति । |
| १११ | ४ | —[२०] एक एव पुत्रो यस्येत्येकपुत्रस्तेन तत्पुत्रदानं न कार्यमिति । |

११३ २ —[२१] तद्वद्द्विपुत्रस्यापि तत्प्रतिषेधायेति । भ्रातृपुत्री बहुभ्रातृकोऽपेक्ष्यत इति नन्दपण्डितैस्तल्लक्षणमुक्तम् । तत्र 'नैकपुत्रेण कर्तव्यं पुत्रदानं कथंचन । बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः' इति शौनकवचनमाधारत्वेन गृहीतम् । तेन न्यूनान्न्यूनं पुत्रत्रयसत्त्वं विना पिता स्वपुत्रस्यैकस्य दानं न कुर्यादिति तैः 'तद्वद्द्विपुत्रस्यापि तत्प्रतिषेधाय' इति ग्रन्थेनोक्तम् । एतत्संबन्धेनान्यदपि तैरुक्तम्—विक्रये चैव दाने च वशित्वं स्वसुते पितुः । 'देयं दारसुतादृते' इति । एतद्वचनादेकपुत्रस्य पुरुषस्य पुत्रदानाधिकार एव न भवति । एतद्विषये न्यायालयानां कीदृशोऽभिप्राय इत्येतदर्थमेकादशटिप्पन्यवलोकनीया । द्विपुत्रविषये किंचिदप्युक्त्वैवालम् । किन्त्वेकपुत्रेणापि यद्येककपुत्रस्य दानं क्रियते तर्ह्यपि तद्दानं राजनियमानुसार्येवेति स्थितमस्ति । नन्दपण्डितानामभिप्रायस्य सम्यक्त्वेन जिज्ञासा स्याच्चेन्मञ्जरीव्याख्या ( पृ० १११–११४ ) पर्यवलोकनीया ।

| पृ० | प० | सा० प्रतीकम् । |
|---|---|---|

११७ १ [२२] न चैवं विधवाया आपद्यपि पुत्रदानं न स्याद्भर्त्रनुज्ञानासंभवात्परिग्रहवदिति वाच्यमिति । पुत्रदानाधिकारिकथनावसरे, पिता स्वपुत्रदानेऽधिकारी तथा पत्न्यपि भर्त्रनुज्ञया पुत्रदानेऽधिकारिणीति नन्दपण्डितैरुक्तम् । अथ 'माता पिता वा दद्यातां यमद्भिः पुत्रमापदि' 'दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्' इति मनुयाज्ञवल्क्यवचनाभ्यां मातापितरौ पुत्रदाने समकक्षाधिकारिणाविति नैवावगन्तव्यमित्येवं तैः स्पष्टमाज्ञापितम् । मृतभर्तृकस्त्रीविषये निरुक्तवचनप्रवृत्त्या विधवायाः पुत्रदानाधिकारः सिध्यतीति तेषां मतम् । न्यायालयैः पुनरतिमात्रान्न्यूनानधिकभावेनेदमेव मतमवलम्ब्यते स्म । तेषां मते यावत्पर्यन्तं स्त्रियाः पतिः संसाररतस्तावत्पर्यन्तमसौ स्त्री भर्त्रनुज्ञामन्तरेण पुत्रदानेऽसमर्था । यदि तद्भर्ता कृतसंन्यासो वा मृतो वोन्मत्तजडो वा, अत एव व्यवहारासमर्थः स्याच्चेत्तर्ह्येव तादृशस्त्रीं प्रति पुत्रदानाधिकारः प्राप्नोति, परं तेन भर्त्रा संसाररतेन सता पुत्रदानं न करणीयमित्येवं स्वभार्यां प्रति निषेधो न कृतः स्यात् ( जोगेशचन्द्र वि० नृत्यकाली ३० कलकत्ता ९६५ ) । यदि विधवया पुनर्विवाहः कृतस्तर्हि प्रथमभर्तुः सकाशादुत्पन्नस्य पुत्रस्य दाने सा स्त्री असमर्था, इत्येवं मुम्बापुरीयन्यायालयमतम् ( पंचाप्पा वि० संगनबसवा २४ मुंबई ८९ ) । अर्थात् प्रथमभर्त्रा स्वमरणात्प्राग्यदि पुत्रदानविषयिणी स्वस्त्रीं प्रत्यनुज्ञा दत्ता स्याच्चेन्निरुक्तनिषेधस्तत्र

न प्रकल्प्यते । तद्वितरन्यायालया: पुनरित्थं प्रतिपादयन्ति—यस्मात्पुनर्विवाहेण तस्याः स्त्रियाः प्रथमपत्युत्पन्नताज्ञानापत्यनिष्ठा सत्ता न नश्यति, तस्मात्पुनर्विवाहेण तस्याः पुत्रदानाधिकारेणापि न नष्टेन भाव्यमिति । मोहमयीयन्यायालयस्य नवीनमतमप्युपर्युक्तमतमेव किंचिदनुसरति ( पुतळाबाई वि० महादू ३३ मुंबई १०७ ) । तथैव केनचिद्धिन्दुना परधर्मे स्वीकृतेऽप्यज्ञानापत्यनिष्ठायास्तत्सत्ताया अबाधितत्वात्तस्य स्वपुत्रदानाधिकारोऽक्षत एव । परं तस्य परधर्मीयत्वात्तदनुज्ञया योग्याधिकारिणा केनचित्पुत्रदानविषयको धार्मिकविधिरनुष्ठेय इत्येव विशेषः ( ज्ञामसिंग वि० शान्ताबाई २५ मुंबई ५५१ ) । यथा पुत्रग्रहणं पित्रा कदाचिन्मात्रैव कर्तव्यं भवति तत्संबन्धी योग्यायोग्यत्वविचाराधिकारोऽन्येन केनापि पूरयितुमशक्यः, तथैव पुत्रदानाधिकारोऽपि मातापितृभ्यामेवोपयोक्तव्यो भवति । सोऽधिकारो नान्येन केनाप्युपयोक्तव्यः पूरयितव्यो वा भवति । परंतूपरि लिखितवत्पितुरथवा मातुः केनचिन्निमित्तेन यदा दत्तकग्रहणसंबन्धिधार्मिकविधौ प्रत्यक्षतो भागो ग्रहीतुं नाऽऽयाति तदेतरेण दत्तकविधिसमारम्भः संपादनीयः ( बशेट्टिप्याप्पा वि० शिवलिंगाप्पा १० मुंबई हा० को० २६८ ) ।

| पृ० | प० | सा० | प्रतीकम् । |
|---|---|---|---|
| १२४ | ८ | ( २३ ) | संस्कारैः पुत्रत्वमित्युक्तमिति । |
| १२५ | ४ | ( २४ ) | ततश्च चूडान्तसंस्कारसंस्कृतस्य परिग्रहे व्यामुष्यायणता भवति । गोत्रद्वयेन संस्कृत्वादिति । |
| १२७ | २ | ( २५ ) | अनेन जातकर्मादीनां चूडान्तानां संस्काराणां पुत्रताहेतुत्वमुक्तमिति । |
| १२८ | ३ | ( २६ ) | अनेन जातकर्माद्यन्नप्राशनान्तानां जनकगोत्रेणाननुष्ठानेऽपि न विरोध इति । |
| १२८ | ५ | ( २७ ) | दत्ताद्या इत्याद्यपदेन कृत्रिमादिग्रहणमित्युक्तमेव । तेषामपि संस्कारैरेव पुत्रत्वं न परिग्रहमात्रेण । 'अन्यथा दास उच्यते' इति विपक्षबाधकादिति । |
| १२९ | १ | ( २८ ) | असंस्कृतोऽपि पञ्चमादूर्ध्वं न ग्राह्यः । कालाभावेन पुत्रत्वानुत्पत्तेरिति । |
| १२९ | १० | [२९] | तस्मादाचूडान्तमित्यत्र चूडाशब्दस्तृतीयवर्षपर एव युक्तः । तृतीयानन्तरमापञ्चमं गौणः । ऊर्ध्वं तु गौणोऽपि नेति स्थितमिति । अस्यां |

टिप्पण्यां ( २३–२९ ) इति सप्तभिरङ्कैर्निर्दिष्टप्रतीकानि विवरणकृते गृहीतानि ।

गृहीते पुत्रत्वोत्पत्तौ कानि निमित्तान्यपेक्षितानीतीदमेतेषु प्रतीकेषु प्रतिपादितम् । एतदर्थं नन्दपण्डितैर्मुख्यतः कालिकापुराणस्थवचनान्याधारत्वेनेहोद्धृतानि । व्यामुष्यायणप्रसङ्गेनापि कालिकापुराणान्तर्गतानि वेतालभैरवीयाख्यानप्रतिपादकवचनान्याधारत्वेनोद्धृतानि । एतद्व्यतिरिक्तैकद्विस्थलविषयेऽपि कालिकापुराणस्थवचनानामाधारस्तैर्गृहीतोऽस्ति । परंतु द्वैतनिर्णयव्यवहारमयूखयोः शंकरभट्टनीलकण्ठभट्टाभ्यां पितापुत्राभ्यां कालिकापुराणाधारस्त्याज्यत्वेनोक्तः । किं बहुना, नन्दपण्डितोद्धृतवचनानि कालिकापुराणपुस्तकेषु न सन्त्येवेत्येतत्प्रतिपादनपर्यन्तमपि तद्बुद्ध्याऽनुधावितम् ।

कालिकापुराणवचनानामित्थं कटाक्षः संदृश्यते—यत्त्रैवर्णिकदत्तकस्य जातकर्मादयः सर्वे संस्कारा अथवा चूडामारभ्यामिमाः संस्काराः प्रतिग्रहीतृपित्रैवानुष्ठेयाः । यदि तथा नानुष्ठिताः स्युरथवा दत्तकविधानात्प्रागेव जनकपित्राऽनुष्ठिता भवेयुस्तर्हि प्रतिग्रहीतृपितृनिरूपितपुत्रत्वं प्रतिग्रहीतृगोत्रसंबन्धश्च तादृशदत्तके नैवोत्पत्तुं शक्नोति । द्वैतनिर्णयकारव्यवहारमयूखकाराविमावुभावपि विवाहितोऽपि संजातपुत्रोऽपि च दत्तको भवत्येवेति मन्येते ।

वस्तुतः समाजव्यवस्थादृष्ट्योच्यते चेद्दत्तकपुत्र एतदर्थं ग्राह्यो भवति—यत् प्रतिग्रहीतृपितुः कुलपरम्परया प्राप्तानि सामाजिककार्याणि पितुः पश्चात् स पुत्रः पितृवदेव कर्तुं शक्नुयादिति । एतदर्थमेव यावच्छक्यं ग्राह्यः पुत्रः पितृसदृश एवावश्यमपेक्षितव्यः । सादृश्यं च विषयद्वयमध्ये सावधानतायां गृहीतायां लब्धुं शक्यम् । प्रतिग्रहीतृपितरि यादृशा गुणा वंशपरम्परया जन्मतः समागतास्तेऽथवा तत्सदृशगुणा यस्मिन् पुत्रे वंशपरम्परया जन्मन आरभ्यैवानुवृत्ताः स्युरित्येवमधिकादधिकं संभाव्येत तादृशस्यैव पुत्रस्य दत्तकत्वेन ग्रहणे निर्वत्ति( निवड )करणम् । अत एव स समानजातीयो भाव्यः, सगोत्रो भाव्यः, सपिण्डो भाव्यः, सोदरभ्रातृपुत्रो लभ्येत चेत्सोऽधिकं श्रेयस्करः स्यादित्येवमुत्तरोत्तरं श्रेष्ठपुत्रमालिका शास्त्रकारैर्गुम्फिता । इत्येकः सावधानताविषयः । द्वितीयस्त्वेतादृशपुत्रस्य जातादयः सर्वे संस्काराः प्रतिग्रहीतृपितृकुलधर्मानुसारेणैवानुष्ठिताः स्युरिति । पालकपितृवत्सामाजिककार्यसंपादनक्षमताप्राप्त्यर्थं तच्छिक्षणमपि पालककुलपरम्परयैव जातं स्यात् । नैतावदेव, किंतु तदासमन्ताद्भवेन सर्वेणैव वातावरणेन कोमलवयःप्रभृति तत्कुलीयेनैव भाव्यम् । तेन तत्कुलविषये तत्कुलीयविशिष्टपरम्पराविषये च तत्र पुत्रे ममत्वबुद्धिः स्वत्वबुद्धिश्चोत्पद्येयाताम् । एतत्परिणामत्वेन तत्कुलीयविशिष्टकार्याणि तेनाधिकादधिकं सामीचीन्येन संपाद्येरन् । विशिष्टकुलपरम्पराया अबाधितत्वेनावस्थानार्थमेव शास्त्रकारैरतिमात्रं बाल्ये वयसि कन्याविवाह उपादेशि । यावत्पर्यन्तं कन्या जनकपितृकुलीयविशिष्टपरम्परया न समाक्रान्ता, प्राप्स्यमानभर्तृकुलीयविशिष्टपरम्परग्रहणसमर्था च तावत्येव बाल्ये वयसि तद्विवाहः संपादनीय इति धर्मशास्त्रकाराः स्पष्टमनुशासति ।

किंच जातकर्मादयो ये संस्काराः प्रतिव्यक्ति करणीयास्ते विशिष्टकुलपर-

म्परानुसारिणो भवन्ति । एतत् ‘ चूडा कार्या यथाकुलम् ’ ( या० स्मृ० १ । १२ ) ‘ यद्वेष्टं मङ्गलं कुले ’ ( म० स्मृ० २ । ३४ ) ‘ तृतीये वर्षे चौलं यथाकुलधर्मं वा ’ ( आश्वलायनगृह्यसूत्रम् ) ‘ कुलदेवतासंबद्धं पिता नाम कुर्यात् ’ ( शङ्खस्मृतिः ) ‘ शिखामेके यथाकुलम् ’ ( या० स्मृ० १ । १४ ) इत्यादिस्मृतिभ्यः ‘ यत्र बाणाः संपतन्ति कुमारा विशिखा इव ’ इति श्रुतिलिङ्गाच्च स्पष्टं भवति । नैतावदेव, किंतु तत्तत्कुलस्वीकृतपद्धत्यैव ते संस्काराः कर्तव्या इति शास्त्रकाराणां कटाक्षो दृश्यते । चूडाकर्मणि पुत्रमूर्धगतशिखास्तत्तत्कुलीयप्रवरसमसंख्या अवस्थाप्यन्ते इति प्रसिद्धमेव । एवं च विशिष्टकुलपरम्परायाः शिक्षणग्रहणे संस्कारा मुख्यं साधनमिति शास्त्रकाराणामाशयो लक्ष्यते ।

कुलपरम्परासंरक्षणकार्ये निरुक्तसंस्काराणां महत्त्वसत्त्वाद्दत्तक एतावति बाल्ये वयसि वर्तमानो ग्राह्यः,—यतस्य चूडादयो मुख्याः संस्काराः प्रतिग्रहीतृकुल एव प्राप्तकालत्वात्क्रियेरन्निति साहजिकतयैव सिध्यति । एतदर्थमेव कालिकापुराणस्थवचनानि परमार्थवन्ति ( महत्त्ववन्ति ) प्रतीयन्ते । यदि भिन्नगोत्रीयः पुत्रो दत्तकत्वेन गृह्येत, तस्य च चूडान्ताः संस्कारा यदि जनकेन क्रियेरंस्तर्हि तस्मिन्दत्तके प्रतिग्रहीतृपुत्रत्वं नोत्पद्यतेऽत एव स प्रतिग्रहीतुर्दासो भवतीदम् ‘ अन्यथा दास उच्यते ’ इति वचनात्प्रतीयते । परंतु भिन्नगोत्रीयदत्तकस्थले साक्षाज्जन्मदातृमातापितृभ्यां तस्य यत्किंचिदपि लालनपालनादिकं जायेतैवेत्यतिमात्रं स्वाभाविकमेतत् । शास्त्रेण पुत्रदानमतीव बाल्ये वयसि विहितमपि जन्मसमसमयमेवाऽऽत्मनोऽपत्यमन्यदीयगृहे न कोऽपि प्रवेशयेत । अर्थाद् ग्राह्यग्राहककुलयोः संबन्धो यावान निकटवर्ती स्यात्तावत्पुत्रदानमत्यर्थं बाल्ये वयसि संभवेत् । एकत्र निवसतोः सोदरभ्रात्रोर्मध्ये यद्येकस्यापरभ्रातुष्पुत्रो ग्राह्यः स्याच्चेत्स पुत्रो जन्मसमसमयमेव दत्तोऽपि गृहकुलादिभेदाभावाज्जनकमातापित्रोः स्वापत्यगतमायापाशत्रोटनं न प्रसज्जते । तेन तादृशस्थले जातमात्रस्यैव पुत्रस्य दानं सुतरां शक्यसंभवम । परंतु भ्रातृपुत्राभावे विभिन्नकुलीयदत्तकस्थले तद्ग्रहणसंबन्धेन काचित्कालमर्यादा स्यान्न वेति पृच्छतो नन्दपण्डिता एव मुत्तरयन्ति— यदि ग्राह्यः पुत्रः समानगोत्रीयः स्यात्तदा जनकगोत्रेण संजातचूडान्तसंस्कारोऽपि ग्रहणार्ह एव । किंतु यदि स भिन्नगोत्रीयः स्यात्तर्ह्यसंजातचूडासंस्कार एव ग्रहणार्हः । यतो गोत्रभेदात्कदाचिच्चूडासंख्याभेदः स्यात् । स च नेष्टः । ‘ चूडा अपि च कर्तव्याः कुमारस्याऽऽर्षसंख्यया ’ इत्युक्तेः । चूडासंस्कारोऽयं मुख्यतस्तृतीये वर्षे शास्त्रेऽभिहितः । तदग्रिम उपनयनसंस्कारस्तु गर्भाष्टमे जन्माष्टमे वा वर्षे सामान्यतः कर्तव्यो भवति । अथ समानगोत्रीयाणां यद्यपि संजातचूडस्यापि दत्तकत्वेन ग्रहणेऽनुज्ञा दत्ता तथाऽपि तैस्तद्दत्तकग्रहणमुपनयन-

कालं यावद्यो दीर्घकालस्तत्पर्यन्तमित्यग्रे न नेतव्यम् । यतः समानगोत्रीयाणामपि सर्वस्माच्चरमो दत्तकग्रहणकालस्तत्पञ्चमवर्षपर्यन्त एव नन्दपण्डितैरभिहितः । तत्र ' ऊर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ' इति कालिकापुराणस्याऽऽधारश्च दत्तः ।

विचारे क्रियमाणे योऽयं वयसः पञ्चमवर्षात्प्राग्दत्तकग्रहणे नन्दपण्डितानामाग्रहः स तु योग्य एवेत्यालक्ष्येत । शिशोर्विद्यारम्भकालस्तद्वयसः पञ्चमं वर्षम् । ( अत्र देवण्णभट्टकृतस्मृतिचन्द्रिका द्रष्टव्या )। उपर्युक्तवत्प्राप्यमाणविद्यायोगादेव स पुत्र आत्मपितुर्धर्मकार्यं संपादयितुं पितृदेव समर्थः संपत्स्यते। तस्माज्जन्मनः प्रभृत्ति तत्संवर्धनं यद्यपि प्रतिग्रहीतृकुले न जातं स्यात्तथाऽपि विद्यारम्भकालादारभ्य तत्संवर्धनं प्रतिग्रहीतृकुले भवितुमत्यन्तावश्यकम् । अत एवासमानगोत्रीयदत्तकविषये चूडाकरणात्पूर्वं, समानगोत्रीयदत्तकविषये तु चूडाकरणानन्तरमपीति भिन्नकाल उपदिष्टस्तथाऽपि सर्वस्मिन्प्रसङ्गे दत्तकग्रहणवयोमर्यादां पञ्चमवर्षपर्यन्तत्वेन निरदिशत् । तदनन्तरं दत्तको भवितुमेव न शक्नोति । इदं तैः ' ऊर्ध्वं तु गौणोऽपि कालो न ' इति शब्दैः स्पष्टं प्रत्यपादि ।

एवं प्रकारेण दत्तकग्रहणे तद्वयोमर्यादा चरमतरा पञ्चमं वर्षमिति नन्दपण्डितैर्ग्राहितम् । तथैतादृग्वयोमर्यादाकरणकारणमपि ' नियमश्चाक्षरग्रहणपूर्वकब्रह्मवर्चसफलकामोपनयनप्राप्त्यर्थः ' इत्थमभिहितम् । सप्तविंशाङ्क[ २७ ]गतटिप्पन्यां नन्दपण्डिता इत्यमभिदधते-त इमे संस्काराः केवलं दत्तकपुत्रविषय एव प्रतिग्रहीतृकुले जाताः स्युरिति न मन्तव्यम् । अपि तु दत्तपदेन येषां कृत्रिमादिपुत्राणां बोधो जायते तादृशसर्वपुत्रसंबन्धेनाप्ययमेव नियमः स्वीकार्यः । अर्थात् कृत्रिमादिपुत्राणां स्वीकारोऽपि तद्वयसः पञ्चमवर्षात्प्राक् कर्तव्यो भवतीत्येवं तेषां सिद्धान्तः । तथाऽपीदं मतं स्वीकर्तुं बहव एव प्रतिबन्धा दृश्यन्ते । कृत्रिमपुत्रलक्षणकथनावसरे ' गुणदोषविचक्षणम ' इति वर्णनं दत्तम् । अर्थादेव कस्मिंश्चिदपि पुत्रे गुणदोषविवेचनसामर्थ्यं पञ्चमवर्षादूर्ध्वमेवोत्पद्येत । नन्दपण्डितैस्तु० पञ्चमवर्षात्प्राचि वयसि वर्तमानः सन्निरुक्तगुणदोषविचक्षणः पुत्रः कृत्रिमत्वेन स्वीकार्य इत्येवं स्वाभिप्रायोऽदायि । परंत्वेतद्बहुतरं दुर्घटं मन्ये । ( एतदर्थोपपत्तिस्तु मञ्जरीव्याख्यायां सुघटिता तत्र द्रष्टव्या ) । अन्यच्च कात्यायनवचने मनसि गृह्यमाणे सत्यानिच्छूनां दानप्रतिग्रहौ न करणीयाविति प्रतीयते । पञ्चमवर्षात्प्राक् पुत्रेच्छानिच्छयोरवगमो सुतरां दुर्घटः, अथ च तादृशपुत्रे तादृशेच्छानिच्छयोरुत्पत्तिरप्यसंभवनीया । तस्मात्कृत्रिमपुत्रोऽयं गुणदोषविवेचनक्षमे वयसि वर्तमानः स्वीकर्तव्यः । साधारणेन स्थूलमानेन पञ्चमवर्षानन्तरं शिशोरिच्छानिच्छयोरुत्पत्तिः संभवनीयाऽस्ति । तेन तादृशेच्छोत्पत्तेः प्रागेव दत्तकः स्वीकार्य इति सूचनविषये मनुकात्यायनवचनयोरभिप्राय इत्येवं कल्पनं युक्तं भवेत् । इमे कृत्रिमादयः पुत्रा औरसाभावे सर्वात्मना प्रतिनिधीभवितुमर्हा इत्येवं शास्त्र-

काराणामभिप्राय इति न मन्तव्यम् । इदं च भूमिकायां विशदीकृत्य प्रोक्तम् । कृत्रिमादिपुत्रस्वीकारः प्रतिग्रहीतृपितुः कार्यार्थी न भूत्वा स्वजनककुलादेतेन वा तेन वा केनचित्कारणेन भ्रष्टानां परिपालनाय संवर्धनाय च द्वितीययोग्यस्थलनिर्माणकरणोद्देशेन विशिष्टपुरुषेष्वाहत्याऽऽरोपिताऽवश्यकर्तव्यता वर्तते । तस्माद् यावत्पर्यन्तममुकैकवयःपर्यन्तं पुत्रः स्वजनककुलीयस्थानाद् भ्रष्टो भविष्यतीति मर्यादा निश्चयेन वक्तुमशक्या तावत्पर्यन्तं दत्तकेतरगौणपुत्रस्वीकारस्तेषां वयसोऽमुकवर्षपर्यन्तमेव कार्य इतीयत्ताकरणमपि न समीचीनं भवेत् । उदाहरणार्थं स्वयंदत्तपुत्रस्य लक्षणमेवं मनुनाऽभिहितम्—मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् । आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु स स्मृतः ॥ ( म० स्मृ० ९ । १७७ ) इति । एतद्वचनाद् यः पुत्रो मातापितृमरणेनाथवा ताभ्यां योग्यकारणं विना त्यागेनानाथः संजातः स स्वयमेव यदि कस्यचिदेकस्य निकटे स्वरक्षणात्मिकां भिक्षां याचेत तर्हि तेन सामर्थ्यसत्त्वे सा भिक्षा तस्मै दातव्या भवति । एतादृश एव प्रकारोऽपविद्धपुत्रस्यास्ति ( म० स्मृ० ९ । १७१ ) द्रष्टव्या । तस्मादेतादृशपुत्रस्वीकारः पञ्चमवर्षात्प्रागेव कर्तव्य इत्येवं नियमः कथमिव कर्तुं शक्येत । तादृशनियमावश्यकताया अपि काऽऽवश्यता ? । एतादृशपुत्राणां स्वीकारश्च प्रतिग्रहीतृपितृसंतानप्रवृत्त्यर्थं कर्तव्यो न भवति, किंतु यः स्वसंरक्षणं याचितुमागतस्तस्मै संरक्षणदानमात्मनः कर्तव्यमिति दृष्ट्यैव क्रियते । तत्संवर्धनमपि पुत्रवदेव कर्तव्यं भवति । ततोऽग्रे कैरपि कारणैः प्रतिग्रहीतृकुले एतत्पुत्रवन्निकटसंबन्धवर्ती अन्यः पुत्रो नास्तीत्येवं प्रसङ्गे सति योग्यसंरक्षणसंवर्धनेन प्रतिग्रहीतृपितृसदृशश्चेत्संजातस्तर्ह्यसावपि पुत्रः प्रतिनिधी भवितुं शक्नोति दायविभागाधिकारं लभते च । सोऽसौ पुत्रः कदाचिदग्रे प्रतिनिधी भविष्यतीत्येतावतैव तत्र पुत्रे दत्तकीयनियमानां संबन्धकरणमयोग्यं भवेत् । कानीनसहोढगूढोत्पन्नपौनर्भवप्रभृतिपुत्राणां तु प्रतिग्रहीतृपितुः कन्यया भार्यया वा संबन्धसत्त्वात्तेषां विषये पञ्चवर्षनियमविचारोऽपि कर्तुमशक्यः ।

नन्दपण्डिताः ' दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ' इति वचनं प्रमाणं मन्यन्ते । केवलं कृत्रिमपुत्रस्यैव ' दत्तपदं कृत्रिमस्याप्युपलक्षणम् ' एतद्वाक्येन संग्रहं कुर्वन्ति । ततश्चैतदितरगौणपुत्रस्वीकारोऽमुकवर्षात् प्रागेव कर्तव्य इतीदं तेषामभिप्रेतमिति कस्मादुच्यत इति चेत्—

अत्रोत्तरम्—सप्तविंशाङ्कगतप्रतीके कृत्रिमादिग्रहणमित्येवमादिग्रहणं कृतम् । अग्रे च पञ्चवर्षनियमस्य पौनर्भवपुत्रोऽपवादत्वेन निर्दिष्टः । ततोऽधिकमप्यग्रे परिग्रहविधिवर्णनसमये स्वयंदत्तापविद्धादिपुत्राणामपि परिग्रहविधिरभिहितः [ द० मी० पृ० १३४, १५८ ] इत्यादिलेखनात् कृत्रिमेतरसर्वगौणपुत्रेष्वप्ययं नियमः संबन्धनीय इति तेषामभिप्रायो लक्ष्यते । यत्त्वत्रेतः पर्यन्तं विवेचनं कृतं तत्केवलं कृत्रिमादिपुत्र-

विषये शास्त्रीयविचारान् प्रदर्शयितुमेव कृतम् । कारणं कृत्रिमदत्तकौ वर्जयित्वाऽन्ये कीदृशा अपि गौणपुत्रा अथ राजकीयन्यायमन्दिरैर्नामानिषत । कृत्रिमपुत्रोऽपि केवलं मिथिलायां तन्निकटवर्तिप्रान्तभागे चामानीति पूर्वमेवोक्तम् । तथैवास्मिन् पञ्चवर्षीयनियमेऽपि न्यायालयानां कीदृशी दृष्टिरितीदमेकादशाङ्कगतटिप्पन्यां स्पष्टं प्रदर्शितम् । सोऽसौ पञ्चवर्षीयनियमः केनचिदेकेनापि न्यायालयेन नाङ्गयकारि । बनारस, बंगाल, बिहार, ओरिसा, प्रभृतिषु सर्वत्र प्रदेशेषु त्रैवर्णिकानां न्यूनान्न्यूनमुपनयनपर्यन्तं दत्तकस्वीकारविषये राजाधिकारिभिर्मुक्तहस्तता स्वीकृता । इतरप्रान्तेषु त्वेतावत्यपि कठिनता नास्ति । कृत्रिमपुत्रविषये दशमाङ्कीयटिप्पन्याः सकाशादेवमवगतं भवेत्—यत्कृत्रिमः पुत्रः स्वीयज्ञानावस्थोत्पत्त्यनन्तरे वयसि ग्रहीतव्यो भवति. नाऽऽद्याविति । अर्थात् कृत्रिमपुत्रविषये नन्दपण्डितमतं न्यायालयैर्नाऽऽदृतम् । किंतु मनुवचनगते ' गुणदोषविचक्षणम् ' इत्यस्मिन् विशेषणे भरं दत्त्वा गुणदोषविवेचनसमर्थवयोवस्थावानेव पुत्रः कृत्रिमत्वेन स्वीकर्तुं शक्य इत्येवं सुनिश्चितम् ।

| पृ० | प० | सा० | प्रतीकम् । |
|---|---|---|---|
| १४० | १७ | [३०] | कीदृश इति निरूपितम् । इदानीं कथमिति निरूप्यत इति । |
| १४१ | ८ | [३१] | राजाऽत्र ग्रामस्वामीति । |
| १४९ | १० | [३३] | वसिष्ठस्तु प्रकारान्तरमाह—शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितारौ प्रभवतः । नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषामिति । |
| १५० | २ | [३४] | न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुरित्यादि । |
| १५३ | ३ | [३५] | धर्माय त्वा गृह्णामि संतत्यै त्वा गृह्णामीति । |
| १५४ | ८ | [३६] | परिग्रहविधिं विना गृहीतस्य विवाहमात्रं कार्यं न धनदानमित्यर्थ इति । |
| १६१ | २ | [३७] | तस्माद्दत्तकादिषु संस्कारनिमित्तमेव पुत्रत्वमिति सिद्धम् । दानप्रतिग्रहहोमाद्यन्यतमाभावे तु पुत्रत्वाभाव एवेतीति । |

अत्र द्वात्रिंशमङ्कं वर्जयित्वा त्रिंशाङ्कमारस्य सप्तत्रिंशाङ्कपर्यन्तं सप्ताङ्का विचारार्हाः । तस्माद्दत्तकादिषु संस्कारनिमित्तमेव पुत्रत्वमिति सिद्धम्, इत्येवं नन्दपण्डिताः सिद्धान्तयन्ति । परंत्वतीतटिप्पन्यामुक्तवदिदं तेषां मतमितरगौणपुत्रेषु न संबध्यते । यतो दत्तकक्षेत्रजयोर्याज्ञवल्क्यादिभिरौरसपुत्रप्रतिनिधित्वमवस्थातुं

शक्नोति तावद्भिरंशैस्तदितरगौण पुत्रेषु नावस्थितं भवति । दत्तकेऽपीदं पुत्रत्वं कथमुत्पद्यतेऽयमेकः प्रश्न एवाऽऽस्ते । यस्य जनकमातापितरौ भिन्नौ, तस्मिन्पुत्रे प्रतिग्रहीतृपितृनिरूपितं पुत्रत्वं कदाऽप्युत्पत्तुं शक्यं भवेद्वा ? । औरसपुत्रे स्ववंशपरम्पराविच्छित्तिसमाजकार्यप्रभृतीनि कर्तव्यानि पूर्ववदखण्डितं प्रवृत्तानि भवेयुरित्येवं तदावश्यकता शास्त्रेण निहिता । यैव व्यक्तिः पुत्रत्वलक्षणान्विता तव्द्यक्तेर्हस्तेनैवैतानि कर्तव्यानि पारं नेतव्यानीति शास्त्रस्याभिप्रायोऽस्ति । सत्येवं या व्यक्तिरन्यबीजक्षेत्रोत्पत्तेर्हेतोः पुत्रत्वलक्षणाक्रान्ता न भवति तादृशव्यक्तिद्वारा निरुक्तकर्तव्यानि कथमिव संपादनीयानीति चेत् ।

उच्यते—येन शास्त्रेणोपर्युक्तधर्मकार्याणां संपादनस्याऽऽवश्यकता पुत्रे निक्षिप्ता तेनैव शास्त्रेणौरसपुत्राभावे सति कस्यचिच्छास्त्रीयस्य दत्तकपुत्रत्वेन स्वीकारं कृत्वा तद्द्वारा वंशपरम्परासमाजकार्यमातल्यप्रभृतीनि घटयितव्यानीत्ययं पर्यायः समसूचि । एतस्य पर्यायस्य शास्त्रविहितत्वात्तदनुष्ठाने प्रसक्ते तदनुकूलत्वेन ये विशेषविधयः प्रोक्तास्तेषामाचरणं यथाशास्त्रं निर्भीकतया करणीयमेव ।

वैदिकमन्त्रेषु किंचिदेकं विलक्षणं सामर्थ्यं समस्ति । तद्यथा—मन्त्राणां विनियोगाः श्रुतौ प्रोक्ताः । तदनुसारेण तत्तत्कर्मणि तत्तत्प्रसङ्गे विनियोगे कृते शास्त्रोद्दिष्टमदृष्टमपि फलं तत्तत्कर्मान्ते लभते मनुष्यः । उदाहरणम्—धातुमय्या मृन्मय्या वा प्रतिमाया वैदिकमन्त्रपाठपूर्वकं प्रतिष्ठायां कृतायां तत्र मन्त्रबलान्मृन्मयीत्वादिभावनाऽपगत्य देवत्वाविर्भावात्स्वोद्दिष्टदेवताभावना जायते । अत एव तत्र गन्धपुष्पादिभिः पूजां कुर्वन्ति । किं बहुना, यदि केनचिन्नास्तिकयात्तत्राशुद्धं ष्ठीवनादिकं क्रियतेऽथवा तन्मूर्तेर्भङ्गो वा नष्टीयते तदा सर्वे जनास्तस्मायशुद्धकारिणे कुप्यन्ति । अथ चानेनास्माकं हिन्दूनां पूज्या धर्मभावना दुःखवत्यः कृता इति राजद्वारे विनिवेद्य महता द्रव्यव्ययेण विवादं लिखित्वा राजपुरुषैस्तं दण्डयन्ति कारागृहे वा विनिवेशयन्ति । इदमेव हि वैदिकमन्त्रबलात्तत्र देवतासांनिध्यं जातमित्येतद्विषये प्रबलं प्रमाणमिति ब्रुवे । इतरथैतत्त्र स्थले तथा कृते किमिति तथा न कुर्वन्ति जनाः । एतद्वद्विवाहे कन्यादानादनन्तरं विवाहहोमसप्तपद्यादिकर्मसु विनियुक्तवैदिकमन्त्रसामर्थ्यादेव तस्यां कन्यायां भार्यात्वमुत्पद्यते नान्यथा । तथा मृतपितॄणां प्रेतत्वनिवृत्तिः पितृलोकप्राप्तिश्च सपिण्डीश्राद्धविधौ विनियुक्तवैदिकमन्त्रोच्चारणसामर्थ्याज्जायते । तथैव दत्तकविधौ निर्दिष्टेष्वङ्गप्रधानविधिषूक्तकाले वैदिकमन्त्रोच्चारपूर्वकमनुष्ठितेषु दानपूर्वकगृहीते पुत्रे प्रतिग्रहीतृनिरूपितपुत्रत्वं समुत्पद्यते । अतः कारणाद्दत्तकविधिप्रयोगार्थज्ञानसंपादनमावश्यकम् ।

( ३३ ) ( ३४ ) ( ३५ ) अङ्कगतटिप्पणीषु दत्तकविधिः सारांशरूपेणाऽऽगतः । पूर्णतया तज्ज्ञानसंपादने मूलग्रन्थ एव द्रष्टव्यः । प्रथमत इत्थं प्रत्यपादि—यस्मात्पुत्रोऽयं मातापितृभ्यामुभाभ्यां समुत्पद्यते तस्मात्तस्मिन् पुत्रे तयोरुभयोः

सत्ताऽबाधिताऽऽस्ते । तेन पुत्रस्य दान--विक्रय--परित्यागविषये मातापितरावेवो-भौ समर्थौ स्तः । दानं नाम दत्तकविधिना दानम् । वसिष्ठवचने दानसाहित्येन विक्रयपरित्यागयोरुपादानेऽपि तद्विषये तद्वचनस्याबाधितं प्रामाण्यं न मन्तव्यम् । विक्रयपरित्यागयोरन्यप्रसङ्गेनोल्लिखितत्वात् । एक एव पुत्रः स्याच्चेत्तदा मातापित्रोरपि पुत्रदानाधिकारो नश्यति । यतो यस्या वसिष्ठस्मृतेः प्रामाण्यान्मातापित्रोः पुत्रदानाधिकारः प्राप्नोति सैव स्मृतिस्तयोरतमधिकारं निवर्तयति । स्त्रीणामपि पत्यनुज्ञासाहित्येन मर्यादितोऽधिकारो वसिष्ठेनैव दत्तः । संप्रति न्यायालयानामेतद्विषये कीदृशा निर्णयाः सन्ति तदूहापोहस्तृतीयाङ्कगतटिप्पन्यां कृत एव ।

सर्वे बान्धवाः स्वज्ञातयो राजपुरुषाश्च दत्तकमहोत्सवप्रसङ्गेनाऽऽमन्त्रयितव्याः । तदनुसारेण तैरपि तदोपस्थातव्यम् । सुमुहूर्ते दिवसे पुत्रस्य दातारं दात्रीं वाऽऽगत्य पुत्रं देहीहि प्रतिग्रहीत्रा ऋत्विग्द्वारा याचना कर्तव्या । दात्रोपस्थितसर्वसमक्षं पुत्रदाने कृते प्रतिग्रहीत्रा स्वीकारपूर्वकं तं पुत्रं स्वगृहमानीय दत्तकपरिग्रहाङ्गहोमादि सर्वं तन्त्रं कृत्वा ऋत्विजो बान्धवाश्च दक्षिणाभिर्भोजनदानेन चान्ये संतोषयितव्या इत्येवं संक्षेपतो दत्तकपरिग्रह इतिकर्तव्यता वर्तते । तत्राऽऽदौ तत्पुत्रनिष्ठं जनकपितुः स्वाम्यं नश्यति प्रतिग्रहीतृपितुः स्वाम्यं च तत्रोत्पद्यते । अनन्तरं प्रतिग्रहीतृनिरूपितं पुत्रत्वं गृहीते जायते गृहीतपुत्रनिरूपितं पितृत्वं च प्रतिग्रहीतरि जायते । एतत्सिद्ध्यर्थं च दानप्रतिग्रहहोमाश्चाऽऽवश्यकाः । एतेषां त्रयाणां विधीनां मुख्यत्वाद्येषां मध्य एकोऽपि न जायेत तर्हि गृहीते पुत्रत्वमनुत्पद्य स पुत्रः प्रतिग्रहीतृकुले ( जनककुले वा ) दासो भवेत् । यदि दानं न जातं स्यात्तर्हि तत्पुत्रनिष्ठं जनकपितुः स्वाम्यं न नश्येत् । प्रतिग्रहो न जायेत चेत् प्रतिग्रहीतुः स्वाम्यं तत्र नोत्पद्येत । यदीदं विधिद्वयं नानुष्ठीयते चेदग्निमाद्धोमादिकादनुष्ठितात्र कियानपि लाभः स्यात् । यतः प्राचीनविधिद्वयाभावेऽग्निमहोमादेः फलजनकत्वाभावेन पुत्रत्वं तत्र सुतरां नोत्पद्येत । दानप्रतिग्रहावनुष्ठाय यदि दत्तकपरिग्रहाङ्गहोमादिर्न क्रियते चेत् तस्य पुत्रस्य प्रतिग्रहीतृकुले दासत्वेनावस्थानं भवेत् । यथैव पाणिग्रहणविधौ दानं प्रतिग्रहो विवाहहोमसप्तपद्यादि चैतत्त्रयं कन्यायां भार्यात्वोत्पत्तयेऽत्यन्तावश्यकं तद्वदेव दत्तकपुत्रविधौ दानप्रतिग्रहहोमाः सुतरामावश्यकाः । एतदभाव एकत्र भार्यात्वमपरत्र च प्रतिग्रहीतृपुत्रत्वं नतरां शक्यसंभवम् । सत्येवं न्यायालयैर्विवाहमध्ये दानप्रतिग्रहविवाहहोमादीन्यावश्यकत्वेन परिगणितानि, परंतु दत्तकविधौ दानप्रतिग्रहावेवाऽऽवश्यकत्वेनाऽऽदृतौ ( शशीनाथ वि० कृष्णसुंदरी ७ इं० अ० २५० ) । समानगोत्रीयदत्तकविषये च तयोरप्यपेक्षा नास्तीति निर्णयो दत्तः ( बाल गंगाधर टिळक वि० श्रीनिवासपंडित ४२ इं० अ० १३५ ) । मद्रासीयमहान्यायालयेन तु प्राचीने विवादनिर्णयस्थलद्वयेऽसगोत्रीयदत्तकविषयेऽपि होमादेर्नाऽऽवश्यकतेति निरणायि ( सिंगम्मा वि० व्यंकटाचार्लू ४

मद्रासहा० को० १६५, चंद्रमाला वि० मुक्तामाला ६ मद्रास २० ) । अहलाबादीयमहान्यायमन्दिरे सोदरभ्रातुः पुत्रोऽथवा तद्व्यतिरिक्तः संनिहितः सपिण्डो दत्तकत्वेन परिगृह्येत चेद्दक्षिणीयब्राह्मणेषु दत्तकहोमस्य नापेक्षेति निर्णयः प्रकाशितः ( आत्माराम वि० माधवराव ६ अलाहाबाद २७६ ) । मोहमयीयमहान्यायालयेन कान्यकुब्जब्राह्मणेषु भिन्नगोत्रीयदत्तकविषये दत्तकपरिग्रहाङ्गहोमस्याऽऽवश्यकताऽस्तीति मान्यं कृतम्—( गोविंदप्रसाद वि० इंदाबाई ४९ मुंबई ५१५ ) । सांप्रतं मद्रासीयमहान्यायमन्दिरेण प्राचीनकाले जातो निर्णयः ( दत्तकविषये होमानावश्यकतारूपः ) न सामीचीन्यमावहतीति केषुचिन्निर्णयप्रसङ्गेषु प्रदर्शितम् ( सुब्बाराय वि० सुब्बामल २१ मद्रास ४९७ ) ।

दत्तकपरिग्रहप्रसङ्गे राज्ञस्तत्प्रतिनिधेर्वा यदामन्त्रणं क्रियते न दत्तकविध्यङ्गम् । यदि नाऽऽमन्त्र्यते, आमन्त्रितोऽपि न संनिधानं करोति तदा दत्तकविधेर्न कियत्यपि न्यूनता प्रसज्जते, स तु परिपूर्ण एव । बाधितो न भवतीति यावत् । किंतु यत्कुलं राज्ञा कस्मिंश्चिदधिकारे नियुक्तं तदर्थं च तत्कुले वंशपरम्परयोपभोगार्थं भूम्यादिकं दत्तं तादृशे कुले राजदत्ताधिकारप्रवृत्तिसातत्यार्थं यदि दत्तकग्रहणं प्रसज्येत्तदा राजसंमत्यैव तत्संपादनीयम् । तर्ह्येव राजदत्ताधिकार उपभोगार्थं दत्तं च भूम्यादिकं पूर्ववत् तस्मिन्कुलेऽवस्थितं भवेत् । राजाज्ञां विना गृहीतस्य दत्तकस्य स्वाम्ये तद्भूम्यादिकं राजा पूर्ववदवस्थापयेदेवेति न नियमः । इदानीमपि यानि कुलानि राज्ञः सकाशाल्लब्धं भूम्यादिकं वंशपरम्परयोपभुञ्जन्ति तेषु कुलेषु दत्तकग्रहणार्थं कदा कदा राजसंमतिरवश्यं संपादनीया भवतीति सर्वत्राऽऽलक्ष्यते ।

दत्तकविधौ दानप्रतिग्रहहोमकर्तव्यतासंबन्धेन ये न्यायालयीयनिर्णया नानाप्रदेशीयाः प्रोक्तास्ते त्रैवर्णिकसंबन्धिनो ज्ञेयाः । शूद्रेषु तु केवलदानप्रतिग्रहाभ्यामेव दत्तकः सिध्यतीति न्यायालयानां स्पष्टोऽभिप्रायः । शूद्रैः पुराणोक्तेन विधिना दत्तकविध्यङ्गो होमोऽनुष्ठेय इति नन्दपण्डिताभिप्रायो भवेत् ।

यस्मिन् पुत्रेष्टियागे नन्दपण्डितानां कटाक्षो दृश्यते स याग आवश्यक इति न्यायालयैर्न कदाऽपि गृहीतं ध्रियते स्म । नन्दपण्डितमतप्रक्रियानुसारेण यस्यान्नप्राशनान्ताः संस्कारा जनककुले जाताः स्युस्तादृशपुत्रे दत्तकत्वेन गृहीते सत्यादौ पुत्रेष्टियागमनुष्ठाय ततो जातकर्माऽऽरभ्याग्रिमाः संस्काराः प्रतिग्रहीतृकुलेऽनुष्ठातव्याः ।

| पृ० | प० | सा० प्रतीकम् । |
|---|---|---|
| १४६ | ३ | [३२] अत्रापि भागिनेयपदं पुत्रासदृशानां सर्वेषामुपलक्षणं विरुद्धसंबन्धस्य समानत्वात् । |

शौनकवचनस्थ ' पुत्रच्छायावहं ' इतिपदसंबन्धि नन्दपण्डितकृतव्याख्यानमुपर्युक्तग्रन्थे दत्तं दृश्यते । शौनकमतमीदृशम्—ग्राह्यः पुत्र ईदृशो भाव्यः । यत्पश्यतामौरस-

पुत्रप्रतिमैवायमिति भासेतेति । अर्थात् यस्मिन्नौरसपुत्रोऽयमिति बुद्धिरनायासेनोत्पद्येत । नन्दपण्डिता ब्रुवन्ति—' पुत्रच्छाया पुत्रसादृश्यम् । तच्च नियोगादिना स्वयमुत्पादनयोग्यत्वम् ' इति । यया स्त्रिया सह शास्त्रीयमार्गेण नियोगः संभवेत्तादृशस्त्रियि उत्पन्नः पुत्रो दत्तको ग्राह्यः । एतन्नियमानुसारेणापि भ्रातृपुत्रोऽयं सर्वेषु मुख्यो भवति । सोदरभ्राता, पितृव्यः, मातुलः, दौहित्रः, भागिनेयश्चेत्येते च व्यावर्त्यन्ते । यतस्तेषां मातृषु ग्राहकाणां भ्रातृपितृव्यपुत्रभागिनेयमातामहादीनां नियोगस्य कदाऽपि शक्यत्वाभावात्तेषां पुत्रसादृश्यप्राप्तेः सुतरामसंभवः । विवाहेऽप्ययं विरुद्धसंबन्धः परित्यक्तव्यो भवति । उदाहरणम्—स्वपत्नीभगिन्याः कन्या स्वस्य दुहितृस्थानीयेति कृत्वा सापिण्ड्याभावेऽपि स्वस्य भार्या भवितुं नार्हति । तथा पितृव्यपत्न्या भगिनी, पितृव्यपुत्रस्य मातृस्थानापन्नेति सा तस्य भार्या भवितुं सर्वथैवानुचिता । तथैव यया स्त्रिया सह तद्विवाहात्पूर्वं स्वविवाहः संभवति, अथवा विवाहानन्तरं स्वनियोगस्तया सह शक्यः स्यात्तादृशस्त्रियाः सकाशाज्जात एव पुत्रः स्वेन दत्तकत्वेन ग्रहीतुं निर्वर्तनीयः ( निरडावा ) इत्येवं दत्तकमीमांसाकाराणामभिप्रायो वर्तते । ' पुत्रच्छायावहं सुतम् ' इति शौनकोक्तिस्तस्याऽऽधारोऽस्ति । एतत्संबन्धेन न्यायालयानां कीदृशोऽभिप्राय इत्येकादशाङ्कीयटिप्पन्यां द्रष्टव्यम् । पत्न्या यद्दत्तकग्रहणं क्रियते तन्न स्वार्थं, किंतु मृतस्वीयभर्त्रर्थमेव । ततश्च तस्याः स्त्रियाः शैशवावस्थायां येन पुरुषेण सह स्वविवाहो घटयितुमशक्योऽथवा विवाहानन्तरं येन सह स्वनियोगः सर्वथाऽशक्यसंभवस्तादृशपुरुषस्य पुत्रस्तया स्त्रिया दत्तकत्वेन नैव ग्राह्य इत्येवं नियमो निर्मातुमशक्यः । यं पुत्रं ग्रहीतुं तद्भर्तुर्न कोऽपि प्रतिबन्ध आसीत्तं पुत्रं भर्तृमरणानन्तरं ग्रहीतुं तस्याः स्त्रियाः कोऽपि प्रतिबन्धो भवितुं नार्हेत् । अत एव मृतभर्तृकया कयाचित्स्त्रिया स्वभ्रातुष्पुत्रो दत्तकत्वेन गृहीतश्चेत्तर्हि स राजनियमानुसार्येव( कायदेशीर ) स्यात् ( जयसिंग वि० विजयपाल २७ अलाहाबाद ४१७ ) ।

| पृ० | पं० | सा० | प्रतीकम् |
|---|---|---|---|
| १६३ | ९ | [३८] | एतेन पुत्रत्वापादकक्रिययैव दत्रिमस्य प्रतिग्रहीतृधने स्वत्वं तत्सगोत्रत्वं च भवति । दातृधने तु दानादेव पुत्रत्वनिवृत्तिद्वारा दत्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यत इति चन्द्रिकाकार इति । |
| २५२ | ४ | [४३] | अथ दत्तकविभागः । तत्र वसिष्ठः—तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति । तदभावे तु सर्वहर इति । |

उपरितो प्रतीकद्वये नन्दपण्डितानां दत्तकपुत्रस्य धनाधिकारविषयकाणि मतानि निर्दिष्टानि । अतः प्रतीकद्वयस्यैकत्रैव व्याख्यानं युक्तं मन्ये ।

गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ एतस्मान्मनुवचनाद्दत्तकपुत्रे जनकपितुर्गोत्रधनपिण्डाधिकाराणां व्यावृत्तिर्भवतीति प्रतीयते । तेन दत्तकः पुत्रः स्वजनककुलीयस्य कस्यापि धनग्रहणाधिकारी न भवतीति सिद्धम् । अथ च ' तस्मिञ्जाते सुते दत्ते न क्रुते च विधानके । तत्स्वं तस्यैव वित्तस्य यः स्वामी पितुरञ्जसा ॥ एतद्वृद्धगौतमवचनात्, तथा--दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥ एतद्बृहन्मनुवचनात्, तथा-' न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ' ( म० स्मृ० ९ । १८५ ) इत्यादिमनुवचनाच्च दत्तकपुत्रे प्रतिग्रहीतृगोत्रधनयोः संबन्ध उत्पद्यते । एतद्विषये शङ्काग्रहणस्यावसर एव नास्ति । यतो दत्तकपुत्रग्रहणसंबन्धेन योऽयं महान्प्रयासोऽङ्गीकृतः स आत्मनः पश्चात्स्वौर्ध्वदेहिकाधिकारी स्वधनग्रहणाधिकारी च कश्चित्स्यादित्यर्थमव । दत्तकविधिश्च शास्त्रसिद्धः । एतावतैव दत्तकपुत्रः प्रतिग्रहीतृपितुर्गोत्ररिक्थे गृह्णातीति स्पष्टं भवति ।

आधुनिकन्यायालयैरपि राजनियमानुसारिदत्तकविधानादनन्तरं सोऽयं दत्तकपुत्रो जनकपितृकुलात् पुनरावृत्तिरहित निवृत्तो भवति, प्रतिग्रहीतृकुले च तथैव प्रविशति चेति निर्णयोऽदायि । जनककुले स यद्येकत्रकुटुम्बगत एको घटकावयवः स्यात्तर्हि तादृशकुटुम्बवर्तिन्येका व्यक्तिर्गतेति कृत्वा तस्य यावन्तो धनाद्यधिकारा प्राप्तुं योग्या आसन् ते सर्वेऽधिकारास्तस्य नष्टा भवन्ति । तथैव प्रतिग्रहीतृकुल औरसपुत्रवदेव तस्य व्यावहारिकाधिकाराः ( हक्क ) शास्त्रीयाधिकाराश्च समुत्पद्यन्ते । अर्थात्स स्वप्रतिग्रहीतृपितुर्धनग्रहणाधिकारी भवति । नैतावदेव, किंतु पितामहप्रपितामहयोरपि धनं दत्तकपुत्रो लब्धुं शक्नुयात् । तथैव प्रतिग्रहीतृपितुर्भ्राता वा पितृव्यो वा विभक्तश्च सगोत्रसपिण्डो वा कश्चित्स्याच्चेत्तन्मरणानन्तरं तद्धनग्रहणाधिकारो दत्तकस्यौरसपुत्रवदेवास्ति ( पद्माकुमारी वि० कोर्ट ऑफ़ वॉर्ड्स् ८ इं० अ० २२९ ) । प्रतिग्रहीत्री या माता तस्या अयं दत्तकः पुत्र एवेति कृत्वा तत्स्त्रीधनविषयेऽप्ययं दत्तकोऽधिकारी भवेत् । नैतावदेवापि त्वेकस्मिन् विवादनिर्णयदानप्रसङ्ग एवं निरणायि-यदि दत्तकविधानसमये प्रतिग्रहीत्रा एका भार्या, इयं दत्तकमातेत्यभिप्रायेण स्वसमीप उपवेशिता, ततः प्रथमभार्यामरणानन्तरं द्वितीयभार्यायाः सकाशादेक औरसपुत्रः संजातः, अग्रे द्वितीयभार्यामरणानन्तरं तेन तृतीयभार्या कृता, तदनन्तरं तृतीयभार्याऽपि यदा मृता तदा तृतीयभार्याया दत्तक औरसश्चेत्युभौ सापत्नपुत्रावित्यवगम्योभयोरपि तादृशस्त्रीधनस्य समानांशग्रहणाधिकारित्वं सुनिश्चितमकारि ( गंगाधर वि० हिरालाल ४३ कलकत्ता ९४४ ) । तथैव प्रतिग्रहीत्र्या मातुः पितुर्वा तद्भ्रातुर्वाऽन्यस्य कस्यापि मातामहकुलीयस्य

वा धने दत्तकपुत्रोऽयं बन्धुत्वसंबन्धेनाधिकारी भवेत् । अथ च तेऽप्यस्य दत्तकस्य धनग्रणाधिकारिणो भवेयुः ( दत्तात्रय वि० गंगाबाई ४६ मुंबई ५४१ ) । नैतावदेव, तर्हि केनचिदेकेन पुरुषेण स्वभार्यामरणानन्तरं दत्तकः पुत्रो गृहीतश्चेत्स तस्या मृतभार्यायाः पुत्र इति विज्ञायते । अथ च मृतभार्यापितृकुलीयानां संबन्धिनां ( नातलग ) धनादि, तद्बन्धुरयं दत्तक इति हेतोर्दत्तकनिकटे दायाधिकारित्वेन रूपेणाऽऽगन्तुं शक्यते ( सुंदरम्मा वि० व्यंकटसुब्बा ९ मद्रास ९४१ ) । केनचिदेकेन स्वविवाहभवनात्प्राग्दत्तकः पुत्रः स्वीकृतोऽनन्तरं च स्वविवाहः कृतः, तस्यां भार्यायां यदि तस्मादौरसपुत्रो नैवोत्पद्येत तर्हि साऽपुत्रा भार्या तस्य दत्तकपुत्रस्य पालकमातेति गृहीतं धर्तुं न कोऽपि प्रतिबन्धोऽस्ति । कस्यचिदेकस्यैकापेक्षयाऽधिका भार्याः स्युरथ च दत्तकविधिसमये स यां भार्यां स्वसंनिधौ गृह्णीत्तस्या एव तादृशपुत्रनिरूपितं मातृत्वं मातृत्वप्रयुक्ताधिकाराश्च प्राप्नुवन्ति, ततः पालकपितृमरणानन्तरं स दत्तकपुत्रः पालकपितुर्धनग्रहणे पूर्णाधिकारी संजातस्तथाऽपि दत्तकपुत्रमरणानन्तरं तद्धनं सर्वं, तदितरमातृद्वये जीवत्यपि या दत्तकविधानकाले पालकमातेत्युद्देशेन पालकपित्रा स्वसंनिधावुपवेशिताऽभूत्तदधीनमेव जायते । इतरमातृद्वयस्यान्नवस्त्रव्यतिरिक्तं मृतदत्तकपुत्रधने कियानप्यधिकारो नास्ति ( अन्नपूर्णा वि० फोर्ब्स २६ इं० अ० २४६ ) । यदि दत्तकविधानकाले काऽप्येकाऽपि भार्या स्वसंनिधौ नोपविशिताऽभूत्तर्हि तस्य ज्येष्ठभार्या दत्तकमातेति विज्ञायेत, सैव च मृतदत्तकपुत्रधनं सर्वं गृह्णीयादेव ।

जनककुले पितृधनविभागस्य जातत्वाद्येन स्वांशः स्वायत्तीकृतः स यदि कस्यचिद्दत्तकपुत्रः संपन्नस्तर्हि पूर्वमेव स्वायत्तीकृतधनगतं तत्स्वाम्यं ‘ दत्तकपुत्रत्वं गतः ’ इत्यस्मात्कारणान्नैव नश्यति ( महाबळेश्वर वि० सुब्रह्मण्य ४७ मुंबई ५४२ ) । मद्रास—कलकत्ताप्रदेशे मान्यतयेत्थं गृहीतम्—यदि कस्मिंश्चिदेकस्मिन् कुटुम्बे( कुले ) एक एव पुरुष उर्वरित इति हेतोस्तत्कुटुम्बीयाः सर्वे धनांशाः, अवशिष्टैकपुरुषस्वाम्यं प्राप्ताः, तदनन्तरं स पुरुषो यदि दत्तकत्वेनापरकुले दत्तस्तर्ह्यपि जनककुलीयसर्वधनांशगतं तत्स्वाम्यं न नष्टं भवति ( व्यंकटनरसिंह वि० रंगय्या २९ मद्रास ४३७, श्यामचरण वि० श्रीचरण ५६ कलकत्ता ११३५ ) । परंतु मोहमयीयन्यायालयेनैवं गृहीतं धृतम्—यत्पूर्वोक्तायां परिस्थितौ सत्यां जनककुलीयधनांशगतमवशिष्टैकपुरुषस्वाम्यं नष्टं भूत्वा तादृशपुरुषस्य तत्कुटुम्बसंबन्धिनो विभक्ता दूरस्था ये सपिण्डसोदकादयस्तेषां निकटे तद्धनस्वाम्यं गच्छेदिति ( दत्तात्रय वि० गोविंद ४० मुंबई ४२९ ) ।

दत्तकत्वेन परगृहे प्रवेशे सति तस्य दत्तकस्य जनककुलेन सह विद्यमानः सर्वः संबन्धस्त्रुट्यतीत्युपर्युक्तम् । मोहमयीमहाप्रदेशमण्डले ( मुंबई इलाखा )

विवाहितोऽपि दत्तको भवितुमर्हति । एतादृशस्थले विवाहितस्य यदि काचित्संततिः स्याद्दत्तकीभवनात्प्राग्जाता, तर्हि सा जनककुल एवावतिष्ठते । तस्याः संततेर्जनककुलीयं गोत्रं न नश्यति । दत्तकत्वेन प्रवेशानन्तरं या संततिः स्यात्, अथवा दत्तकभार्यायां कुक्षिस्थो गर्भः स्यात् स च दत्तकत्वेन प्रवेशानन्तरं जन्म प्राप्नुयात्, साऽसौ संततिः, दत्तकभार्या चेत्येते सर्वे दत्तकेन सह प्रतिग्रहीतृकुले प्रविशन्ति ( कलगौडा, वि० सोमप्पा ३३ मुंबई ६६९, अदिवी वि० फकिराप्पा ४२ मुंबई ५४७ )।

इतःपर्यन्तं प्रतिग्रहीतृपितुः प्रतिनिधिरूपो दत्तकाख्य एक एव पुत्रः स्यात्तदा तत्पुत्रस्य स्थानाधिकारयोश्चर्चा वर्यत्रसन्ना । अधुना दत्तकग्रहणानन्तरं प्रतिग्रहीतुर्यद्यौरससंततिः स्यात्तर्हि दत्तकस्य कीदृशोऽधिकार इति विचारणीयं भवति। तत्रैवं वसिष्ठः—' तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तकः ' इति । पश्चादुत्पन्नौरसपुत्रसद्भावे पूर्वगृहीतदत्तकस्य स्वधनचतुर्थो भागो देय इति तदर्थः । परंतु ' चतुर्थभाग 'इतिशब्दाद् भिन्नभिन्नप्रदेशेषु भिन्नभिन्ना निर्णया अद्यायिषत । बंगालप्रान्ते दायविभागग्रन्थमनुसृत्य दत्तकपुत्रोऽयं ( $\frac{१}{३}$ ) एकतृतीयांशाधिकारी, औरसश्च ( $\frac{२}{३}$ ) तृतीयांशद्वयाधिकारीति निर्णीतम् । बनारसप्रान्त औरसः पुत्रः ( $\frac{३}{४}$ ) त्रींश्चतुर्थांशान् लभते, दत्तकस्त्वेकं चतुर्थांशम् ( $\frac{१}{४}$ ) । मोहमयीमद्राख्यप्रान्तयोरौरसः ( $\frac{४}{५}$ ) चतुरः पञ्चमांशान् गृह्णाति, दत्तकश्च ( $\frac{१}{५}$ ) एकं पञ्चमांशम् ( गिरीयप्पा वि० निंगप्पा १७ मुंबई १०० ) अय्यवू० वि० नीलकी १ मद्रास हा० को० ४५ ) । सोऽयं विभागविचारस्त्रैवर्णिकसंबन्धेन जातः । शूद्रस्य दत्तकग्रहणानन्तरमौरसे जाते बनारसमद्रासबंगालैतत्प्रान्तेषु दत्तकौरसपुत्रयोरुभयोः समानो धनविभागो भवति ( पीरजू वि० सुब्बाराय ४८ इं० अ० २८० ) असित वि० निरोध २० कलकत्ता वी० नी० ९०१ ) । मुंबईप्रान्ते तु शूद्रसमाजमध्येऽपि त्रैवर्णिकवच्छूद्रीयदत्तकपुत्रस्यापि ( $\frac{१}{५}$ ) एकः पञ्चमांशो वण्टको लभ्यते ( $\frac{४}{५}$ ) चतुरः पञ्चमांशान् पश्चादुत्पन्न औरसो लभते ( तुकाराम वि० रामचन्द्र ४९ मुंबई ६७२ ) । दत्तकग्रहणादनन्तरमेक एवौरसश्चेदियं व्यवस्था । परमेकापेक्षयाऽधिका औरसाः स्युश्चेदुपर्युक्तवच्छेषां विभागैर्भाव्यम् । उदाहरणम्—बंगालप्रान्तीयस्यैकस्य गृहस्थस्य दत्तकग्रहणादनन्तरं द्वावौरसपुत्रावुत्पन्नौ चेत् समग्रपितृधनस्य समान् सप्तविभागान् प्रकल्प्य तन्मध्ये ( $\frac{१}{७}$ ) एकः सप्तमांशो दत्त-

केन ग्राह्यः । अवशिष्टानां षण्णां सप्तमांशानां मध्ये प्रत्येकमौरसेन $(\frac{३}{७})$ $(\frac{३}{७})$ त्रयस्त्रयः सप्तमांशा ग्राह्याः । एवंप्रकारिका द्रव्यविभक्तिर्जायेत । मोहमयीमध्ये यद्ययं निरुक्तः प्रकारो घटित्वाऽऽगतश्चेत् । $(\frac{१}{११})$ एक एकादशांशो दत्तकाय दत्त्वा द्वाभ्यामौरसाभ्यां प्रत्येकं पञ्च पञ्च एकादशांशाः $(\frac{५}{११}, \frac{५}{११})$ ग्राह्या भवेयुः।

सोऽयं सर्वो धनव्यवस्थाविचारः १९३८ सनीयात् हिन्दुस्त्रीणां धनग्रहणाधिकारविषयकाद्राजनियमप्रबन्धात् प्राक्कालिकत्वेन संजातः। तादृशनियमप्रबन्धस्य राजसंमतिलाभादनन्तरमिदानीमत्र विषये बहवो विशेषाः प्रकल्प्याः स्युः । तेषां सामान्यतः स्वरूपं यथा—तादृशनियमप्रबन्धस्य राजसंमतिप्राप्त्यनन्तरमधुना हिन्दुस्त्रीणां पुत्रसद्भावेऽपि पत्युर्धनविषये पुत्रसमाः, यावत्पुत्राधिकारं पुत्राभावे भर्तृसमा यावद्भर्त्रधिकारमधिकारा अदायिषत । ततश्च यद्येकेन केनचिदहमपुत्रोऽस्मीति मत्वा दत्तको गृहीतस्तर्हि प्रतिग्रहीतृमरणानन्तरं सर्वं तद्धनं दत्तकपुत्रस्य न लब्धं भविष्यति । अपि त्वर्धं धनं दत्तकस्यार्धं च भार्याया लब्धं भविष्यतीत्यर्थः । यद्यनेका भार्याः स्युस्तदा तदर्धं द्रव्यं समं विभज्य सर्वाभिग्राह्यम् । सोऽयमधिकार इतरेषां स्वसंबन्धिनां धनग्रहणविषये नास्तीत्यतो यदि दत्तकस्य प्रतिग्रहीतृभ्रातुः सकाशाद्दायविभागो लभ्येत तर्हि तादृशधने विधवाया मातुर्न कियानप्यधिकारः ।

सोऽयमीदृशोऽधिकारो राजन्यायालयप्रणीतनियमानुसारेण न केवलं पुरुषस्यैव विधवाया स्त्रिया दत्तोऽपि तु तदीयमृतपुत्रस्य विधवायाः स्त्रियाः, मृतपौत्रस्य विधवास्त्रियाश्च दत्तोऽस्ति । ततश्च तेषां धनग्रहणाधिकारा अपि विचारेऽवश्यं ग्राह्याः स्युः । तथैव दत्तकग्रहणानन्तरमौरस उत्पन्ने सति दत्तकस्य धनग्रहणाधिकारा न्यूना भवन्ति । प्रतिग्रहीतुर्विधवा स्त्री जीवन्ती स्याच्चेत् दधिकाराणां यावत्पुत्राधिकारत्वनियमाद्दत्तकपुत्रस्याधिकाराः पूर्वापेक्षयाऽप्यधिकं न्यूना भवेयुरिति स्पष्टमस्ति ।

दत्तकपुत्रः समानश्चेत्तेन सह कंचिन्नियमबन्धं कृत्वा प्रतिग्रहीत्रा दत्तकी भविष्यतः पुत्रस्य धनग्रहणसंबन्धो नोत्पत्स्यमानाधिकारविषये यथेष्टं न्यूनाधिक्यं कर्तुं शक्यम् ( काशीबाई वि० तात्या ४० मुंबई ६६८ ) । कस्मिंश्चिदेकस्मिन् विवादे प्रिव्हीकौन्सिलाख्यसर्वश्रेष्ठ[illegible] अपि गृहीतं धृतम्—दत्तकी भविष्यन् पुत्रोऽज्ञानी चेज्जनककुलीयेन तत्पालकेन दत्तकस्य ग्राहकेण ग्राहिकया वा समं नियमबन्धं कृत्वा दत्तकस्य ग्राहिकाया ग्राहकपुरुषस्य भार्याया वा जीवनकालपर्यन्तं सर्वधनादेरुपभोगस्तया स्त्रिया ग्रहीतव्यः पश्चाच्च दत्तकेन तदुपभोक्तव्यम्, इत्येवं प्रतिग्रहीतृकुली-

यथन उत्पत्स्यमाना दत्तकस्याधिकारा मर्यादिताः कर्तुं शक्यन्ते । एतदपेक्षया, अज्ञानिनो दत्तकपुत्रस्य धनग्रहणविषयका अधिकारा जनककुलीयपालकस्य मर्यादिताः कर्तुमशक्याः ( कृष्णामूर्ति वि० कृष्णमूर्ति ५४ इं० अ० २४८ ) ।

| पृ० | प० | सा० प्रतीकम् । |
|---|---|---|
| १७१ | ३ | (३९) तस्मादत्र दत्तके न प्रतिग्रहीतृसापिण्ड्यं किंतु जनककुल एव साप्तपौरुषं सापिण्ड्यमिति सिद्धमिति । |
| १८७ | ११ | (४०) यदिदमुभयत्र त्रिपुरुषसापिण्ड्याभिधानं तद्व्यामुष्यायणाभिप्रायेण । तस्य त्रिकद्वयेन सह सपिण्डीकरणाभिधानात् । शुद्धदत्तकस्य तु प्रतिग्रहीतृकुले त्रिपुरुषं पिण्डान्वयरूपं सापिण्ड्यं जनककुलेऽवयवान्वयरूपमेवेत्यलं प्रपञ्चेनेति । |
| १९८ | ५ | (४१) दत्तकादीनां मातामहा अपि प्रतिग्रहीत्री या माता तत्पितर एव पितृन्यायस्य मातामहेष्वपि समानत्वादिति । |

न्यायालयाना सापिण्ड्यविचारप्रसङ्गोऽतीवाल्पवारं प्राप्नोति । दत्तकपुत्रोऽयं प्रतिग्रहीतृकुलगत एको घटकावयवः संपन्न इति हेतोस्तस्य प्रतिग्रहीतृगोत्रं प्राप्नोति । इदं पूर्वमुक्तम् । सापिण्ड्यं तु द्विप्रकारकं भवति । तत्रैकं शरीरसंबन्धाद्द्वितीयं पिण्डसंबन्धादुत्पद्यते । प्रथमप्रकारकं सापिण्ड्यं साप्तपौरुषं द्वितीयं तु त्रिपुरुषं भवति । दत्तकपुत्रशरीरारम्भस्य जनककुलाज्जातत्वेन जनककुले तस्य साप्तपौरुषं सापिण्ड्यं भवति । यद्यपि स पुत्रो दत्तकत्वं प्राप्तस्तथाऽपि तत्सापिण्ड्यस्य निवृत्तिर्भवितुं न शक्नोति । तेन जनककुलीयसपिण्डकन्यया सह तेन स्वविवाहः कर्तुमशक्यः । तथैव जनककुलेऽवस्थितौ सत्यां यः पुत्रस्तस्य विरुद्धसंबन्धादिकारणेन दत्तकत्वेनाग्राह्यः स पुत्रः प्रतिग्रहीतृकुलप्रविष्टस्यापि तस्य दत्तकत्वेनाग्राह्य एव भवति । ( मूदिया वि० अप्पनू १८५८ मद्रास सदर ११७ ) । दत्तकत्वेन पालककुले प्रवेशेन तस्य जनककुले कस्मा अपि पिण्डो न दातव्यो भवतीति हेतोः पिण्डान्वयरूपं त्रिपुरुषसापिण्ड्यं निवृत्तं भवति । परमिदं त्रिपुरुषसापिण्ड्यं तस्य प्रतिग्रहीतृकुले प्राप्नोति । तेन हेतुना त्रिपुरुषादनन्तरपुरुषादुत्पन्नां भिन्नगोत्रीयां कन्यां परिणेतुं दत्तकपुत्रः शक्नुयात् । प्रतिग्रहीत्र्या मातुः पितामहप्रपितामहा एव दत्तकेन मातामहमातुःपितामहमातुःप्रपितामहत्वेन ग्राह्याः । एतत्संबन्धेन्

५

विवेचनं पूर्वं कृतमेव । ( सापिण्ड्यसंबन्धेनाधिकविस्तृतविवेचनं मञ्जरीव्याख्यायां द्रष्टव्यम् ) ।

| पृ० | पं० | सा० प्रतीकम् । |
|---|---|---|
| २०६ | ५ | (४२) औरसपुत्रस्येवौरसपुत्र्या अप्यपचारे क्षेत्रजाद्याः पुत्र्यः प्रतिनिधयो भवन्ति । मुख्यापचारे प्रतिनिधिरिति न्यायादिति । |

औरसकन्याया अभावे क्षेत्रजाद्या गौणदुहितरस्तत्प्रतिनिधित्वेन ग्राह्या इतीदं नन्दपण्डितैरुक्तम् । एतदुपोद्बलकत्वेन दत्तकक्रीतकृत्रिमादिदुहितॄणां पुराणस्थान्युदाहरणानि प्रदर्शितानि । परंतु भूमिकायां प्रदर्शितरीत्या पुत्रस्यैव प्रतिनिधिः संभवति न दुहितुः । यतो दुहित्रुत्पत्तिविषये नित्यविधिः क्वाप्युक्तो न दृश्यते । तथैव ' दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ' इति वचने विश्वस्य यदि दत्तकादृते पुत्रप्रतिनिधिर्भवितुं नार्हति तर्हि सर्वप्रकारिका दुहितरः प्रतिनिधित्वेन स्वीकार्या भवन्तीति वचनं न सामीचीन्यमावहति । किंच दत्तकपरिग्रहविधिवद्दत्तकदुहितृपरिग्रहविधिः क्वापि न प्रतिपादितः । प्रत्युत भूमिकायां प्रदर्शितरीत्या भिन्नभिन्नानि दुहितृप्रतिनिध्युदाहरणानि पुनरिदमेव दर्शयन्ति–असंरक्षितानामनाथानां कान्यानां पुत्राणां वा रक्षणसंवर्धने भवेतां तथा दुर्दैवानीमान्यपत्यानि स्वयौवनदशायां समाजकार्याणि सामीचीन्येन संपादयितुं प्रभवेयुरित्यतस्तेषां पालनादिव्यवस्थावश्यकता भिन्नभिन्नमार्गैः समाजगतेषु कन्यापुत्रापेक्षिषु समर्थपुरुषेषु शास्त्रेण निक्षिप्ता । औरसपुत्राभावे योऽयमाहत्य पुत्रप्रतिनिधिः कर्तव्यो भवति स केवलं क्षेत्रज, पुत्रिका, पुत्रिकापुत्र, दत्तकेष्वेव करणीयः । एतस्मिन् कलियुगे तु स केवलं दत्तकविधानेनैवानुष्ठेयः । एतद्विषये क्रीतापविद्धस्वयंदत्तकानीनपौनर्भवगूढजसहोढप्रभृतिपुत्राणां कियानप्युपयोगो नास्ति । दुहितॄणां पुनर्नास्त्येव नास्ति ।

———